दधिकं किञ्चिद्वक्तव्यं तद्विशिष्टमुपन्यस्यताम् । स च यदि प्रतियोगी तदीयोऽभिधीयते तर्हि तस्याभावात्तदानीं विशिष्टाभावः प्रसक्तः । विशेष्यमात्रं परिशिष्टं तच्च केवलमतिप्रसक्तं तस्माद्विशिष्टव्यवहारप्रवर्त्तनकाले विशेष्यातिरिक्तं किञ्चिदनभ्युपेत्य विशिष्टसत्ता व्यवहर्त्तुमशक्या, अतः प्रतियोगी नाभावस्य विशेषणं भवितुमर्हति उपलक्षणन्तु स्यात् तत्र चोक्तमेव । नचान्योन्याभाव एकोन भवति भिन्नप्रतियोगिकौ द्वावभावौ तौ तथा च प्रतियोगिलक्षितं तत्स्वरूपमन्यदेवेति सिद्धान्ताविरोधि । न च युक्तम्, उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगि एकात्मतायाश्च भेदविरोध एव । ततश्च येन च रूपेण प्रतियोगित्वं तेन रूपेण भेदानवकशात् भिन्नप्रतियोगिकता कुतोऽन्योन्याभावस्य। येन च रूपेण भिन्नता तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनोः ।

* अन्यदिति * गुणकर्म्मादि भावरूपविशेषणमन्यदुच्यते विशेषणत्वात्प्रतियोगिनो ऽपि सत एवाभावविशेषणत्वमित्यत आह * प्रतीति * असत्वे विशेषणत्वमेव तस्य कथमित्यत आह * तदिति * व्यावृत्तिजनकत्वं प्रकृते विशेषणत्वं प्रतियोगिनश्च ज्ञानावच्छेदद्वाराऽभावव्यावृत्तिप्रमितिजनकत्व-

मस्त्येव प्रतियोगिज्ञानेनाभावव्यावर्त्तनादित्यर्थः । यद्यप्ययं ग्रन्थो युक्तः प्रथमकल्पदूषणावसाने तथाऽपि सम्प्रदायतो ग्रन्थार्थोऽवगन्तव्य इत्यत्र विरचित इति द्रष्टव्यम् । भवेदप्येवं यद्यन्योन्याभावभेदः स्यात्तदभेदे तु सैव व्यक्तिरेकैव कथितेतिस एव प्रसङ्ग इत्यभिसन्धाय दूषयति*अयुक्तमिति* तदुपपादनाय स्वरूपमिहोपात्तमभावस्य दर्शयति * विशिष्टमिति * ततः किमित्यत आह * तच्चेति * विशेष्याव्यतिरेकेण विशिष्टस्वरूपानिरूपणात्तन्मात्रमेवत दित्याशङ्क्याह * तथा सतीति * प्रत्यक्षाभासाद्यन्योन्याभाव इत्य त्राभावपदार्थातिरिक्ताभावाद्विशेषणं प्रत्यक्षाभासादिपदं व्यर्थमित्यर्थः । वैयर्थ्याद्विशेषणोपन्यास एव न क्रियते तर्हीत्यत आह * तदिति * अन्योन्याभावमात्रोपन्यासे वा को दोष इत्यत आह * तच्चेति * तन्मात्रं प्रत्यक्षाभासादावस्तीति तद्विशिष्टं लक्षणं तत्रातिव्यापकं स्यादित्यर्थः । विशिष्टाभावस्वरूपं विशेष्यशरीरमात्रं न भवितुमर्हतीति यत्प्रतिज्ञातं तात्सिद्धमुपसंहरति *ततश्चेति* ततो वा किमित्यत आह * स चेति * अभावकाले प्रतियोगिनोऽभावात्तद्विशिष्टोऽभावो लयमित्यादिति लक्षणाऽसम्भव इत्यर्थः । किन्तर्हि तत्र परिशिष्यत इत्यत आह *विशेष्येति* तर्हि तदेव लक्षणमास्तां सिद्धस्यैव लक्षणत्वादित्यत आह *तच्चेति* विचारफलमुपसंहरति *तस्मादिति* अतो द्वितीयः पक्षः परिशिष्यत इत्याह *अत इति * सोऽपि न घटत इत्याह * तत्रे-

ति* अन्योन्याभावस्यैकत्वे स्यादिदं त्वदुक्तं तन्न किन्तु प्रत्यक्षाभासादिप्रतियोगिकोऽन्योन्यश्च कालात्ययापदिष्टप्रतियोगिक इति कृत्वा प्रत्यक्षाभासादिलक्षितान्योन्याभावस्य प्रतियोगिरूपमाह *उभयमिति* प्रतियोगिरूपाविशेषोपन्यासेन किमत्र दूषणमुक्तमित्यत आह * एकेति * एकत्वस्याभेदैकार्थसमवायिनो भेदविरोध इत्यर्थः । ततो वा किमित्यत आह * ततश्चेति * तथापि प्रत्यक्षाभासकालात्ययापदिष्टौ द्वावेव, तत् कुतो भिन्नप्रतियोगित्वाभाव इत्यत आह * येनेति *

असत्प्रतियोगित्वप्रसङ्गभयात्तादात्म्यप्रतियोगित्वमेवान्योन्याभावस्य नोपपद्यते घटपटयोस्तादात्म्यस्यासिद्धेरिति चोदयति ।

१६५ धर्मिप्रतियोगिनोः प्रकृते वैलक्षण्यानिरूपणम् ।

ननु वस्तुतस्तयोरेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटेत वस्तुनोः[1] । यथा वस्तुतो भूतलसंसर्गाभावेऽपि घटस्य भूतलसंसृष्टतया[2] संसर्गाभावं प्रति, तत्र यथाऽन्यद् भूतलसंसृष्टतया दृष्टं तथाऽत्रापि तावेव सप्रकारभेदौ तदात्मानौ दृष्टौ, सोऽयं त्वद्दर्शनाभिप्रायो नास्माकं निर्वाहार्ह इत्यास्तां विस्तरः ।

* नन्विति * नेह भूतले घट इत्यादिनिषेधस्य

---

१ वस्तुनो इति का० मु० पु० पा० ।

२ संसृष्टतया इति सां० पुस्तके नास्ति ।

या गतिः सा तत्रापि भवतीति परिहरति *यथेति* प्रतियोगित्वमिति प्रश्नवाक्यादनुषज्यते। तत्र किं तद्देशकालासंसृष्टो घटः प्रतियोगी किं वैतद्देशकालीन इहारोप्यमाणः प्रतियोगी, न तावदाद्यस्तत्र स घटो नासीदिति प्रतिषेधापत्तेर्नापि द्वितीयो ऽत्यन्ताऽसत्प्रतियोगिकतापत्तेः सत्वे वा निषेधस्यैवायोगाद्यदि तृतीयस्तत्राह * तत्रेति * इहारोप्यमाणः प्रतियोगीति शेषः। तर्ह्यत्रापि घटतादात्म्यं घटे दृष्टं पट आरोप्य निषिध्यते तादात्म्यं च पटे दृष्टं घटे निषिध्यत इति समः समाधिरित्याह * तथेति * अन्योन्यस्मिन्निषिध्यत इति शेषः। घटतादात्म्यशब्देन घटस्यैवाभिधानात्पटतादात्म्यशब्देनापि तस्यैवाभिधानात्तयोश्च भिन्नत्वात्कथमेकप्रतियोगिकत्वमित्यत आह * सोऽयमिति * अन्योन्याभावस्य तादात्म्यप्रतियोगित्वं त्वयोरीकृतं तत्त्यज्यते चेदपसिद्धान्तो नोचेदसत्प्रतियोगित्वमिति निर्वहणीयो नास्माभिरित्यर्थः।

धर्मिप्रतियोगिभावावच्छिन्नतयैवान्योन्याभावोपलम्भात्तदुपलम्भात्प्रागेव प्रतियोग्यधिकरणयोरसाङ्कर्यं वैलक्षण्यं वक्तव्यं तत् घटादौ सम्भवेदपीत्याह।

६६४ तादात्म्यप्रतियोगिकत्वं भेदस्य नेति शङ्काया निरासः।

अपिच घटपटयोः स्वरूपभेदेन वैधर्म्यभेदेन चोभयकोटीकृतयोरन्योन्याभावनिरूपणं भवति । अत्र तु प्रत्यक्षाऽभासादेः प्रत्यक्षाभासत्वादिना एककोटिताऽस्तु नाम, यत्तु प्रत्यक्षाभासत्वादिभ्यो व्यतिरिक्तत-

या प्रतिपत्तव्यं तस्य केन रूपेणैककोटीकरणं, न-तावत्प्रातिव्यक्ति भिन्नेन स्वरूपेण, तेषामनन्ततया बुद्धिस्थीकर्त्तुमशक्यत्वात् । नापि यद्रूपोपात्तं विशेष्यं प्रत्यक्षाभासादिव्यतिरिक्तत्वेन विशेषणेन विशेषणीयं तद्रूपक्रोडीकृततयैवान्योन्याभावनिरूपणमिति युक्तं, तस्य स्वरूपस्य प्रत्यक्षाभासादिसङ्ग्राहकतया कोटिद्वैतभङ्गापादकत्वेनान्योन्याभावनिरूपणविरोधित्वात् । तस्मात् स्वरूपभेदं वैधर्म्यभेदं वा कोटिद्वयं व्यवस्थापकमप्रतिसन्धाय अन्योन्याभावनिरूपणमशक्यमिति स्थिते स्वरूपभेदपक्षस्येह दूषितत्वाद्धर्म्मभेदः कश्चिद्वक्तव्यो न चासौ वक्तुं शक्यः शक्यत्वे वा तमादायैव लक्षणव्यवस्थिनिरस्तु कृतमन्योन्यव्यतिरिक्तत्वकुयुक्त्या । तदनेन न्यायेनाऽन्यत्राप्यतिप्रसक्त्युदाहरणान्यत्वेन व्यावर्त्तनं लक्षणवादिनो भग्नस्य शरणमस्त्रं निरसनीयम् । अत एव भेदकान्तरं विना तद्व्यतिरिक्तत्वमेव दुर्निरूपमित्यभिप्रायेण तत्तदन्यत्वे सतीति विशेष्यमाणं वैशेषिकहेतुं 'नैतदेवं येन येन व्यभिचारस्तदन्यत्वे सति प्रमेयत्वादिति सत्प्रतिपक्षहेतूपन्यासादुपहसन्ति सन्त इति ।

इति कवितार्किकचक्रवर्ति श्रीश्रीहर्षकृते खण्डनखण्डखाद्ये

प्रमाणतदाभासखण्डनं नाम प्रथमः परिच्छेदः ।

* अपि चेति * अन्योन्याभावभेदेनोभयकोटी-कृतान्योन्याभावनिरूपण आत्माश्रयादिप्रसङ्गात्स्व-रूपभेदेत्याद्युदितम्। स्वरूपभेदादिनोभयकोटीकृतयो-रन्योन्याभावनिरूपणनियमश्चेदत्रापि तथैवाऽस्त्वित्यत आह * अत्र त्विति * प्रत्यक्षाभासान्विताद्यनुगत-मेकं नास्ति तथाऽप्यङ्गीकारः।तर्हि प्रत्यक्षाभासादित्वेन तदेककोटिं कृत्वा रूपान्तरेण कालात्ययापदिष्टं परां कोटिं कृत्वा तयोरितरेतराभावनिरूपणं सुकरमित्यत आह * यद्यपीति * अनुगतमेकं रूपं सङ्ग्राहकं नोपल-भ्यत इत्यर्थः। मासीदनुगतं रूपं प्रतिव्यक्ति व्यावृत्त-रूपेणैव तदुपपत्तस्येतेति तत्राह * नेति * एककोटी-करणमिति शेषः। कुत इत्यत आह *तेषामिति* प्र-माणबोधितसाध्यव्यतिरेकित्वं यन्नाम विशेष्यं प्रत्य-क्षाभासादिव्यतिरिक्तत्वविशेषणेन विशेषणीयं त-द्रूपकोडीकृततया तन्निरूपणमस्तीत्यत आह * ना-पीति * तत्रैव तिष्ठदेव सङ्ग्राहकं वक्तव्यमिदं तु नैव-मित्याह * तस्येति * प्रमाणेन बोधितसाध्यव्यतिरे-कत्वस्य विशेष्यरूपस्य प्रत्यक्षाभासादिसाधारणतया कोटिद्वैविध्यभङ्गप्रसञ्जकतयेतरेतराभावनिरूपणविरो-धितया स्वरूपभेदादिनोभयकोटीकृतयोरेवेतरेतरा-भावनिरूपणमिति यदीरितं प्राक्तत् सिद्धमित्युपसंह-रति * तस्मादिति * स्वरूपभेदस्याननुगमेन निर-स्तत्वाद्धर्मभेदपक्षपरिशेष इत्याशयः। अस्तु तर्हि स एव व्यवस्थापक इत्यत आह *न चेति* प्रमाणाविरुद्ध-

प्रतिज्ञातार्थत्वात् शिरस्कतया प्रयुज्यमानत्वादिरूपो धर्मभेदो वक्तुं शक्यत एवेत्यत आह *शक्यत्वे चेति* लाघवादावश्यकत्वाच्चेत्याशयः । उक्तखण्डनमन्यत्राऽतिदिशति * तदिति * सामान्यवान् गुण इति गुणलक्षणकरणे द्रव्ये कर्मणि चातिप्रसक्त्या निरासे भग्नस्य लक्षणवादिनो यत् संयोगविभागहेतुजातीयेतरत्वविशेषणेन व्यावर्त्तनं शरणमस्त्रं तदप्येतेनैव व्यतिरिक्तत्वखण्डनन्यायेनैव निरसनीयमित्यभिसन्धिः । उक्तार्थं द्रढयितुं दर्शयन्नुपसंहरति * अत इति * अत एव वैशेषिकहेतुं तदन्यत्वे सतीति विशेष्यमाणमुपहसन्ति सन्त इत्यन्वयः । केनाभिप्रायेणेत्यत आह * भेदकेति * तथाऽपि काऽत्र युक्तिरित्यत आह * नैतदिति * प्रामाण्यं ज्ञानहेत्वतिरिक्तजन्याश्रयं ज्ञानत्वान्यत्वे सति ज्ञानधर्मत्वादप्रामाण्यवदित्युक्ते नैतदेवं प्रामाण्यमुक्तविधसाध्यं न भवति येन व्यभिचारस्तदन्यत्वे सति प्रमेयत्वादज्ञानत्ववदिति सत्प्रतिपक्षहेतूपन्यासादित्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याभयानन्दशिष्यानन्दपूर्णविरचिते खण्डनफक्किकाविभजने प्रमाणतदाभासखण्डनं नाम प्रथमः परिच्छेदः ।

---

१ अयं पाठोऽसंलग्न एव दृश्यते ।

## अथ द्वितीयः परिच्छेदः ।

प्रमाणतदाभासत्वेनाद्वैतविरोधाभावेऽपि निग्रहस्थानसत्वेनाद्वैतभङ्गः स्यादेवेति चोदयति ।

१ निग्रहस्थानेषु प्रतिज्ञाहानिखण्डनारम्भः ।

ननु यदि दुर्लक्ष्या हेत्वाभासास्तर्हि निग्रहस्थानानि प्रतिज्ञाहान्यादीनि बाधकानि भविष्यन्ति । मैवम् । का ? पुनः प्रतिज्ञाहानिः । स्वीकृतार्थपरित्यागः प्रतिज्ञाहानिरित्यलक्षणम् । तथाहि—झटिति संवरणे निग्रहस्थानेऽपि गतत्त्वेन परदूषिते सतीत्यपि विशेषणीयत्वात् ।

* नन्विति * हेत्वाभासरूपनिग्रहस्थानखण्डनानन्तरं प्रतिज्ञाहान्यादिनिग्रहखण्डनं प्रसक्तमिति सम्बन्धो दर्शितः । बाधकानि—परमार्थतोऽशक्तिसूचकानि भविष्यन्तीत्यर्थः । कथकाशक्तिसूचकं निग्रहस्थानमिति सामान्यलक्षणस्य दुःस्वप्नादावतिव्याप्तेः, पराजयनिमित्तं निग्रहस्थानमित्यस्य च पराजयस्य पापफलतया दुरितेऽतिव्याप्तेः सामान्यानालिङ्गितविशेषाणामसिद्धेर्विशेषतोऽपि खण्डनमुपक्रमते * मैवमिति * प्रतिज्ञातं प्रतिज्ञाहान्यनिरूपणमेव निरूपयति *केति* तथा प्रदर्श्यत इतिशेषः । तदर्थं लक्षणमुपन्यस्यति *स्वीकृतेति* प्रतिज्ञाहानिरितिलक्ष्यमितरल्लक्षणम् । त्यागः प्रतिज्ञाहानिरि-

त्युक्ते हिरण्यादित्यागेऽतिव्याप्तिस्तन्निरासायोक्तेति- विशेषणम्। उक्तत्याग इत्युक्ते प्रतिवाद्युक्तस्यानूद्य त्य- क्तस्य त्यागेऽतिप्रसक्तिनिवारणाय स्वीकृतेत्युक्तम्। स्वीकृतपरित्याग इत्युक्तेऽपसिद्धान्ते प्रसङ्गो माभूदि- त्युक्तमुक्तेति। कुत इत्यत आह*तथाहीति*नैयायिक- स्य घटो नित्य इति प्रमादाभिःसृतेऽनुक्त एव सिद्धसाध- ने शब्दोऽनित्य इत्युक्त्वा त्यजतस्त्यागेऽतिप्रसक्तिर्घटा- नित्यत्वस्य तेन स्वीकृतत्वादतो झटिति स्वाज्ञानसम्ब- रणे–संव्रियतेऽनेनेति संवरणं तस्मिन् निग्रहस्थाने ग- तत्वेन परदूषितस्येति विशेषणीयं विशेषणे च हेत्व- न्तरन्नाम निग्रह इत्यर्थः।

स्वीकारपदार्थस्य सम्मुग्धत्वात्तमग्रे विकल्पयति।

२ स्वीकारपदार्थस्य विकल्प्यनिरासः।

किञ्च स्वीकृतेत्यनेनाभीष्टमात्रं वाऽभिधीयते अ- स्तित्वेनेष्टं वा। आद्ये केन चिद्रूपेणेष्टस्य रूपान्तरे- ण त्यागः क्व नाम नास्तीत्यतिव्याप्तिः। स्वीकार- पूर्वकोऽस्वीकारस्त्यागः न रूपान्तरेण तत्र तत्स्वीकारः ततस्त्याग एवासौ न भवतीति नातिप्रसङ्ग इति चेन्न। स्वीकारस्यापि परित्यागपदार्थान्तर्भावे स्वीकृ- तेति व्यर्थं, तत्त्यागेऽपि च नाद्यद्वितीयौ अस्तित्वे- नेष्टस्य रूपान्तरेण सर्व्वत्रैवानिष्टत्वसम्भवात्। संयो- गाद्यव्याप्यवृत्तितावादिपक्षे चैकस्यैव संयोगस्यास्ति-

त्त्वनास्तित्त्वाभ्यामभ्युपगम्यमानत्त्वात्। एवञ्च काल-देशादिभेदेन सत्त्वासत्त्वाभ्युपगमेऽपि प्रसङ्गो द्रष्टव्यः।

* किञ्चेति * इच्छामात्रविषयत्त्वं सद्रूपतया वे-च्छाविषयत्त्वमिति विकल्पार्थः। इच्छामात्रविषयत्वं स्वीकार इति प्रथमं दूषयति *आद्य इति* शब्दोऽनित्य इत्युक्ते भ्रमान्नित्यत्वमुक्तमिति सिद्धसाधनत्वे उद्भा-विते निरनुयोज्यानुयोगोद्भावनया शब्दोऽनित्य इति वदतो नैयायिकस्य प्रतिज्ञाहानिः स्यान्नित्यत्वस्याऽऽत्मा-दिनिष्ठतयेष्टस्य परित्यागात्प्रतिवादिनोक्तत्वाच्च त-स्येत्यतिव्याप्तिरित्यर्थः। उक्तातिव्याप्तिं परिहर्तुं त्या-गपदार्थं दर्शयति पूर्ववादी * स्वीकारेति * नित्यत्वस्य वियदादिनिष्ठतया स्वीकृतस्य शब्दनिष्ठतया प-रित्यागो विद्यत एवेति कथं तत्परिहार इत्यत आह * नचेति * येन रूपेण शब्दनिष्ठत्वेन त्यागस्ते-न रूपेण स्वीकार एव नास्ति स एवाऽत्र विवक्षि-त इत्यर्थः। ततोऽस्य त्यागत्त्वाभावादुक्तातिव्याप्तिप-रिहारः सिद्ध इत्याह * तत इति * श्लेष्मचिकि-त्सायां पित्तोद्रेकवदतिव्याप्तिपरिहारे व्यर्थविशेषण-त्वं लक्षणस्येति परिहरति *नेति* स्वीकारपूर्वकास्वी-कारस्य त्यागपदेनाभिधानादुक्तत्याग इत्येतावन्मात्रं लक्षणमास्तां स्वीकृतेतिविशेषणं व्यर्थमित्यर्थः। त्य-जतां तर्हि स्वीकृतेति पदमित्यत आह * तदिति * इष्टमात्रं वाऽस्तित्त्वेनेष्टत्वं वेति प्रागुक्तं पक्षद्वयम-पि न सम्भवतीत्यर्थः। कुत इत्यत आह * अस्तित्वेने-

ति * प्रथमकल्पे प्रागुक्तैवातिव्याप्तिः द्वितीये च शब्द-निष्ठतयाऽनित्यत्वस्येष्टस्य व्याप्तिरूपेण परित्यागस-म्भवात्तत्रातिव्याप्तिरित्यर्थः । येनैव रूपेणेष्टत्वं तेनै-व तस्य त्यागो विवक्षित इत्यत आह * संयोगादी-ति * घटाकाशसंयोग आकाशे वर्तते न वर्त्तते चा-व्याप्यवृत्तित्वोपगमान्नैयायिकैस्तत्राकाशघटौ संयो-गिनाविति वदतो नैयायिकस्य प्रतिज्ञाहानिः स्यात्सं-योगाभावाधिकरणताया अपि स्वीकारादादिपदेन च-णिकविशेषगुणेष्वव्याप्यवृत्तिषु दर्शितातिव्याप्तिर्द्रष्ट-व्या । उक्तातिव्याप्तिमन्यत्राऽतिदिशति * एवमिति * एकस्मिन् देश एकस्मिन् काले च स्वीकृतस्य शब्दा-देर्धर्मिण उक्तस्य देशान्तरे कालान्तरेवाऽनिष्टत्वा-च्छब्दो नित्य इतिवदतः प्रतिज्ञाहानिः स्यादित्यर्थः ।

उक्तातिव्याप्तिपरिजिहीर्षया लक्षणं विशिष्य शङ्कते ।

१ देशकालपुरुषाद्यभेदेन स्वीकारपरित्यागयो दोषः ।

तस्यैव तदैव तत्रैव तेनैव तथैवेष्टत्वानिष्टत्वे विव-क्षिते अत्रेति चेत् । एवं तर्हि कालमभ्युपगम्यानभ्युपग-च्छतः प्रतिज्ञाहानिर्न स्यात् । तत्र तदेत्युक्तविशेषणांशस्या-सम्भवात् । न हि कालः कालान्तरं स्वात्मानमेव वाऽ-ध्यास्ते, काले तदेति विशेषणस्य प्रतिक्षेपेऽन्यत्र च प्रक्षेपे लक्षणैकताक्षतिः । कालं प्रति च प्रतिज्ञाहानेरदोषत्वे तद्वदन्यत्राप्यदोषत्वापातः । यदैव स्वीकार स्तदैवास्वी-

कारासिद्धेश्च । तदेति तत्कथाकालो विवक्षित इति-चेन्न । तच्छब्दस्यैकव्यक्तिपरत्वे लक्षणाननुगमः वादादि-त्वेन साम्ये कदाचिदपि तद्विपरीतवादान्तराकरणप्रसङ्गः। एवं तथैव तस्यैवेत्यादिपदस्य द्रष्टव्यम् । उक्तेतिपद स्य चापसिद्धान्तव्यवच्छेदकस्य विरुद्धन्यायेनासमर्थविशे-षणत्वम् । एवं सर्व्वनिग्रहस्थानेषु द्रष्टव्यमिति सङ्क्षेपः ।

* तस्येति * तस्य च पुनस्तस्मिन्नेव देशे तेनैव वादिना तेनैव रूपेणेष्टत्वानिष्टत्वं प्रतिज्ञाहानिलक्ष-णविशेषणत्वेनेष्टं संयोगादाववच्छेदमादाय देशभेदो-ऽस्त्येवेति तार्किकरीतिरतो न पूर्वोक्ताव्याप्तिरि-त्यर्थः । घटमभ्युपगम्य पटं परित्यजतस्तथात्वनि-वारणाय तस्यैवेत्युक्तम् । तस्यैव कालान्तरे त्यागे प्रस-क्तिवारणाय तदैवेति । देशान्तरत्यागे वारणाय तत्रै-वेति । कर्तृभेदेन त्यागे प्रसक्तिवारणाय तेनैवेति । रूपा-न्तरेण त्यागे वारणाय तथैवेति विशेषणं क्रमेण द्रष्ट-व्यम् । अव्याप्त्या दूषयति * एवमिति * कालस्स-न् ज्ञेयत्वाद्घटवदित्युक्ते प्रागभावादौ व्यभिचा रेण लोकायतेन प्रत्युक्ते तं त्यजतो नैयायिकस्य प्र-तिज्ञाहानिर्न स्यादित्यर्थः । कुत इत्यत आह * तत्रे-ति * कालोऽपि कालवृत्तिर्वस्तुत्वाद्घटवदित्याशङ्क्या-ह * न हीति * कालस्य कालवृत्तित्वे स्वात्मनि वृत्ति-र्नोपपद्यते स्वाश्रयत्वप्रसङ्गान्नापि कालान्तरवृत्तित्व-मेकत्वादौपाधिकभेदे चानवस्थानादित्यर्थः । काल-

विषयप्रतिज्ञाहानिलक्षणे तदेति विशेषणं परित्यज्यते ततोऽन्यविषये तदुपादीयत इत्यत आह। * काल इति * कालविषयतल्लक्षणे त्यागपदनिरुक्तौ यदि तदेति विशेषणं न गृह्यते ततोऽन्यत्र च त्यागपदार्थतया तदुपादीयते तदा सामान्यलक्षणासिद्धिरननुगमात्तत्सिद्धिपूर्वकत्वाच्च विशेषलक्षणं न सिद्ध्यतीत्यर्थः। कालमभ्युपगम्यानभ्युपगच्छतः प्रतिज्ञाहानिरशक्तिसूचिका नेत्यनिग्रहस्थानत्वान्नाव्याप्तिरित्यत आह * कालमिति * तुल्यलक्षणत्वादित्यर्थः। न केवलमव्याप्तिरसम्भवोऽपीत्याह * यदेति * स्वीकारास्वीकारयोर्विरोधाद्युगपद्भावाभाव इत्यर्थः। तच्छब्देन परामृष्टं कालस्वरूपं दर्शयत्यसिद्धिपरिहाराय पूर्ववादी * तदेति * तस्यां कथायामभ्युपगम्य तस्यामेव परित्यागो विवक्षितोऽतो नासम्भव इत्यर्थः। तच्छब्देन कथाव्यक्तिर्विवक्ष्यते किम्वा वादादित्वसामान्यमिति विकल्प्य प्रथमं दूषयति * नेति * वादत्वं जल्पत्वं वितण्डात्वं चेति तिस्रो जातयस्तदधिकरणमात्रं विवक्षितमतो नाननुगम इति द्वितीयमाशङ्क्याह * वादेति * कदाचित्प्राभाकरमतमवलम्ब्य नियोगः पदार्थ इति वादं कृत्वा पुनः कालान्तरेण भाट्टमतावलम्बनेन तस्य पदार्थत्वनिराकरणे प्रतिज्ञाहानिः स्यादित्यर्थः। एवं जल्पवितण्डयोरपि द्रष्टव्यम्। उक्तन्यायं विशेषणान्तरेऽप्यतिदिशति * एवमिति * तच्छब्देन शब्दादिव्यक्तिविशेष उच्यते किं वा वस्तुमात्रं, आद्ये-

ऽननुगमो द्वितीये घटमभ्युपगम्य पटमनभ्युपगच्छतः प्रतिज्ञाहानिः स्यादेवं तत्रैवेतिदेशवाचकतच्छब्दस्य देशविशेषपरत्वे तत्सङ्कटितस्याननुगमो देशमात्रवाचकत्वे शब्दे नित्यत्वमभ्युपगम्याकाशे तदनभ्युपगच्छतः प्रतिज्ञाहानिः स्यादेवं तेनैवेति वादिविशेषपरत्वे तद्विशिष्टलक्षणाननुगमो वादिमात्रपरत्वे वाद्यन्तरोक्तस्वीकृतस्य वाद्यन्तरपरित्यागः प्रतिज्ञाहानिः स्यादेवं तथेतिप्रकारवाचिन्यपि द्रष्टव्यमित्यर्थः। दोषान्तरमाह * उक्तेति * स्वीकृतपरित्यागःप्रतिज्ञाहानिरित्युक्तेऽपसिद्धान्ते प्रसङ्गो माभूदिति तदवयवच्छेदकमुक्तपदमुपात्तन्तच्च व्यर्थं विशेष्यस्वीकृतपरित्यागस्यैव दूषणसमर्थत्वाद्यथा विरुद्धविपक्षसम्बन्धमात्रस्य दोषत्वसामर्थ्ये विपक्ष एवेति विशेषणं व्यर्थं तद्वदित्यर्थः। विशेष्यमात्रस्यैव दूषणसमर्थत्वे यद्विशेषणमुपादीयते प्रतिज्ञान्तरादिनिग्रहे तत्राप्येतद्दूष्यमित्याह * एवमिति *

इति प्रतिज्ञाहानिखण्डनम्।

---

प्रतिज्ञान्तरखण्डनाय प्रस्तावनिकां करोति।

४ प्रतिज्ञान्तरखण्डनम्।

प्रतिज्ञाहान्यादीत्यादिपदेन च किं सङ्गृह्यते। प्रतिज्ञान्तरादीति चेन्न। प्रतिज्ञान्तरमेव न निरूपयितुं शक्यते। तद्यथा—स्वोक्तस्य परदूषितस्य साध्यभागस्य

पूर्व्वानुक्तविशेषणवतोऽभिधानं प्रतिज्ञान्तरमित्यलक्षणम् । तथा हि यत्र वादिना प्रथमं सविशेषणः प्रतिज्ञाभागोऽभिहितः परेण च निर्व्विशेषणोक्तभ्रमात् दूषितः ततो वादी प्रथमाभिहितं सविशेषणमेवोपन्यस्येदृशं मयोक्तं न तु निर्व्विशेषणमतो निरनुयोज्यानुयोगो भवत इति सदुत्तरमेव ब्रूते तत्रापि गतत्वादतिव्यापकमेतत् ।

*प्रतीति* आदिपदार्थस्तावदास्तां प्रतिज्ञान्तरमेव तावन्निर्वचनायोग्यमित्याह *नेति* निर्वचनाशक्यत्वमेव कथमित्यतस्तल्लक्षणद्वारा दर्शयति * तादिति * अभिधानमित्युक्ते यत्किञ्चिदभिधाने प्रसक्तिस्तदर्थं साध्यभागस्येति । तथाऽपि पूर्वोक्तविशेषणपरित्यागेन निर्विशेषणसाध्यभागाभिधाने प्रतिज्ञाहानिभेदेऽतिव्याप्तिरत उक्तं विशेषणवत इति । तथाऽपि पूर्वोक्तविशेषणवत एवाभिधाने प्रसक्तिवारणाय * अनुक्तेति * झटिति सम्वरणेऽतिप्रसक्तिवारणाय परदूषितेत्युक्तम् । तथाऽप्यनुक्तस्य परोक्तस्यप्रसक्तिं वारयितुं स्वेत्यादि । कुतोऽलच्चणमेतदित्यत आह * तथाहीति * वर्णात्मकः शब्दोऽनित्य इति नैयायिकेनोक्ते निर्विशेषणत्वेनोक्तत्वभ्रान्त्या बादरायणीयेन ध्वनिभागे सिद्धसाधनतया प्रत्युक्ते स यदा पूर्वोक्तविशेषणमेव साध्यमुपन्यस्य परस्य निरनुयोज्यानुयोगनिग्रहमुद्भावयति तत्र सदुत्तरेऽपि गतत्वेनातिव्यापकमित्यर्थः ।

पूर्वानुक्तत्वविशिष्टं लक्षणं पूर्वोक्तस्यैव विशेषण-

स्याभिधाने कथमतिव्यापकं स्यादिति शङ्कते ।

५ अतिव्याप्तिपरिहारशङ्कानिरासः ।

पूर्व्वानुक्तविशेषणवत्त्वं तत्र नास्ति तत्कथमतिव्याप्तिरिति चेन्न । प्रथमोक्तेः प्रागभावस्य पूर्व्वं स्थितत्वात् । विशेष्योक्तिरपि तदा नासीदिति चेत् । किमायातं तावता विशेषणानुक्त्यतिप्रसङ्गस्य ।

* पूर्वेति* विशेषणं सम्भावयन्परिहरति *नेति* अनुक्तिरनुक्तेः प्रागभावः स च प्रथमविशेषणोक्तेरपि विद्यत एव नहि प्रागभावाप्रतियोगिन्या एव प्रथममप्युत्पादस्तस्य च प्रागभावस्यानादित्वात्पूर्वमपि सम्भव इति प्रथमविशेषणोक्तेरपि पूर्वानुक्तत्वमस्तीत्युक्तातिप्रसङ्गे प्रागभावसमये विशेष्योक्तिर्नैव विद्यत इति गूढाभिसन्धिः शङ्कते * विशेष्येति * विशेष्योक्तेरपि प्रागभावस्तदाऽऽसीदित्यर्थः । गूढाभिसन्धिरेव परिहरति * किमिति * प्रथमत उक्ते विशेषणे पूर्वानुक्तत्वमस्तीत्युक्तातिप्रसङ्गे कः परिहारस्तावता विशेष्यस्य पूर्वानुक्तत्वमित्येतावन्मात्रं स्या त्तच्चानुपयुक्तमित्यर्थः ।

स्वाभिप्रायं प्रकटयन्पुनः शङ्कते ।

६ विशेष्योक्तिसमये विशेषणानुक्तिविवक्षानिरासः ।

विशेष्योक्तिकाले विशेषणानुक्तिर्विवक्षितेति चेन्न । एककर्तृकाया वाचो युगपदसम्भवेन सर्वत्र तथाभावस्यैव भावात् । विशेष्योक्तेरनन्तरकाल इति चेन्न । नीलो-

त्पलमित्यादौ पूर्व्वनिपातिविशेषणे तदभावात् । विशेष्योक्तेरव्यवहितपूर्व्वकाल इति चेन्न । उत्पलं नीलमित्यादौ तदभावात् । अव्यवहित इति चेन्न । बहुविशेषणके विशेष्ये तदभावात् । विशेषणाभिधानोचितकाल इति चेन्न । नानाविशेषणके विशेष्ये क्रमवृत्तित्वाद्वाचः क्रमेणाभिधीयमाने य एकविशेषणाभिधानकालः सोऽपरेषामपि विशेषणाभिधानानां योग्यो भवत्येवेति तदाऽन्येषां क्रमभाविनामभावात्सैवातिव्याप्तिः ।

* विशेष्येति * विशेष्योक्तिकाल इति किमेकक्षणत्वं विवक्षितमुत विशेष्योक्त्युत्तरक्षणत्वमुत तदव्यवहितपूर्वक्षणत्वमुत तदव्यवहितक्षणत्वमात्रमाहोस्विद्विशेषणाभिधानोचितक्षणत्वमुताहो सर्व एव तद्योग्यः कालो विवक्षित, इति विकल्प्य प्रथमं दूषयति * नेति * उदाहृतस्थलेऽपि विशेष्योक्तिकाले विशेषणानुक्तिर्विद्यते क्रमभावित्वाद्वाचोऽत उक्तातिव्याप्तितादवस्थ्यमित्यर्थः । द्वितीयं शङ्कते * विशेष्येति * विशेष्योक्त्यनन्तरकालीनविशेषणानुक्तिर्लक्षणमतो न तत्रातिव्याप्तिरित्याशयः । परिहरति * नेति * नीलमुत्पलमिति सविशेषणे प्रतिज्ञाते निर्विशेषणभ्रान्त्या परेण दूषिते पुनर्वादी तदेव पूर्वोपन्यस्तविशेषणविशिष्टं साध्यमुपन्यस्य निरनुयोज्यानुयोगमुद्भावयति तत्रैतल्लक्षणमतिव्यापकमनन्तरानुक्तिभावादित्यर्थः । तृतीयं शङ्कते * विशेष्येति * आदौ दर्शितातिव्या-

प्तिपरिहारायाऽव्यवहितेति विशेषणम् । अतिव्याप्त्यैव दूषयति *नेति* यत्र विशेष्यं पूर्वं निपतति विशेषणं पश्चात्तत्र निर्विशेषणत्वभ्रान्त्या परेण दूषणानन्तरं पुनस्तस्य तथोपन्यासे लक्षणमतिव्यापकमित्यर्थः । चतुर्थं शङ्कते * अव्यवहित इति * अतिव्याप्त्यन्तरं दर्शयन्परिहरति * नेति * चित्रगुरित्यत्र विशेष्यस्यार्थसिद्धतयाऽनभिधानात्तदव्यवहितकालेऽनभिधानं विशेषणपदस्यास्तीति कृत्वा तत्रैव निर्विशेषणत्वभ्रान्त्या परदूषणानन्तरमुपन्यस्तेऽतिव्याप्तिरित्यर्थः । सर्वापकारपरिहाराय कल्पान्तरं शङ्कते * विशेषणेति * दूषयति * नेति * नीलमुत्पलं सुगन्धि महदित्यादावनेकविशेषणविशिष्टे य एकविशेषणस्य उपन्यासयोग्यकालस्सोऽपरेषामपि योग्य एव विशेषणानां पूर्वापरनियमाभावादन्यथा प्रयोगान्तरे विशेषणानां व्यत्यासो न दृश्येत तस्मादनेकविशिष्टे पुनरुपन्यस्यमाने कथितलक्षणमस्तीत्यतिव्याप्तिरित्यर्थः ।

अन्तिमं कल्पं शङ्कते ।

७ अन्तिमकल्पनिरासः ।

सर्वस्मिन् योग्यकाल इति चेन्न । दूषणानन्तरकालस्य योग्यकालत्वाभ्युपगमेऽव्याप्तिः दूषणपूर्वकालस्य तथाऽभिमतत्वे च दूषणानन्तरभाविन्या विशेषणोक्तिव्यक्ते स्तदानीमभावात् पूर्ववदतिव्याप्तिः । सर्वस्या स्तज्जातीयाया विशेषणस्योक्तेरभावो विवक्षित इति चे-

त् । न । व्यक्तीनामभावप्रतियोगिभूतानां सर्वासां पृथक् पृथक् प्रमाणेन केनापि अस्मादृशा प्रत्येतुमशक्यतयाऽभावानिरूपणेन लक्षणस्याज्ञानादसिद्धिप्रसङ्गात् । सामान्यप्रत्यासत्त्या व्यक्तयः प्रतिभान्तीति निरस्तमनुमानावसरे ।

* सर्वस्मिन्निति * विशेषणाभिधानयोग्यकालानुक्तत्वं न विवक्षितं किन्तु तदभिधानोचितकालोक्तत्वानधिकरणत्वं तच्चैकस्मिन्नपि योग्यकाल उक्तत्वादेव नास्तीति नातिव्याप्तिरित्यर्थः । दूषणोत्तरकालो योग्यकालो विवक्षित उत प्राक्काल इति विकल्प्य प्रथमं प्रत्याह *नेति* शब्दोऽनित्य इति प्रथमं निर्विशेषणोक्ते ध्वनिभागे सिद्धसाधनतया प्रत्युक्तेऽस्तु तर्हि वर्णात्मक इति पश्चात्सविशेषणवचने प्रतिज्ञान्तरत्वात्तत्रेदं लक्षणं नास्ति दूषणानन्तरकालस्य योग्यत्वं तत्र चोक्तेः सत्त्वादित्यव्याप्तिरित्यर्थः । द्वितीयमपवदति *दूषणेति* प्रथमं सविशेषणोक्ते निर्विशेषणभ्रान्त्या दूषिते पुनर्वादी पूर्वोक्तविशेषणमेव वदति तत्र पूर्वकालप्रागभावप्रतियोगित्वं दूषणानन्तरकालविशेषणोक्तिव्यक्तेरपि विद्यते इति तत्र सदुत्तरेऽतिव्याप्तिरित्यर्थः । दूषणपूर्वकालेऽनुक्तविशेषणजातीयत्वं विवक्षितं तेन नातिव्याप्तिः उत्तरकालविशेषणोक्तिव्यक्तेरभावेऽपि तज्जातीयायास्तत्र भूतत्वादिति शङ्कते *सर्वस्या इति*अप्रमितप्रतियोगिकप्रतिषे-

धायोगात्सर्वव्यक्तीनां प्रमितत्वं वक्तव्यं ततश्च विशेषणव्यक्तीनां भिन्नभिन्नाकारेण प्रमितत्व, मुत सामान्यप्रत्यासत्तिद्वारेति विकल्प्य प्रथमं प्रत्याह * नेति * सर्वव्यक्तिविषयप्रमाणासम्भवश्च स्मृतिव्यतिरिक्तत्वखण्डन इव द्रष्टव्यः। द्वितीयमपवदति *सामान्येति * एकां विशेषणव्यक्तिं श्रोत्रद्वारा प्रत्यक्षयता समवेतविशेषणतया सर्वव्यक्तयः प्रत्यक्षीक्रियन्त इत्यङ्गीकारे एकं प्रमेयं प्रत्यक्षयतः सार्वज्ञं स्यादिति व्याप्तिखण्डने उक्तमित्यर्थः।

पूर्वानुक्तविशेषणवत इति विशेषणस्थाने पूर्वमविशिष्टोक्तस्येति विशेषणं प्रक्षिप्य लक्षणं विरचिते को दोष इत्यत आह।

८ विशेषणस्थाने विशिष्टोक्तिविवक्षाया भङ्गः।

एतेन पूर्व्वमविशिष्टोक्तस्येति विशेषणं प्रक्षेप्तव्यमिति निरस्तम्। उत्तरकालवाच्यविशेषणकविशेष्यस्य प्रथममविशिष्टोक्तत्वसम्भवस्य दर्शितत्वात्।

*एतेनेति* कथमतिव्याप्त्यैव निरस्तमित्यत आह * उत्तरेति * उत्तरकालं वाच्यं विशेषणं यस्य उत्पलं नीलमित्यादेस्तस्य प्रथमविशेषणोक्तावपि केवलस्य विशेष्यस्य प्रथममुपादानमनन्तरं विशेषणस्येति सैवातिव्याप्तिरित्यर्थः।

प्रतिज्ञान्तरलक्षणे विशेषणप्रक्षेपपरम्परामुररीकृत्य दूषणमभाणि सम्प्रति सैवानुपपन्नेत्याह।

९ प्रतिज्ञान्तरलक्षणे विशेषणपरम्परया अनुपपत्तिः ।

किञ्च प्रथममविशिष्टमुक्त्वा भवता यदि विशेषणमिदं प्रक्षिप्यते तदा हेत्वन्तरं भवतोऽपि स्यात्तथापि तदभावे वा ममापि कुतः प्रतिज्ञान्तरम् । अथ प्रथममेवेदं विशेषणमुपादाय ब्रवीषि, तथाप्यव्याप्तिः । प्रथमं सविशेषणमुक्त्वा विशेषणवैयर्थ्यभ्रमेण झटिति सम्वरणान्निर्विशेषणेऽभिहिते परेण च दूषिते पुनः सविशेषणमभिदधतो नैवं प्रतिज्ञान्तरं स्यादित्यव्याप्तिः । स्वपरसाध्यपूर्वपदानां विवेचने व्यक्तौ पतनादव्याप्तिश्च । प्रकरणादिलभ्यतया प्रागनुक्तस्य विशेषणस्य भ्रान्तपरदूषितस्य प्रकरणलभ्यविशेषणवत्तयाऽनुवदतोऽपि सद्भावे प्रसङ्गः । अनुक्तस्थाने चाऽप्रतिपादितकरणेऽपि दोषः परस्मिन्नजातप्रतिपत्तौ प्रतिपादितत्वानुपपत्तेरित्यादि स्वयमूहनीयम् ।

* किञ्चेति * प्रथमं स्वोक्तस्येत्यादिप्रतिज्ञान्तरलक्षणमविशिष्टमुक्त्वा मया चातिव्याप्त्या दूषिते तत्परिहाराय पूर्वमविशिष्टस्येत्यादिविशेषणं प्रक्षिपतो हेत्वन्तरं निग्रहः स्याल्लक्षणस्य केवलव्यतिरेकिहेतुत्वादित्यर्थः । प्रथमलक्षणनिर्वाहार्थत्वेन विशेषणप्रक्षेपस्य प्रकृतोपयोगितया न हेत्वन्तरत्वमित्याशङ्क्य तर्हि प्रतिज्ञातनिर्वाहार्थत्वेनैव विशेषणप्रक्षेपान्ममापि न प्रतिज्ञान्तरमित्याह *तथापीति* प्रथममविशिष्टं लक्षणं

तर्हि न ब्रूमोऽपितु प्रथममेव विशिष्टलक्षणं ब्रूम इति शङ्कते * अथेति * स्वोक्तस्य परदूषितस्य साध्यभागस्य प्रथममविशिष्टोक्तस्य विशेषणवतोऽभिधानमिति प्रथमत उच्यत इत्यर्थः। हेत्वन्तरानिग्रहपरिहारेऽपि दोषान्तरं स्यादिति परिहरति * तथाऽपीति * तामेवोपपादयति * प्रथममिति * पार्थिवपरमाणुरूपरसगन्धस्पर्शा नित्या इति प्रथमं सविशेषणमुक्त्वा विशेषणवैयर्थ्यभ्रमाद्यत्र वादिना संन्नियते ततो निर्विशेषणमेव कथ्यते तदा प्रतिवादिना ज्ञाते बाधेन प्रत्युक्ते पुनः सविशेषणमेव पार्थिवपरमाणुरूपादिरिति ब्रूते तत्र प्रतिज्ञान्तरमिष्टं तत्रैवाव्याप्तिः प्रथममविशिष्टोक्तस्येति विशेषणाभावादितिभावः। प्रथमत एव विशिष्टलक्षणोक्तावविशिष्टमुक्त्वा पश्चाद्विशेषणोपादाने च साधारणखण्डनान्तरमाह * स्वेति * स्वोक्तस्येत्यत्र स्वपदस्य परदूषितेत्यत्र परपदस्य साध्यभागस्येत्यत्र साध्यपदस्य पूर्वमनुक्तेत्यत्र पूर्वपदस्य च स्वत्वाद्यनुगतार्थाभावः स्वात्मनि वृत्यवृत्तिभ्यामनुपपत्ते रतश्च व्यक्तिपरत्वे प्रत्येकव्यक्त्युपादानेऽव्याप्तिः सर्वव्यक्त्युपादानेऽसिद्धिरित्यर्थः। भङ्गान्तरं भणति * प्रकरणेति * विवादपदं सकर्तृकमित्यादौ प्रकरणोपपदाभ्यां धर्मिविशेषासक्तौ सत्यामपि परेण प्रकरणादिलभ्यत्वमनालोचयता निर्विशेषणत्वभ्रान्त्या दूषिते वादिना प्रकरणादिपर्यालोचनया लभ्यमेव विशेषणमुपन्यस्यते निरनुयोज्यानुयोगोद्भावनाय तत्र सदुत्तर एतल्लक्षणमतिव्या-

पक्रमनुक्तस्यविशेषणभावादिति भावः । अप्रतिपादितविशेषणस्येतिलक्षणविशेषणं न त्वनुक्तस्येति तत्र च प्रकरणादिना प्रतिपादितत्वमस्त्येवेति नातिव्याप्तिरित्याशङ्क्याह * अनुक्तेति * कुत इत्यत आह * परस्मिन्निति * प्रकरणादिलभ्यमुक्तमप्युक्तलक्षणविशिष्टतया यत्र प्रतिवादिनो बुध्यारूढं न भवति तत्र प्रतिपादितत्वमेव नास्ति परप्रतीतिजनकत्वस्यैव प्रतिपादितत्वादित्यतिव्याप्तिरेवेत्यर्थः । तर्हि स्वोक्तस्य परदूषितस्य साध्यभागस्य पूर्वानुक्तस्य प्रकरणाद्यलभ्यविशेषणवतोऽभिधानं प्रतिज्ञान्तरमिति विशेष्यत इत्याशङ्क्याह * इत्यादीति * विशेषणोपादाने हेत्वन्तरमनुपादाने पूर्वोदितावस्थामित्यादि द्रष्टव्यमित्यर्थः ।

इति प्रतिज्ञान्तर खण्डनम् ।

---

प्रतिज्ञाविरोधखण्डनायोपक्रमते ।

१७ प्रतिज्ञाविरोधखण्डनारम्भः ।

प्रतिज्ञान्तरादीत्यादिपदेन किमिष्टम् । प्रतिज्ञाविरोधादीति चेन्न। यत एकवक्तृकैकवाक्यांशयोर्मिथो व्याघातः साध्यविपरीतव्याप्तत्वोद्भावनानपेक्षोद्भावनः प्रतिज्ञाविरोधः, तदनदलक्षणम् । तथा हि—इह भूतले घटो नास्तीत्यादावपि गतत्वेनातिव्यापकमिदम् । वचनयोर्हि व्याघातोऽन्योन्यविरुद्धार्थत्वं तच्चेहास्ति, घटोऽस्ती-

त्यंशस्य घटसत्त्वबोधकत्वात् नकारस्य च तन्निषे-धकत्वात् ।

* प्रतीति * आदिपदार्थं परः शङ्कते *प्रतिज्ञेति* आदिपदार्थस्तावदास्तां प्रतिज्ञाविरोधस्यापि दुर्निरूपत्वं यत इत्यभिप्रेत्य दूषयति *नेति* विरुद्धहेत्वाभासेऽतिव्याप्तिपरिहाराय साध्यविपरीतत्यादिविशेषणम् । अन्यवाक्येन विरोधेऽतिव्याप्तिपरिहाराय मिथइति । तथापि कालभेदेन मतभेदमवलम्ब्य नित्यः शब्दोऽनित्यः शब्द इति वदति तद्विरोधेऽतिव्याप्तिपरिहारायैकवाक्येति । तथाऽपि भिन्नकर्तृकवाक्यांशे विरोधेऽतिव्याप्तिपरिहारायैककर्तृकेति । अस्त्वयं प्रतिज्ञाविरोधस्ततः किमित्यत आह * तदिति * अलक्षणत्वमेवोपपादयति * तथाहीति* भूतले घटोनास्तीति वाक्यांशयोः सहावस्थानादप्रतिपक्षरूपत्वाच्च विरोध एव नास्ति कुतोऽतिव्याप्तिरित्यत आह *वचनेति* शब्दयोः स्वरूपेण विरोधो न कर्तेश्वर इत्यादित्वदुदाहरणेऽपि नास्ति, अर्थद्वारको विरोधोऽत्रापि विद्यत इत्यर्थः । उदीरितं हेतूपन्यासपुरस्कारेण स्पष्टयति * तच्चेति *

भावाभावयोरपि न भावाभावत्वमेव विरोधः किंतु सहानवस्थानमेवान एकस्मिन् देशे काले तदुभयबोधकत्वाभावान्नेह भूतले घट इति वाक्यांशयोरर्थद्वाराऽपि विरोधो नेति चोदयति ।

११ व्याघातविचारः ।

नन्वयुक्तमिदमुच्यते, न हि घटो नास्तीत्यत्र घटोऽ-

पि विधीयते घटनिषेधोऽपिच, येन मिथो व्याघातः स्यात् किन्तु घटो निषिध्यते घटनिषेध एव तु विधीयत इति यावत् तत्कृता व्याहतिरिति चेत् । मैवम् । घट इत्यस्य तावदंशस्य घटविधिबोधकत्वं, नास्तीत्यस्यापि तत्प्रतिषेधार्थत्वं भवताऽपि मन्तव्यम् । यदित्वेवं नाभ्युपैषि तदा तयोरविरुद्धार्थतया घटश्चाऽपेक्षितनिषेधास्तित्वं च भूतलाश्रितं द्वयमस्य वाक्यस्य बोधनीयं स्यादिति, तस्माद्विधिरूप एव घट इति तत्प्रतिक्षेप एव च नेति किमेतावेककर्तृकवाक्यांशौ न भवतः? परस्परविरोधार्थाभिधायकौ वा न भवतो ? येन लक्षणमिदं भवतस्तत्र न गच्छेत् । न मिथो विरुद्धत्वमात्रं मिथो व्याघातकत्वं किन्त्वेकदेशकालादौ परस्परविरुद्धार्थयोरस्तित्वं, न च नास्तीत्यनेनैकदेशकालादौ विधिनिषेधौ वर्त्तमानौ बोध्येते इति चेन्न । उक्तोत्तरत्वात् देशकालाद्यनन्तर्भावे विरोधस्यैवानुपपत्तेः ।

* नन्विति * अयुक्तत्वे हेतुमाह * नहीति * घटो नास्तीति घटतदभावावुभावपि अभिधेयौ न भवतो येन भावाभावयोरेकोपाधिसम्बन्धबोधकतया वाक्यं विरुद्धं स्यादित्यर्थः । तर्हीदं वाक्यमनर्थकमेव कस्याऽप्यबोधकत्वादित्यत आह * किन्त्विति * किमनया वाग्भङ्ग्याऽभिहितं भवतीत्यत आह *घटेति*

इह भूतले घटो नास्तीत्यत्र घटनिषेधस्यैव प्रतिपाद्यत्वात् घटस्याप्रतिपाद्यत्वाद्धट इति न इति चाऽभिधानयोर्विरोधो नास्तीत्युपसंहरति * तदिति * विदितसङ्गतीनां पदानां स्वार्थवेदनोत्पादकत्वनियमात् घटपदस्य स्वार्थबोधकत्वं नञ्पदस्य च तदभावबोधकत्वमवश्यं स्वीकार्यमिति परिहरति * मैवमिति * विधिः सत्त्वम् । उक्तमर्थं व्यतिरेकमुखेनोपपादयति * यदीति * घटतदभावविषयत्वाभावे वाक्यांशयोरविरुद्धार्थत्वं ततश्च भूतलाधिकरणतया घटास्तित्वं निषेधास्तित्वं चेत्युभयं बोधनीयं स्याद्यथा भाति तत्तथैवेत्युत्सर्गादित्यर्थः । तस्माद्विरुद्धार्थत्वमस्त्येवेत्युपसंहरति * तस्मादिति * न केवलं तत्प्रतिक्षेप एव नापि विधिरूप एव किन्तु भावोऽभावश्चेति विरुद्धरूप एव बोध्यत इत्यर्थः । तथाच प्रागुक्तप्रसङ्गस्तदवस्थ इति फलितमाह * किमेतावितिं * इह भूतले घटो नास्तीति वाक्यस्य घटतदभावविषयत्वमापादितमङ्गीकृत्य तयोरेकदेशकालसत्वाभावोऽविरोधस्तत्सत्वं च विरुद्धमिति यदुक्तं मया तत्तदवस्थमेवेति चोदयति * नेति * तादृशमपि व्याघातकत्वं किमत्र न स्यादित्यत आह * नचेति * उक्तं संस्मर्त्तुमर्हसीति परिहरति *नेति* कथमुक्तोत्तरत्वमित्यत आह * देशेति * इह भूतले घटो नास्तीत्यस्य वाक्यस्याविरुद्धत्वे घटतदभावयोर्युगपदेव भूतले प्रसक्ताद्विरुद्धार्थाभिधायकत्वं त्वया तावत्स्वीकृतं विरोधश्च देशाद्यन्तर्भावेणैव भवतीति स्यादेवोक्तदो-

च इत्यर्थः ।

विरुद्धयोरेकदेशकालास्तित्वं व्याघात इत्युपगम्य दूषणमुक्त मिदानीं तदपि नेत्याह ।

१२ एकत्र विरुद्धास्तित्वस्य प्रामाणिकत्वाप्रामाणिकत्वयोर्दोषः ।

किञ्च यद्येकदेशादौ विरुद्धास्तित्वं प्रामाणिकमभ्युपैषि तदा विरुद्धशब्दस्तत्रायमन्य एव सामयिकार्थः कश्चित्, प्रमाणेन तथाभूतस्य ग्रहणादेव विरुद्धत्वाभ्युपगमशान्तेः । अथ प्रामाणिकं तन्नाभ्युपैषि तदा ऽप्रामाणिकं मिथो व्याघातकत्वं क्व नाम नास्तीत्यतिव्याप्तिः ।

*किञ्चेति* विरुद्धयोरेकदेशाद्यस्तित्वं प्रमितं न वेति विकल्प्य प्रथममनुवदति *यदीति* असम्भवेन दूषयति *तदेति* सहावस्थानस्यैव प्रमितत्वे तयोरविरुद्धत्वेन विरुद्धशब्दः सहावस्थायिन एव वाचकः सामयिकः स्यात्तथाच सहावस्थितयोः सहावस्थानं न स्यादितिव्याघातार्थः स्यादेवं च नानिष्टं किञ्चिदित्यर्थः । कुत इत्यत आह *प्रमाणेनेति* रूपरसयोरिवेत्यर्थः । द्वितीयमनुभाषते *अथेति* अतिव्याप्त्या दूषयति *तदेति* तत्–एकदेशाद्यवस्थानं । व्याघातोऽप्रामाणिक इति यत्र व्याघातोद्भावनं तत्र अप्रामाणिकव्याघातोऽस्तीत्युक्तं स्यादेवञ्च न नः किञ्चिच्छिन्नमविरुद्धेऽप्यप्रामाणिकव्याघातसम्भवादतिव्याप्तिश्चेत्यर्थः ।

स्वरूपेणाप्रामाणिकस्यापि परपक्षस्य निषेध-

प्रमाणविषयत्ववत् व्याघातस्य स्वरूपेणाप्रामाणिकत्वेऽपि परोपन्यासोपाधौ प्रामाणिकत्वसम्भव इति शङ्कते ।

१३ स्वतोऽप्रमाणस्यापि परतः प्रामाणिकत्वमितिशङ्कानिरासः ।

अथ मन्यसे यथा परेणाभिधीयेते अर्थौ तथा मिथो व्याघातकाविति ब्रूमः तत्र च प्रमाणं प्रसरत्येवेति । न । कथमपि तत्र प्रमाणप्रसृतौ विरोधभाषापरिभाषामात्रत्वापत्तेः । यथा परेणोक्तोऽर्थः तथा मिथो व्याघातक इत्यपि क्वचिन्मिथोव्याघातकमर्थमप्रमाय न वक्तुं शक्यम् । प्रसज्यते मिथोव्याघातो न प्रसाध्यत इति चेन्न । क्वचिदप्यप्रमितस्य प्रसञ्जयितुमपि भवताऽशक्यत्वात् । मा प्रमायि अप्रमायैव तद्व्यवहार इति चेन्न । क्वचिदप्यप्रमितमाभासमात्रोपस्थितं क नाम नोपस्थापयितुं शक्यमित्युक्तैवातिव्याप्तिरावर्त्तते । अनेकत्र नियतयोरेकत्र प्रसञ्जनमिति चेत् । न । प्रसञ्जकस्य तदद्वयस्यैकत्र स्थितिनियतताप्रमितावविरोधस्यानेवम्भावे चाऽनापादकत्वस्यापत्तेः ।

* अथेति * अनेन हि वाक्येनैकदेशकालानवस्थितयोरेकदेशादौ सत्त्वमुपनीतमिति विरुद्धार्थ इत्यर्थः । विरुद्धत्वस्यैवंरूपत्वेऽपि कथं तत्र प्रमाणप्रवृत्तिरित्यत आह *तत्रेति* तत्र च तयोः सहावस्थानाप्रमित्याऽपि तयोः सहावस्थानोपनायकत्वं वाक्यस्य

प्रतीयत एव तेन विरुद्धयोरेकदेशादावुपनयादित्यर्थः। परिहरति * नेति * यथा त्वयोपनीताविमौ विरोधिनौ तथैकत्र स्थिताविति तेनाकारेणापि तयोरेकत्र प्रमाणेन ग्रहणाद्विरोधभाषायाः सङ्केतमात्रत्वप्रसङ्ग इत्यर्थः। परेणाभिधीयमानाकारेण व्याघातः साध्यते त्वया किं वा प्रसज्यत इति विकल्प्य प्रथमं प्रत्याह। * यथेति * साधनस्य व्याप्तिग्रहणमूलत्वाद्यथा धूमाग्न्योरविनाभावमप्रमाय गिरिशिखरे कृशानुः साधयितुमशक्य एवं व्याघातकत्वमप्यन्यत्र स्वव्याघातवाक्येन सहभावमप्रमाय साधयितुमशक्यमिति प्रामाणिकत्वोपगमे न विरोधोपशान्तिरित्यर्थः। द्वितीयं शङ्कते * प्रसज्यते इति * प्रसङ्गस्यापि तद्विशेषस्य व्याप्तिमूलत्वादाप्याद्यापादकयोरेकत्र प्रमितत्वाभावे न प्रसञ्जनमपि शक्यमिति परिहरति * नेति * व्याप्तिप्रमा न प्रसङ्गमूलं व्यतिरेकाभावात् किन्तु तज्ज्ञानमतोऽप्रमायापि प्रसङ्गव्यवहार इति शङ्कते * * मा प्रमायीति * प्रमितं मा भूदित्यर्थः। अप्रमितं प्रसज्येतेत्यनुपलम्भस्य प्रसञ्जयितुमशक्यत्वादाभासोपस्थापितं प्रसज्यत इति वक्तव्यमतश्च तादृशं सर्वं प्रसञ्जयितुं शक्यत इत्यतिव्याप्तिरिति परिहरति * क्वचिदपीति * शङ्कते * अनेकेति * अत्र—धर्मिणि प्रतिपादितकुम्भभावाभावयोरेकत्रावस्थानेऽपि विरोधोऽन्यत्राप्रमितः परवाक्ये उपपद्यत इति न, येन तदप्रामाणिदोषाय, किन्तु तद्वाक्यार्थयोर्विरोधिनोरन्यत्र प्रत्येकं प्रमितयोरेकत्रावस्थानमात्रमापाद्यत इ-

स्यर्थः। विरुद्धयोरेकत्र परवाक्ये प्रसञ्जनं केन चिदापादकेन विना न सम्भवतीति तदापादकस्यापाद्यद्वये-नाविनाभूतत्वं प्रमितं नवेति विकल्प्य दूषयति * नेति * अविरोधस्यापत्तेरितिसम्बन्धः। व्याप्तिग्राहक-प्रमाणेनैव विरोधिनोरेकत्र प्रमिततया विरोधशान्तिर-नेवम्भावे—प्रमितत्वाभावे व्याप्तिहीनतया प्रशिथिलमू-लत्वेनाभासत्वादनापादकत्वापत्तिरित्यर्थः।

अनेवम्भावे चानापादकमिति यदुक्तं तदयुक्तमिति शङ्कते।

१४ द्वयापादनशङ्कानिरासः।

एकैकव्याप्याभ्यां पृथक् पृथक् तद्द्वयापादनमिति चेन्न। एकैकमव्याघातात्। अर्थात् द्वयं स्यादिति चेन्न। अर्थापत्त्यर्थत्वेनैवाव्याघातात्। अर्थादापादनं न साधनमिति चेन्न। मिथो विरोधित्वेन तर्काभासत्वापत्तेः। इष्टापादनाच्च। मिथो व्याघातात् कथं तथा स्यादिति चेन्न। तद्द्वयधर्म्मिकत्वात् व्याघातापत्तेर्धर्म्मिणि प्रमापेक्षाया-मव्याघातात्।

* एकैकेति * द्वयोरेकत्रावस्थानं प्रमितमन्यत्रा-पाद्यत इति नेष्यते किन्तु द्वयोः प्रसञ्जकयोर्द्वाभ्यां प्रसञ्ज्याभ्यां प्रत्येकं व्याप्तेरवधारणमस्ति घटतदभा-वादेरुभयस्य स्वतन्त्रस्य प्रमितत्वादत उभयमुभाभ्यां प्रसञ्जकाभ्यामेकत्र प्रसज्यत इत्यर्थः। विरोधिनोरेकदे-शादिसंसर्गो व्याघात एवं सति न सिद्ध्यत् द्वयोरेकत्र

साधकाभावादिति परिहरति * नेति * उभयव्या-प्यादेकैकावस्थाने सामर्थ्यात्तद्व्यापकद्वयमेकत्र स्या-दिति व्याघातापत्तिरस्त्येवेति शङ्कते * अर्थादिति * प्रत्येकं द्वयस्यैकत्रापादनानुपपत्त्या तद्द्वयस्यैकत्राव-स्थानं साध्यत उत प्रसज्यत इति विकल्प्य प्रथमं प्रत्याह * नेति * अनुपपत्तेरपि प्रमाणविशेषत्वा-त्प्रमितस्य च सहावस्थानस्य रूपरसयोरिवाव्याघा-तत्वमित्यर्थः। द्वितीयं शङ्कते * अर्थादिति * अर्था-त्सहावस्थानमुभयोरापाद्यते न तु साध्यते नचापाद-नरूपं ज्ञानं प्रमा तस्याऽऽरोपरूपत्वादतो नोक्तदोष इत्यर्थः। यथा व्यापकद्वयस्यैकधर्मिसम्बन्धो व्याघातो मिथोविरोधात्तथा तद्व्याप्ययोरपि विरुद्धधर्माविना-भूतयोरेकधर्मिनिष्ठत्वेन व्याघातादेव न साधकत्व-माभासत्वादिति परिहरति * नेति * भूतले घटो-नास्तीत्यत्र भावाभावयोरेकैकापादनस्येष्टत्वात् त-र्काभासतेत्याह * इष्टेति * भावाभावयोरेकधार्मि-सम्बन्धस्याऽऽर्थिकस्य व्याघातत्वात्कथमिष्टत्वमिति शङ्कते *व्याघातादिति* विरोधिनोरेकसंसर्गरूपो व्या-घात एकधर्मिक अनेकधर्मिको वा, आद्ये परस्परासंस्प-र्शाद्विरोधो न स्यादित्येकं बहिरेव दूषयित्वा द्वितीयं प्र-त्याह *नेति* व्याघाताश्रयत्वेन भावाभावरूपद्वयस्यैक-त्रावस्थानस्येष्टत्वादित्यर्थः।अनेकाश्रयत्वेऽपि व्याघातस्य विरोधः सिद्ध इत्यत आह * धर्मिणीति * विरो-धाधिकरणे धर्मिणि प्रमाणं नास्ति चेदप्रामाणिकधर्मि-निष्ठव्याघातासिद्धिर,स्ति चेत्प्रमितत्वेन धर्मिद्वयस्यै-

कत्र सकृत् प्रमितस्य प्रमितत्वमेवेष्टमित्यर्थः ।

उक्तदोषैस्त्वयाऽपि व्याघातखण्डनं क्रियते खण्डनं च प्रतिषेधः स च विरोधासिद्धौ न सिध्येत् विरोधश्चोदीरितरीत्या दुःस्थ इति तवाऽपि तुल्यमिति प्रतिबन्दीग्रहेण शङ्कते ।

१५ प्रतिबन्द्या विकल्पस्य निरासः ।

एवमादीनां दोषाणां परं प्रत्यभिधाने तवापि सर्वमिदं सुवचमिति चेन्न । तत्राप्यन्यत्र दोषो मयाऽऽपाद्यत इति[1] प्रतिबन्दीं गृह्णतः किं परपक्षे दोषापादनमात्रं विवक्षितं, उत यस्त्वया तत्र समाधिरभिधेयः स मयापीत्यभिप्रायात् स्वपक्षे समाधिः ?। न तावदाद्यः अप्रस्तुतत्वात् । परोक्तदोषानुद्धारे तावतैव कथायास्तदर्द्धस्य वा पर्य्यवसानात् निग्रहापरिहारावधित्वात्तयोः ।

* एवमिति * प्रतिबन्दीमेव खण्डयितुं तत्कर्तुरभिप्रायं पृच्छति * न तवेत्यादिना * दोषसामान्यं विवक्षितमुत परिहारसाम्यमिति विकल्पार्थः । कस्मिन् सति किं स्यादित्यत आह * नेति * कुत इत्यत आह * अप्रस्तुतेति * अर्थान्तरं निग्रह इत्यर्थः । उक्तार्थनिर्वाहार्थत्वान्नार्थान्तरतेत्यत आह * परेति * जल्पस्य वितण्डाद्वयशरीरत्वात्तथात्वं वितण्डायास्तदर्द्धत्वं तयोः परोक्तदोषानुद्धारे पर्यवसानं, वादस्यापि तत्त्वनिर्णयप्रतिबन्धकनिग्रहोद्भावने तदपरि-

(१) दोषोऽयमापद्यते इति का० मु० पु० पा० ।

हृस्य प्रतिबन्दिग्रहे पर्यवसानमित्यपि द्रष्टव्यम् । कुत इत्यत आह * निग्रहेति * तयोः—कथातदर्द्धयोरित्यर्थः ।

परिहारसाम्यं विवक्षितमिति द्वितीयकल्पं दूषयति ।

१६ द्वितीयकल्पनिरासः ।

द्वितीये तु स एवाभिधीयतां का नो हानिः । भवाँस्तावदभिधत्तां कस्तत्र समाधिः ततो मयाप्यभिधेय इति चेन्न । मया तदभिधानस्य साम्प्रतमप्रस्तुतत्वात् । नहि मया स्वपक्षसाधनं त्वया च तद्दूषणं प्रकृते वक्तुमारब्धमस्ति किन्तु त्वया स्वपक्षो निर्वाह्यः तद्दूषणञ्च मयाऽभिधानीयमिति कथा प्रस्तुता वर्त्तते । ईदृशि च कथाविभागे मत्पक्षसमाधानाय मां पर्य्यनुयोक्तुं भवतः कुतोऽधिकारः ।

* द्वितीय इति * स एव—परिहार एव । परिहाराभिधाने मम निग्रहविमोक इत्यत आह * केति * स्वपक्षे उद्भावितानां दोषाणां त्वया यः समाधिरभिधेयः स एव मयाऽपीति प्रथमं भवाँस्तं समभिधत्तां ततोऽहमभिदध इति शङ्कते * भवाँस्तावदिति * परिहाराभिधानकालोऽयं न भवति ममातो नाभिधीयते इति परिहरति * नेति * मया दूषणेऽभिधीयमाने

१ भवतातावदभिधीयतामिति पु० पा० ।

तथाऽपि परिहारोचितकालोऽयमेवेत्यत आह * न हीति * किं तर्हि प्रकृतं वर्तेत इत्यत आह * किन्त्विति * वितण्डायाः स्वपक्षस्थापनाहीनत्वात्तत्र प्रतिबन्द्युद्भावनाऽसम्भव इतरत्रापि स्वपक्षसाधनं मया कार्यं त्वया च तद्दूष्यमिति नियमेन कथानारम्भणादन्यथा कथान्तरं स्यादित्यर्थः । अत एव तदभिप्रायेण प्रतिबन्दीं गृह्णतो निरनुयोज्यानुयोगनिग्रहः स्यादिति फलितमाह * ईदृशीति *

त्वया मत्पक्षे ये दोषा उद्भावितास्तेषां परिहारोऽस्त्येव, नच नायमसाविति विशेषतो वक्तव्यस्तत्र प्रयोजनाभावादिति शङ्कते ।

१७ दोषाणां सत्त्वेऽपि परिहार इति शङ्कानिरासः ।

अथ विशेषत स्तन्निष्टङ्कने किं प्रयोजन,मस्ति तावदेतादृशि चोद्ये परिहारो यतस्त्वयाऽपि स्वपक्षेऽसौ स्वीकार्य्य इत्याशयस्ते, सोऽपि न युक्तः न हि मत्पक्षे चेत्समाधिरस्ति तावता त्वत्पक्षेऽपि तेन भवितव्यमित्यत्र किञ्चिदपि प्रमाणमस्ति । साम्यादेवमिति चेन्न । वैषम्यस्यावश्याभ्युपेयत्वात् । यदि तद्गतमसाधारणं स्वरूपमादाय मद्दर्शनं प्रतितन्त्रसिद्धान्तं वा तत्र समाधिः स्यात् अत्र च त्वत्पक्षे तदभावान्न स्यात्, तथा सति साम्यमात्रात्कथं समाधिरसावत्रापीति निश्चेतुं शक्यते । कोऽसौ तत्र विशेष इति चेन्न । मया साम्प्रतं त-

दभिधानस्याप्रस्तुतत्वमित्युक्तत्वात् ।

* अथेति * निष्टङ्कने–निर्णय इति यावत् । विशेषतो निर्णयाभावे स परिहार एव न स्यादित्यत आह * अस्तीति * तदस्तित्वे लिङ्गमाह * यत इति * मत्पक्षे परिहारसत्त्वे त्वत्पक्षेऽपि भविष्यतीत्येतत् प्रमाणाभावादयुक्तमिति परिहरति * सोऽपीति * प्रमाणाभावोऽसिद्धोऽनुमानस्यैव भावादिति शङ्कते * साम्यादिति * मत्पक्षदोषाः परिहारवन्त एतद्दोषत्वात् त्वत्पक्षदोषवदित्यर्थः । पक्षानुकूलविपक्षप्रतिकूलतर्काभावादप्रयोजकं इति परिहरति * नेति * दोषसामान्यमेव विपक्षे न स्यादित्यत आह * यदीति * समाधेयव्यक्तिगतविशेषरूपाश्रयेण मद्दर्शनप्रतितन्त्रसिद्धान्ताश्रयेण वा परिहारवैषम्यं सम्भवति यथा सत्तायोगितया सद्व्यवहारगोचरता पृथिव्यादीनां सत्तायाः स्वभावभेदादेव तथात्वं तथा निरवयवस्य जगदारम्भकत्वे प्रचयानुपपत्तिरिति निगदितमवश्यं तार्किकैरपरिहार्यमपि मायावादावष्टम्भेनौपनिषदैः स्वसिद्धान्तप्रतितन्त्रसिद्धान्ताश्रयेण परिह्रियते तद्वदित्यर्थः । फलितमाह * तथासतीति * त्वत्पक्षेपि परिहारोपयोगिनः सतो विशेषस्य निर्वचनापत्तिरिति शङ्कते * कोसाविति * अर्थान्तरनिग्रहप्रसञ्जनेन परिहरति * नेति * ।

त्वत्पक्षे यः समाधिः स एवाऽत्रापीति न मया साध्यते किन्तु तत्समान इति ततः स्वरूपाविशेषादिसम्भवेऽपि न कश्चित् विरोध इति शङ्कते ।

१८ समाधिसाम्यशङ्कानिरासः ।

चोद्यसाम्यात् समाधिसाम्यमिति चेन्न । दूष्यगतविशेषभावाभावविशेषितत्वादिनापि तद्वैषम्यसम्भवात् । यथा सद्व्यवहारस्य सत्तास्वीकारत्वे तुल्येऽपि सत्तायां तदभ्युपगमेऽनवस्थया तदाश्रये च तदभावेन, एवमन्यत्रापि बहुलं दर्शनादिति ।

* चोद्येति * दोषस्यैकजातीयत्वेऽपि दूष्यगतविशेषमादाय समाधेर्विजातीयत्वसम्भव इति परिहरति * नेति * दूष्यवस्तुगतविशेषस्य भावाभावाभ्यां समाधेर्विशेषितत्वेन वैषम्यसम्भवादिति योजना । उक्तमर्थं दृष्टान्तेन साधयति * यथेति * सद्व्यवहारः सत्ताजातिस्वीकारमूलं तस्य सत्तायां द्रव्यादौ च तुल्यत्वेन सत्तायामपि सत्तान्तरप्रसञ्जने सत्तायां तदभ्युपगमेऽपरिहारोऽनवस्थापातस्तदाश्रये द्रव्यादौ चाऽनवस्थाभावेन सत्तास्वीकार इति परिहारवैषम्यं चोद्यसाम्येऽपीत्यर्थः । समवायातिरिक्ता भावाः समवायिन इति तार्किकपक्षे भावत्वसाम्येऽपि समवायस्य न समवायान्तरमनवस्थानादित्याद्युदाहरणीयमित्याह * एवमिति *

प्रकारान्तरेणाऽपि प्रतिबन्दीखण्डनाय प्रक्रमते ।

१९ प्रकारान्तरेण प्रतिबन्दीखण्डनम् ।

किञ्च परोद्भावितमसिद्ध्यादिकमपरिहृत्य प्रतिबन्द्या

---

१ स्वीकारकत्वे इति का० मु० पु० पा० ।

प्रत्यवतिष्ठमानस्य कोऽभिप्रायः । किं यदिदं दोषतया परेणोद्भावितं तददूषणम् अदूष्येऽपि गतत्वात्, उत दूषणमपि सन्नोद्भावनीयं तुल्ययोगक्षेमत्वात् । यथाऽऽहुः- "यत्रोभयोरित्यादि" । नाद्यः यद्यत्राऽसिद्ध्यादिलक्षणमस्ति उद्भाविते दूषणे तदा दोषत्वस्याशक्यपरिहारत्वात् परिहारेपि वा तस्यालक्षणत्वप्रसङ्गात् । यद्येत दूषणं कथं तर्ह्यदूष्यत्वेन वादिनाङ्गीकृतेऽपि प्रतिबन्दीस्थाने गतमिति चेत् । यद्येतददूषणं कथं दोषलक्षणोपपन्नमित्यत्रापि दीयतां दृष्टिः । नियामकाभावे तर्ह्येतदीयदूषणत्वे सन्देहः पर्य्यवसित इति चेत् अस्तु दोषत्वसन्देहेऽपि भवदीयसाधनस्यासाधकत्वात्[1] सन्दिग्धासिद्धवत् । किञ्च यल्लक्षणवतोऽस्य दोषत्वसन्देहस्तल्लक्षणक एवायमन्यत्रापीति तत्राप्यसिद्ध्यादेरदूषणत्वमेव स्यादितीयं प्रतीबन्दी दुरुत्तरा प्रतिबन्दीवादिनेति[2] ।

* किञ्चेति * अभिप्रायमेव प्रकटयति * किमिति * मत्पक्षे यत् त्वयोद्भावितं दूषणत्वेन, तत् दूषणमेव न भवति दोषहीनेऽपि त्वत्पक्षे गतत्वादिति प्रथमकल्पार्थः । दूषणमपि नोद्भावनीयं वादिप्रतिवादिनोः समानयोगक्षेमत्वादिति द्वितीयार्थः । उत्त-

१ असाधकत्वं सन्दिग्धेति का० मु० पु० पा० ।
२ प्रतिबन्दीवादिनोऽपीति का० मु० पु० पा० ।

रपक्षेऽभियुक्तवचनं प्रमाणमाह * यथेति *

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे"

इति पक्षद्वयसाधारणस्य दोषस्यानुद्भावनत्वं भट्टपादैर्दर्शितमित्यर्थः। प्रथमकल्पं पराकरोति * नेति * यन्मयोद्भावितं दूषणं तत्रासिद्ध्यादिलक्षणं किमास्त्युतास्ति, नास्ति चेत्तल्लक्षणहीनतयैव परिह्रियतां किं प्रतिबन्दीग्रहणेन, द्वितीये न दोषत्वपरिहारस्तल्लक्षणलक्षितत्वादित्यर्थः। विपर्यये बाधमभिधत्ते * परिहार इति * अलक्ष्यगतत्वेन लक्षणमतिव्यापकं स्यादित्यर्थः। दोषलक्षणलक्षितत्वेऽपि न तस्य दोषत्वमदूष्यत्वेनाऽङ्गीकृतप्रतिबन्दीस्थानेऽपि गतत्वादिति शङ्कते * यदीति * यथाऽदुष्टपक्षगमनानुपपत्त्या दोषत्वाभावस्तथा दोषलक्षणवत्त्वाऽनुपपत्त्या दोषत्वेन किं न रूपणं क्रियत इति परिहरति * यदीति * तर्हि विरुद्धधर्मिधियाऽविनाभूतया तद्दोषत्वस्याऽप्यनिश्चितत्वाद्दोषत्वेन तदुद्भावनं तवाप्यशक्यमिति शङ्कते * नियामकेति * दोषत्वसन्देहं आपादितमङ्गीकृत्याऽपि परिहरति * अस्त्विति * सन्दिग्धदोषत्वेनाप्युद्भाव्यमानं प्रकृतसाधनं निरुणद्धीत्यत्रोदाहरणमाह * सन्दिग्धेति * प्रतिबन्दी प्रतिबन्द्यैव खण्डयितुं शक्यत इत्यभिप्रेत्याह * किञ्चेति * अक्षरं स्पष्टम्।

दूषणमपि सत्रोद्भावनीयं तुल्ययोगक्षेमत्वादिति द्वितीयं दूषयति।

२० समानत्वात् दूषणमपि नोद्भावनीयमिति शङ्कानिरासः।

नापि द्वितीयः तथा ह्युभयवादिसम्मतादूष्यत्वं धूमानुमानादिकं यदि प्रतिबन्दीकरोति परस्तदा तद्दर्शनेऽन्यत्र क्वचिदप्येतदसिद्ध्यादिकं नोद्भावनीयं परसाधनेषु तस्यैव धूमानुमानादेः प्रतिबन्द्या भयादित्येषा मयापि सुग्रहैव तं प्रति प्रतिबन्दी अत्रापि शक्यत एव पठितुं "यत्रोभयोः समो दोष" इत्यादि ।

* नापीति * तदेवोपपादयति * तथाहीति * उभयवादिनोः संमतमदूष्यत्वं यत्र तत्तथोक्तं वर्णा अनित्याः श्रावणत्वात् ध्वनिवदित्युक्त उपान्त्यादिभागेऽसिद्धिः सामान्ये ऽवा नैकान्तिक इति मीमांसकेनोक्ते यदि परो ब्रूयाद्धूमानुमानेऽपि तुल्यमेतदाकाशेऽनैकान्त्याद्धूमयोगित्वस्य काष्ठप्रयुक्तप्रदेशमात्र एव भावाचेति तदा तद्दर्शनेनान्यत्रापि शब्दो नित्यश्चाक्षुषत्वादित्यादावपि तत्रोद्भावनीयं स्यादितीयमपि प्रतिबन्दी मयापि प्रतिबन्दीवादिनं प्रति सुग्रहैवेत्यर्थः । कथं श्लोकोक्तन्यायसाम्याऽभावे तद्ग्रह इत्यत आह * अत्रापीति * एवंविधासिद्ध्यादि नोद्भावनीयं स्वपक्षेऽपि गतत्वादिति ।

यमासिद्ध्यादेः प्रकारविशेषमादाय प्रतिबन्दीप्रवृत्तिस्तद्दोषविशेषविशिष्टस्यैवानुद्भावनं न तु दोषमात्रस्येति शङ्कते ।

२१ विशिष्टस्यैवोद्भावनेऽपि दोषः ।

अथ यं विशेषमादाय प्रतिबन्दी स्यात् तन्मात्र-

स्यानुद्भावनं न तु सामान्यत एवेति चेन्न। तत्र विशेषे प्रतिबन्द्या त्याजितदुष्टत्वे गतत्वात्तल्लक्षणमत्र नेति स्यात् विशिष्य तद्विशेषत्याजनेच तादृशस्य लक्षणस्यासिद्धिरेव स्यादिति कृतं प्रतिबन्द्या। अथ मद्दर्शनमात्राभ्युपगतादृष्यत्वं किञ्चित्पदार्थे प्रतिबन्दीकरोति तदैतदुक्तं तेन स्यात् इह नेदं दूषणं वक्तव्यमित्यभिधानेऽनयैव युक्त्या तवेष्टभङ्गप्रसङ्गादिति। तन्न। इदमिह दूषणं वक्तव्यमनभिधानेऽस्यैवानिष्टस्य परसिषाधयिषितस्य सिद्धिप्रसङ्गादित्यभिधानानुकूलाया अपि प्रतिबन्द्याः सम्भवात्।

* अथेति * एवं तर्हि लक्षणमसिद्ध्यादेरतिव्यापकं स्यादिति दूषयति * नेति * यो विशेषः प्रतिबन्द्या त्याजितदोषस्तस्मिन्विशेष इदं लक्षणमस्ति न वा, यदि न, तदाऽस्य दोषत्वेन क्वचिदप्युद्भावनन्नास्ति-चेददोषेपि गतत्वादतिव्यापकमित्यर्थः। दुष्टत्वं दोषत्वमसिद्ध्यादेः सामान्यलक्षणे प्रथमत एव तादृशं विशेषणमादेयं यथा प्रतिबन्द्या त्याजितदुष्टत्वे विशेषेऽसिद्ध्यादिलक्षणं न गच्छेदित्याशङ्क्याह * विशिष्येति * प्रतिबन्द्या त्याजितदुष्टत्वाद्यन्यत्वेसतीति लक्षणं विशेष्यं तद्विशेषातिव्याप्तिपरिहारे चाक्षुषहेतावसिद्ध्यादिलक्षणाभाव एव वक्तव्यः कुतः प्रतिबन्द्या अवसर इत्यर्थः। उभयसम्मतादूष्यत्वं धूमानानुमानादिप्रतिबन्दीकरणे दूषणमुक्त्वा प्रकारान्तरेण प्रतिबन्दीग्रह-

स्य सार्थकत्वमाशङ्कते * अथेति * विमतं मिथ्या दृश्यत्वादित्यत्र विषयविषयिभावसम्बन्धानङ्गीकारे दृश्यत्वासिद्धिः दृग्विषयस्य दृश्यत्वादित्येवंरूपेणेत्यर्थः । किं वाऽत इत्यत आह * तदेति * तदा ते—तव कृतं प्रतिबन्द्येत्येतदुक्तं स्यादित्यर्थः । तामेव प्रतिबन्दीमभिनयेन दर्शयति * इहेति * विषयविषयिभावस्य व्यतिरेकाव्यतिरेकप्रयुक्तदूषणं न वक्तव्यं तदभिधाने तथैव नीत्या त्वदभिप्रेतदृश्यत्वभङ्गप्रसङ्गादितियावत् । विषयविषयभावान्तर्भावनिमित्तं दूषणमभिधानीयं तदनभिधाने परसिषाधयिषितस्य ममानिष्टस्य विषयविषयिभावस्य सिद्धिप्रसङ्गादिति दूषणाभिधानानुकूला प्रतिबन्द्यपि सम्भवेदिति परिहरति * तत्रेति *

प्रतिबन्दीं कुर्वतः प्रतिबन्दी सदुत्तरं न भवतीति प्रतिज्ञाहानिः स्यादिति चोदयति ।

२२ प्रतिज्ञाहान्यापत्तिनिरासः ।

नन्वेवमेवास्तु तथाचाभिधानेऽनभिधाने चोभयतः पाशा प्रतिबन्दीरज्जुर्भवत एव दुर्निवारा स्यात् । मैवम् । मिथोविरुद्धायाः प्रतिबन्द्या स्तर्काभासत्वात् मिथोविरुद्धत्वस्य तर्कदूषणत्वात् । सत्प्रतिपक्षानुमानवत् द्वयोरपि परस्परप्रतिक्षेपेणैवोपक्षीणत्वादिति । न्यायद्वितीयाध्यायप्रथमाह्निकसूत्रे च "प्रमेयता च तुलाप्रामाण्य-

१ सूत्र १६ ।

वत्” इत्यत्राऽऽपादितदृष्टान्ताभावलक्षणदोषसाम्येन प्रत्यवस्थितं पूर्वपक्षवादिनं निराकर्त्तुमाचार्य्यः “समानमित्यनुत्तरमभ्युपगमात् अभ्युपगतं तावद्भवता नास्मत्पक्षे दृष्टान्तोऽस्ती”ति ब्रुवन्नुद्योतकरो यतोभयोरित्यादि वदतो भट्टस्य प्रतिभटीकर्तव्यः ।

* नन्विति * किमितो यद्येवमित्यत आह * तथा चेति * दूषणाभिधाने प्रतिबन्दीस्थाने इष्टस्य भङ्गः स्यादनभिधाने च परसिषाधयिषितस्यानिष्टस्य प्रसङ्गः स्यादत उभयतः पाशेत्यर्थः । यद्वा प्रतिबन्द्या अभिधाने प्रतिज्ञाहानिरनभिधाने प्रतिबन्द्या असदुत्तरत्वमित्युभयतः पाशेत्यर्थः । सदुत्तरत्वान्न प्रतिज्ञाहानिरिति परिहरति * नैवमिति * भवत्सिद्धान्ते प्रतिबन्द्यास्तर्कविशेषत्वेन मिथो विरोधादाभासत्वमिति यावत् । तदेव कुत इत्यत आह * मिथ इति * व्याप्त्यभावादिवत् मिथो विरोधोऽपि तर्कदूषणमित्यर्थः । मिथो विरुद्धस्य दूषणत्वे दृष्टान्तमाह * सादिति * तदेव कुत इत्यत आह *द्वयोरपीति* इतरेतरसाध्यप्रमितिप्रतिबन्धकतया स्वसाध्यप्रमितिहेतुत्वाभावादिति भावः । यत्रोभयोः समो दोष इत्यादिकस्य प्रतिबन्दीदूषणत्वप्रतिपादकस्य भट्टवचनस्य तददूषणत्वे विरोध इत्याशङ्क्य प्रतिबन्द्या अदूषणत्वप्रतिपादकोद्द्योतकरवचनविरोधान्न तत्राऽऽस्माकमादर इत्याह * द्वि-

१ न्यायवार्तिके १९७ पृष्ठे १८ पङ्क्तौ ।

तीयेति * पञ्चाध्याये न्यायशास्त्रे एकैकोऽध्यायः द्व्याह्निको भवति तत्र द्वितीयाध्याये प्रथमाह्निकसूत्र आपादितदृष्टान्ताभावलक्षणदोषसाम्येन प्रत्यवस्थितं पूर्वपक्षवादिनं निराकर्तुमिति ब्रुवन्नुद्योतकरो भट्टस्य प्रतिकूलोभटः कर्त्तव्यः-प्रतिभटीकर्त्तव्य इत्यन्वयः। चक्षुरादेः प्रमेयस्य कथं प्रामाण्यं प्रमाकरणत्वप्रमाविषयत्वयोरेकस्मिन् विरोधादिति चोदयित्वा सूत्रितं "प्रमेयता च तुलाप्रामाण्यव"दिति। चशब्दोऽप्यर्थे। यथा प्रमेयाऽपि तुला प्रामाण्यमश्नुते तथैकस्याप्यनेकलक्षणोपपन्नत्वादनेकव्यवहारालम्बनत्वं भवत्येव मेकस्यैवाऽनेककारकशब्दवाच्यत्वमनेककाल योगित्वं च तत्रोदाहृतं पूर्वा ऽपरकालसम्बन्धे च प्रमाणं कारणस्य कार्यानुगततया तत्कालेऽनुभवः तत्र चाननुगतमेव कारणमनन्वितमेव कार्यं क्षणिकयोरेव कार्यकारणभावादिति सुगतेन प्रत्यवस्थिते कार्यस्यानन्वितत्त्वे नास्ति दृष्टान्त इति दृष्टान्ताभावदोष आपादिते तत्साम्येन साध्यस्य स्थिरतया ऽन्वितत्वेऽपि दृष्टान्तो नास्तीति समानमिति पुनः सुगतेन प्रत्यवस्थिते समानमित्यनुत्तरमभ्युपगमादिति सूत्रं तदर्थविवरणपरमभ्युपगतमित्याद्युद्योतकरवचनं स्वपक्षे दृष्टान्ताभावदोषमभ्युपगम्य परपक्षे तमापादयतो मतानुज्ञानामनिग्रहस्थानमापततीति ब्रुवन्नित्यर्थः।

इति प्रतिज्ञाविरोधखण्डनम्।

---

२ चतुराह्निक इति पुस्तकद्वयपाठः।

. प्रतिबन्ध्यादेरदूषणत्वमापादितमनुवदति निग्रहान्तरखण्डनं प्रसञ्जयितुम्।

२३ अपसिद्धान्तखण्डनारम्भः।

तत् किं प्रतिबन्ध्यादि दूषणन्न भवत्येव, नन्वेवं भवतोऽपसिद्धान्तः स्यादिति चेत् तर्हि दर्शयापसिद्धान्तस्य लक्षणं प्रकृतसम्बद्धतया, वाङ्मात्रेणापसिद्धान्ते भवतः किमिति नापसिद्धान्तः स्यात्। सिद्धान्तविपरीताभ्युपगमोऽपसिद्धान्तः प्रतिबन्ध्यादि च भवता सिद्धान्तत्वेनाभ्युपेतं मयेदं[1] दर्शनमाश्रित्याभिधेयमिति भवता दर्शनविशेषस्याभ्युपेतत्वात् दर्शनस्य च तत्तत्पदार्थस्वीकारात्मकत्वात् तेषु च पदार्थेषु प्रतिबन्दीदूषणादेः प्रविष्टत्वादिति चेन्न। लक्षणमेव तावदपसिद्धान्तस्य नोपपद्यते मत्सिद्धान्तविपरीतमभ्युपगच्छतो भवतोऽपसिद्धान्तप्रसङ्गात्।

*तदिति* तल्लक्षणहीनत्वान्न दूषणतेत्यत आह *नन्विति* तच्छास्त्रे दूषणत्वेनेष्टाया अदूषणत्वेन स्वीकारादित्यर्थः। लक्षणाधीनत्वाल्लक्ष्यसिद्धेः प्रतिबन्ध्यस्वीकारस्यापसिद्धान्तत्वसिद्धये तदनुगतं लक्षणं दर्शनीयमित्याह *तर्हीति* न चैवमर्थान्तरत्वं प्रकृतोपयोगित्वादित्यभिप्रेत्य प्रकृतेत्युक्तम्। विपक्ष-

1 ममेदमिति पु० पा०।

दण्डप्रदर्शनेनोक्तं दृढीकरोति *वागिति* तत्रानुगतम पसिद्धान्तलक्षणमनुक्त्वा तदुद्भावने स्वच्छास्त्रे यत्स्वीकृतं तल्लक्षणमस्ति तदेव परं प्रति दूषणत्वेनोद्भावनीयमन्यथा लक्षणाधीना लक्ष्यव्यवस्थितिरितित्यागादपसिद्धान्तस्तवेत्यर्थः। अपसिद्धान्तलक्षणं शङ्कते *सिद्धान्तेति* अभ्युपगमोऽपसिद्धान्त इत्युक्ते स्वसिद्धान्त एवातिव्याप्तिस्तत्परिहाराय सिद्धान्तविपरीतेत्याह। कथमेतावता ममापसिद्धान्तप्रसङ्ग इत्याशङ्क्य प्रतिबन्द्यादेः सिद्धान्तत्वेनेष्टस्य विपरीततया स्वीकारादित्याह *प्रतीति* प्रतिबन्द्यादेः सिद्धान्तत्वेनाश्रयणमेवासिद्धमित्यत आह * मयेति * दर्शनविशेषाङ्गीकारेऽपि कथं प्रतिबन्द्यादेः स्वीकार इत्याशङ्क्य तदुपपादनार्थं दर्शनविशेषस्वरूपं दर्शयति * दर्शनेति * तथासति प्रतिबन्द्यादेरपि दूषणत्वेन मध्यपतितत्वेन स्वीकार इत्याह * तेष्विति * तत्तत्पदार्थनियमस्वीकारात्मकदर्शनविशेषाश्रयणे स्वीकृतनियतपदार्थव्याघातस्य प्रतिबन्द्यादेः स्वव्याघातकत्वादिना दूषणत्वमिष्टमर्थादित्यर्थः। एतल्लक्षणाधीना ममापसिद्धान्तापत्तिर्लक्षणमेवानुपपन्नं कथं तदापादकमित्यभिप्रेत्य परिहरति * नेति * अतिव्यापकत्वादिति हेतुमाह * मादिति * आत्मनः स्वयम्प्रकाशत्वमस्मत्सिद्धान्तस्तद्विपरीतजाड्यस्वीकारादपसिद्धान्तस्तवेत्यतिव्याप्तिरित्यर्थः।

स्वेति विशेषणस्य विवक्षितत्वान्नातिव्याप्तिरिति शङ्कते।

२४ स्वेतिविशेषणेन दोषवारणशङ्कानिरासः।

स्वसिद्धान्तस्तथाऽपेक्षित इति चेन्न । विशेषणपूरणमन्तरेण तदलाभात् अन्यथा सर्वत्र विशेषणोपादानप्रयासवैयर्थ्यं स्यात् । एवमेवाभ्युपगमे भवत एवापसिद्धान्तकृत्या निवृत्त्योऽऽपतेत् । त्वत्सिद्धान्ते शनशो हेत्वादौ विशेषणोपादानदर्शनात् । परसिद्धान्तहेतूनाञ्चानुपात्तविशेषणानामनैकान्तिकीकृत्य त्वच्छास्त्रे बहुशो दूषितत्वात् । प्रथमं स्वशब्दं विशेषणमनुपादाय दूषणभयेनेदानीं तत्करणे च हेत्वन्तरं नाम निग्रहस्थानं भवतः हेत्वन्तरं हि प्रथममविशेषणं साधकभागमभिधाय पश्चाद्विशेषणवत्तद्वचनम् ।

* स्वेति * विशेषणान्तरं लक्षणे न क्षिप्यते प्रक्षिप्यते वेति विकल्प्य प्रथमं दूषयति * नेति * पौरुषेयप्रयोगे विवक्षाया अप्यर्थविशेषज्ञापकत्वाद्विशेषणमन्तरेण विवक्षितार्थसिद्धिरिति आशङ्क्याह * अन्यथेति * सामान्यवत्वे सत्यस्मदादिबहिरिन्द्रियग्रहणार्हत्वादित्यादावपि तदुपादानमनर्थकं विवक्षात एव विशिष्टसिद्धेरित्यर्थः । तर्हि विशेषणं परित्यज्य विवक्षाबलादेव विशिष्टहेत्वाद्यभिधानं क्रियतां को दोष इत्यत आह *एवमिति* प्रयुक्तापसिद्धान्तकृत्या निवृत्त्य-व्यावृत्त्य-भवत एवाऽऽपतेदित्यर्थः। कुत इत्यत आह *

२ निवृत्त्यापत्तेः इति का० मु० पु० पा० ।

स्यादिति * विवक्षासिद्धार्थविशेषप्रकटनार्थमेव तत्र सर्वत्र विशेषणोपादानं नत्वपूर्वार्थप्रतिपादनार्थमित्यत आह * परेति * वेदोऽपौरुषेयोऽस्मर्यमाणकर्तृकत्वादित्यादिपरहेतूनामनुपात्तविशेषणानां जीर्णकूपादौ व्यभिचारेण दूषणं दृश्यते तदपि तव न सिद्ध्येद्व्यभिचारस्थलान्यत्वस्य विवक्षितत्वादतो विशेषणमन्तरेण न विशिष्टसिद्धिरित्यर्थः । स्वेतिविशेषणं तर्हि लक्षणवाक्ये निधीयत इति द्वितीयविकल्पे दूषणमाह * प्रथममिति * लक्षणस्य हेतुविशेषत्वादविशिष्टमुक्का पश्चात् विशिष्टाभिधाने हेत्वन्तरं निग्रह इत्यर्थः । तदुपपादनार्थं पराभिमतहेत्वन्तरनिग्रहलक्षणं दर्शयति *हेत्वन्तरं हीति * सद्धेतुप्रतिज्ञान्तरव्यावृत्त्यर्थं क्रमेण विशेषणम् ।

सिद्धान्तविपरीताभ्युपगम इति प्रथमं लक्षणं निर्दिश्य पश्चादपसिद्धान्त इति लक्ष्यनिर्देशतो निग्रहान्तरं स्यादिति भङ्गान्तरमाह ।

२५ अप्राप्तकालत्वनिग्रहापत्तिः ।

किञ्चैवं लक्षणमभिदधानस्य भवतोऽप्राप्तकालतापातः अप्राप्तकालोऽवयवविपर्य्यास इति, लक्ष्यमभिधाय हि लक्षणाभिधानं युक्तं तस्य च भवता विपर्य्यासः कृतः एवमेवाभ्युपगमे भवत एवापसिद्धान्तापातात् ।

*किञ्चेति* तदर्थं लक्षणमाह *अप्राप्तेति* येन क्रमेणाऽवयवाः पर्यस्यन्ते ततो विपरीततयाऽवयवपर्यासोऽप्राप्तकाल इत्यर्थः । अस्तु कथमेतावता ममाप्राप्त-

कालत्वमित्यत आह * लक्ष्यमिति * लक्षणस्य धूमादिवद्धेतुत्वाल्लक्ष्यस्य पर्वतादिवद्धर्मित्वाद्धर्मिवचनस्य च प्रतिज्ञात्वात्प्रथमन्तदुपन्यासो युक्त इत्यर्थः। एतावता वा किमित्यत आह * तस्येति * हेत्वभिधानं पूर्वं पश्चात्प्रतिज्ञावचनमित्येवमेवोपन्यासक्रमस्थाप्नोक्तदोष इत्यत आह * एवमिति * प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः क्रमेणोपन्यसनीया इति भवच्छास्त्रेऽङ्गीकारादित्यर्थः।

निर्विशेषणलक्षणे दूषिते पश्चाद्विशेषमिच्छतो हेत्वन्तरं निग्रहः स्यादित्युक्तं भवतु तत्र, यस्तु प्रथममेव सविशेषणं लक्षणमभिधत्ते तस्य किं दूषणमित्याकाङ्क्षायामाह।

२६ प्रथमं सविशेषणोक्तेऽपि लक्षणे दोषः।

यस्तु प्रथमत एव स्वेतिविशेषणमुपादत्ते तं प्रत्यनुपात्तविशेषणपक्षाभिहितो दोषो वक्तव्यः। मदीयो हि सिद्धान्तः स्वसिद्धान्त एव मम।

*यस्त्विति* तस्मिन्नपि पक्षेऽनुपात्तस्वेतिविशेषणे योऽतिव्याप्तिदोषः स स्यादित्यर्थः। अविशिष्टोक्तदोषः कथं विशिष्टे स्यादित्यत आह *मदीति* स्वशब्दस्य सर्वनामत्वादहमपि स्वशब्दवाच्य इति मदभ्युपगमविपरीताभ्युपगमादपसिद्धान्तस्तवेत्यर्थः।

वाक्छलमित्येतदभिप्रायेण लक्षणवाक्यं परो व्याकरोति।

२७ पुनर्लक्षणनिर्वचनेऽपि दोषः।

अत्र वाक्येऽभ्युपगमपदश्रवणात् अभ्युपगन्ता लभ्यते तस्य यः स्वकीयः स स्वशब्दार्थः पर्य्यवस्यतीति चेन्न। ममाभ्युपगन्तृत्वात् मयापि हि किञ्चिदभ्युपगम्यत एव। विपरीताभ्युपगन्ताऽपेक्षित इति चेन्न। अविशेषात्। सिद्धान्तविपरीताऽभ्युपगन्ता विपरीताभ्युपगन्तेति चेन्न। तथाप्यविशेषात्, ममापि त्वत्सिद्धान्तविपरीताभ्युपगन्तृत्वात्। स्वसिद्धान्तविपरीताभ्युपगन्ता तथाऽपेक्षित इति चेन्न। नूनमतिप्राज्ञोऽसि यत्, स्वपदमभ्युपगन्त्रा विशेषयितुं प्रवृत्तोऽभ्युपगन्तारमेव स्वपदद्वारा विशेषयसि, परस्पराश्रयादपि न बिभेषि, स्वपदेऽपि साधारण्यप्रत्यवस्थानं परोक्तं पुनस्तदवस्थमेवेति च न प्रतिसन्धत्से।

*अत्रेति* अभ्युपगमस्य क्रियात्वेन कर्त्राक्षेपादित्यर्थः। अभ्युपगमपदाक्षिप्ताभ्युपगन्तुर्यः स्वकीयः स स्वशब्दार्थ इति फलितं दर्शयति *तस्येति* तथाऽपि तदवस्थमिति परिहरति *नेति* ममाभ्युपगन्तृत्वेन मम स्वकीयोपि सिद्धान्तः स्वशब्दार्थ इति तद्विपरीताभ्युपगमादपसिद्धान्तापत्तिस्तदवस्थेति यावत्। शब्दानित्यत्वादि त्वया नाभ्युपगम्यत इति कथं तवाभ्युपगन्तृत्वमित्याशङ्क्य तदनङ्गीकारेऽपि प्रपञ्चानिर्वचनीयत्वाद्यभ्युपगम्यत इत्याह *मयेति* अभ्युपगन्तृमात्रन्न विवक्षितं किन्तु विपरीताभ्युपगन्तृत्वमि

ति नोक्तदोषो मम विपरीताभ्युपगन्तृत्वाभावादिति शङ्कते *विपरीतेति* स्वसिद्धान्तविपरीतानिर्वचनीयत्वाभ्युपगतत्वान्ममापि सैवातिव्याप्तिरिति परिहरति *नेति* विपरीताभ्युपगन्तृत्वेऽपि सिद्धान्तविपरीताभ्युपगन्तृत्वं नास्ति तथैव तव सिद्धान्तत्वात्तादृश एवाभ्युपगन्ता विवक्षित इति शङ्कते *सिद्धान्तेति* सिद्धान्तमात्रविपरीताभ्युपगन्ता विवक्षितः स्वसिद्धान्तविपरीताभ्युपगन्ता वेति विकल्प्य प्रथमं दूषयति *तथापीति* अविशेषमेवोपपादयति *ममेति* द्वितीयं शङ्कते *स्वेति* सोपहासं परिहरति *नेति* प्रज्ञामतीत्य वर्त्तस इति यावत्। तस्य यः स्वकीयः स स्वशब्दार्थ इत्यभ्युपगन्त्रा स्वशब्दस्य विशेष्यमाणत्वादभ्युपगन्तृनियमसिद्धौ स्वपदार्थनियमसिद्धिः स्वपदार्थनियमसिद्धावभ्युपगन्तृनियमसिद्धिरिति परस्पराश्रयान्न विभेषि यद्यस्मादिति हेतुमाह *यदिति* स्वाभ्युपगन्तृपदयोर्वादिप्रतिवादिसाधारणत्वाद्विशेषणान्तरमन्तरेण न नियामकत्वमिति पूर्वोक्तदूषणं न परामृशसीति हेत्वन्तरमाह * स्वेति *

स्वपदं हित्वा यच्छब्दविशेषणप्रक्षेपेणापसिद्धान्तलक्षणं शङ्कते।

२८ यच्छब्दप्रक्षेपेणापसिद्धान्तलक्षणनिरासः।

यस्य यः सिद्धान्तस्तेन तत्परित्यागोऽपसिद्धान्तस्तदीयइति चेत्। मैवम्। यस्य यः सिद्धान्त इति पुरुषव्यक्तिविशेषसिद्धान्तव्यक्तिविशेषपरत्वेऽसाधारण्याद-

व्यापकत्वं लक्षणदोषः । यस्येति सिद्धान्तसम्बन्धिन इत्यर्थे तेनेति सिद्धान्तसम्बन्धिनेत्यर्थे च भवतोऽपसिद्धान्तात् । तथा हि—सिद्धान्तसम्बन्धिनो मम यः सिद्धान्तः तस्य सिद्धान्तान्तरसम्बन्धिना भवता त्यागोऽस्त्येव ।

*यस्येति* कर्तृभेदसिद्धान्तभेदोदासीनेषु प्रसक्तिनिवारणाय विशेषणानि । तस्य यद्यपि त्यागोऽसौ तथापि न तत्सिद्धान्तस्य, तत्सिद्धान्तत्यागोऽपसिद्धान्त इति न पूर्वोक्तातिप्रसक्तिरित्यर्थः । यस्य य इत्यनयोः शब्दयोरसाधारणार्थत्व मुत साधारणार्थत्वमिति विकल्प्य प्रथमे लक्षणमव्यापकमित्याह * मैवमिति * यस्य यः शब्दयोः पुरुषसिद्धान्तविशेषवचनत्वेऽपसिद्धान्तान्तराव्याप्तिरित्यर्थः । यस्य यस्तेनेति शब्दानां साधारणार्थत्वमिति द्वितीयकल्पे लक्षणमतिव्यापकमित्याह * यस्येति * यस्य मम यः सिद्धान्तस्तेन मया तत्परित्यागाभावे कथमपसिद्धान्त इत्यतस्तदुपपादयति * तथाहीति * मम मदीयसिद्धान्तस्य च यच्छब्दार्थत्वात्तच्छब्दार्थत्वाच्च तत्रेत्यर्थः ।

त्यागशब्दबलेनातिप्रसक्तिपरिहारं शङ्कते ।

२९ त्यागशब्दबलेनातिव्याप्तिपरिहारशङ्कानिरासः ।

त्याग एव तस्य नास्ति मया परिगृहीतविषयत्वात् त्यागस्येति चेन्न । यदि त्यागोऽस्वीकारस्तदा न परिगृहीतविषयतानियमः । अथ स्वीकृतस्यास्वीकारस्तदा

मया स्वीकृतस्य भवता ऽस्वीकारो भवत्येव तथेति विशेषो नास्ति । अथ तेनैव स्वीकृतस्य तेनैवास्वीकारः सोऽपि न, तेनेति स्वीकर्त्रेत्यर्थे, ममापि स्वीकर्तृत्वेन मया स्वीकृतस्य भवताऽस्वीकारे तत्राऽपसिद्धान्तापातः ।

*त्याग एवेति* त्वया परिगृहीतस्य मयाऽस्वीकारात्याग एव न भवति कुत इत्यत आह *मयेति* स्वीकारपूर्वकास्वीकारस्त्यागः स्वसिद्धान्तस्य चाऽस्वीकारादित्यर्थः । त्यागोऽस्वीकारमात्रमुत स्वीकृतस्यास्वीकार उत तेन स्वीकृतस्य तेनैवास्वीकार इति विकल्प्य पराचष्टे *नेति* स्वीकृतविषयत्वात्त्यागस्येत्युक्तत्वाद्यद्यपि प्रथमविकल्पावकाशो नास्ति तथापि त्यागपदेनैव स्वीकृतास्वीकाराभिधाने सिद्धान्तपदवैयर्थ्यमिति प्रथमकल्पोऽकारीति द्रष्टव्यम् । दैवपरित्यक्ते कः परित्याग इति न्यायेनास्वीकृतपरित्यागायोगात्स्वीकारपुरःसरोऽस्वीकार एव त्यागपदार्थ इति द्वितीयं शङ्कते * अथेति * तथाऽपि लक्षणातिव्यापकत्वं तदवस्थमिति परिहरति * तदेति * येन मया स्वीकृतस्य यस्य मम यः सिद्धान्तस्तस्य भवता परित्यागः स्वीकृतास्वीकारो भवत्येवेति तवैवापसिद्धान्ततापत्तिरित्याशयः । तत्स्वीकारपुरःसरोऽस्वीकारस्तस्य त्याग इति विवक्षितत्वान्नातिव्याप्तिरिति तृतीयं शङ्कते *अथेति* तच्छब्दस्य विशेषार्थत्वमुत स्वीकर्तृमात्रार्थत्वमिति विकल्प्य प्रथमे पुरुषस्य व्यावृत्ततया तत्सङ्कुटिततल्लक्षणस्यापि व्यावृ-

त्तिरिति प्रथमं प्रत्याह *सोऽपीति* स्वीकर्तृमात्रवच-
नोऽयं तच्छब्द इति द्वितीय आस्तां निरवद्यत्वादित्यत
आह *तेनेति* तच्छब्दस्य स्वीकर्तृमात्रवचनत्वे स्वी-
कर्त्रा स्वीकृतस्य स्वीकर्त्रा परित्यागोऽपसिद्धान्त इत्युक्तं
स्यात्तथाच स्वीकर्त्रा मया स्वीकृतस्य प्रपञ्चानिर्वचनी-
यत्वादेस्तत्सत्तावत्वस्वीकर्त्रा त्वया परित्यागात्तवैवाप-
सिद्धान्त इत्यर्थः ।

यच्छब्दविशेषणं हित्वैकशब्दविशेषणोपादाने-
नापसिद्धान्तलक्षणं शङ्कते ।

३० एकशब्दं प्रक्षिप्य लक्षणशङ्कानिरासः ।

एकेनैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्त इति चेन्न । एकेनेति यद्येकसङ्ख्यायोगिनेति तदा मम यथैकसङ्ख्यायोगित्वं तथा तत्रापीति स एवापसिद्धान्तापातः । अथैकेनेत्यभिन्नेनेति तथापि स्वस्मादभिन्नत्वं तव च मम च समानम् । अन्यस्मादभिन्नत्वं न मम न वा तवेत्यपसिद्धान्तविषयोच्छेदः । अथ स्वीकर्त्तुरस्वीकर्तृतो न भिन्नत्वं तदाऽयमर्थः स्यात् स्वीकर्तृतो न भिन्नेनैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्तः तथा च स एव भवतोऽपसिद्धान्तः मया यदीयाङ्गीकारः किञ्चित्स्वीकर्त्तुरभिन्नस्य भवतस्तदीयास्वीकर्तृत्वात् ।

*एकेनेति* स्वीकारास्वीकारयोर्विषयैक्यं तत्क-
र्त्रैक्यं चापसिद्धान्त इति नोक्त दोष इत्यर्थः । एकत्वं

किमेकसङ्ख्यायोगित्वमुत अभिन्नत्वमिति विकल्प्य प्रथममनुवदति *एकेनेति* अर्थ इति शेषः। तथापि दोषतादवस्थ्यमित्याह *तदेति* एकत्वसङ्ख्यायोगिना मया स्वीकृतस्यैकस्यानिर्वचनीयत्वस्य त्वयैकेनास्वीकारादपसिद्धान्तापत्तिस्तवेत्यर्थः। द्वितीयं शङ्कते *अथेति* स्वस्मादभिन्नत्वं विवक्षितमुतान्यस्मादुत स्वीकर्तुरस्वीकर्तृत इति विकल्प्य प्रथमेऽतिव्याप्तिमाह *तथेति* अन्यस्मादभिन्नत्वं विवक्षितमिति द्वितीयकल्पे लक्षणाऽसम्भव इत्याह *अन्यस्मादिति* तृतीयं शङ्कते *अथेति* अस्मिन्पक्षे दूषणं स्पष्टीकर्तुं वाक्यार्थं दर्शयन्परिहरति * तदेति * यद्येवं ततः किमित्यत आह *तथाचेति* कथमित्यत आह * मयेति * योऽर्थो मया स्वीक्रियते भवांस्तन्न स्वीकुरुते भवांश्च स्वीकर्तुर्न भिद्यते किञ्चित्स्वीकर्तृत्वाद्भवत इत्यर्थः।

उक्तखण्डनं लक्षणान्तरेऽप्यतिदिशति ।

३१ लक्षणान्तरउक्तदूषणातिदेशः ।

एतेनैकस्यैकेन स्वीकारास्वीकारावपसिद्धान्त इत्यपास्तम् । मिलितयोरेवावयोरपसिद्धान्तापातात् ।

* एतेनेति * एकशब्दार्थानिर्वचनेनेत्यर्थः। यद्यप्ययमर्थ एव समाशङ्क्य निरस्तस्तथाऽपि सिद्धान्तविपरीताभ्युपगम इतिनिर्वचनप्रसङ्गादिदं तु स्वतन्त्रमेव लक्षणं कैश्चिदुक्तमतिदेशेन निरस्यत इति न पौनरुक्त्यम्। परामृष्टमेव हेतुं दर्शयति * मिलितयोरिति *आ-

१ मिलितयो रावयोरिति का० मु० पु० पा०।

वयोः– उभयोरेकसङ्ख्यायोगित्वेनैकत्वात् मत्स्वीकृतस्य त्वयाऽस्वीकारे स्वीकारयोरेकानिष्ठत्वात् मिलितयोरपसिद्धान्तनिग्रहापत्तिरित्यर्थः।

मिलितयोरपसिद्धान्तप्रसङ्गपरिहारं शङ्कते।

३२ दोषपरिहारशङ्कानिरासः।

अथ तत्स्वीकर्त्तुरेव तदस्वीकर्त्तुरभिन्नत्वमेकशब्देनाभिमतं तदापि यदि स्वीकारविषयाभिन्नत्वं तच्छब्देनोच्यते अस्वीकारविषयस्य, तदा स्वीकर्त्रन्तरस्वीकारविषयस्य भवता किञ्चित्स्वीकर्त्रभिन्नेनास्वीकारविषयतया स्वीकारकर्तृविषयाभिन्नत्वस्वीकारेण भवतोऽपसिद्धान्तप्रसङ्गस्य दुर्वारत्वात्। एकेन स्वीकर्त्रा न तु भिन्नेन स्वीकारास्वीकारौ विवक्षिताविति चेन्न। एकेन स्वीकर्त्रेत्येतदेव विवेचयन् भूयस्तदेवाकर्षन्नभिहिततद्दूषणगणाव्यावृत्तयापत्त्या कथय कथं न घनघनाघनसमयसमागमादीयमानतरलतरतरङ्गिणीवेणिजलविवर्त्तनिर्व्वर्त्तितावर्त्तचक्रचङ्क्रम्यमाणतृणकदम्बविडम्बनामनुभविष्यसि। स्वीकृत्यास्वीकारः स इति चेन्न। त्क्त्वार्थविवेचनेनोक्तबाधापातात् अस्वीकृत्य स्वीकारे च तदभावापत्तेः।

* अथेति * तस्यानिर्वचनीयत्वादेः स्वीकर्तुरेव तदस्वीकर्तृतोऽभिन्नत्वं एकशब्देन विवक्षितं मिलितयोश्चावयोर्भिन्नत्वमपीति तथाभूतमभिन्नत्वं नास्ति तेन नापसिद्धान्तप्रसङ्ग इत्यर्थः। एकस्यैकेनेत्यत्र वि-

षयवाचकैकशब्दप्रयोगात्स्वीकारास्वीकारविषयैक्य-
मपि विवक्षितश्चेत्तत्राह *तदाऽपीति* यदीत्यनूद्याति-
व्याप्त्या दूषयति * तदेति * स्वीकर्त्तृन्तरस्वीकारवि-
षयस्या ऽनिर्वचनीयत्वादेरस्वीकारकर्तृविषयाभिन्नत्वे-
न स्वीकारेण भवतोऽपसिद्धान्तप्रसङ्गस्य दुर्न्निवा-
रत्वमेवेति सम्बन्धः। तदुपपादयति * भवतेत्यादिना *
कर्त्रैक्यविशिष्टं स्वीकारास्वीकारविषयैक्यमपि सि-
द्धान्तलक्षणमिष्टं तदिह कर्त्रैक्याभावे कथमुक्तातिव्या-
प्तिरिति शङ्कते * एकेनेति * सोपहासं परिहरति *ने-
ति *एकेन स्वीकर्त्रेत्येतदेव विवेचयंस्त्वं भूयस्तदेके-
नेतिविशेषणमाकर्षन्नभिहितदूषणगणस्याऽव्यावृत्त्या-
पत्त्या हेतुना कथन्नानुभविष्यसि कथयेति सम्बन्धः।
किमित्यत आह * घनेति * घनमतिशयेन घनाघने-
न प्रवर्षणशीलमेघेन समयस्य वर्षाकालस्य समा-
गमे-प्रावृट्कालप्रादुर्भावे उदीयमान-मतिशयेन जा-
यमानं तरो-वेगो यस्यास्तरङ्गिण्या-नद्यास्तस्या वे-
णी-स्रोतोग्रभागस्तस्या- जलान्तर्विवर्त्तः- प्रतीपगम-
नं तेन निर्वर्त्तित-आवर्तो जलभ्रमणविशेषः चक्रं-तत्स-
मूहस्तस्मिन् चङ्क्रम्यमाणं-भ्रममाणं तृणकदम्बं तस्य
विडम्बनामनुकारम्। एतदुक्तम्भवति एकेन स्वीकर्त्रे-
त्यत्र किमिदमेकत्वमङ्ख्यायोगित्वं तद्विवचनार्थं प्र-
वृत्तेन तन्निर्वचनमन्तरेणैकेनेति पुनर्विशेषयितुमशक्यं
एकशब्दनिर्वचनसिद्धौ विशिष्टलक्षणसिद्धिस्ततसिद्धा-
वुक्तातिप्रसङ्गपरिहारासिद्धिस्ततसिद्धावेकवचननिर्वच-
नसिद्धिरिति चक्रकापत्तेरिति। उक्तदोषपरिजिहीर्ष-

येकशब्दपरित्यागेनापसिद्धान्तलक्षणं शङ्कते * स्वीकृत्येति * एककर्तृकयोः पौर्वापर्ये क्त्वाप्रत्ययस्याभिधानात्तदर्थोऽत्र विवक्षित इत्यर्थः । क्रिययोः पूर्वकालत्वमात्रं न प्रत्ययार्थः किंत्वेककर्तृकयोः तत्रैक्यनिरूपणद्वारा कथितबाधापत्तेर्नेदं युक्तमिति परिहरति * नेति * अव्याप्तिमाह * अस्वीकृत्येति * यत्र शब्दनित्यत्ववादी तदनित्यत्वमनङ्गीकृत्य पश्चादङ्गीकरोति तत्र भवत्यपसिद्धान्ते नेदं लक्षणमस्तीत्यव्याप्तिरित्यर्थः ।

एवमपसिद्धान्तलक्षणं निरस्य तस्य दूषणत्वोपन्यासप्रकारमपि निरसितुमुपक्रमते ।

३३ अपसिद्धान्तस्य दूषणत्वोपन्यासनिरासः ।

किञ्च सिद्धान्तपरित्यक्तरि यदपसिद्धान्तोद्भावनं तत् किं स्वीकृतदर्शनानुमतापसिद्धान्तदूषणभावे वादिनि उतानेवम्भूते । आद्ये पूर्व्वसिद्धान्तवदपसिद्धान्तेऽप्यनेन व्युथातुं शक्यते तत्र किं वक्तव्यं, न तावन्न वक्तव्यमेव किञ्चित् पूर्वसिद्धान्तत्यागादेवापसिद्धान्तेन निगृहीतत्वादिति युक्तम्, अपसिद्धान्ते तत्परिहारस्य तद्दूषणत्वान्यतरासिद्धेस्तेनाभिहितत्वात् । अन्यथा स्वाभिप्रायेणासिद्धिमुद्भाव्यैव कथां विच्छिन्दानो विजयेत परासिद्धिपरिहारं नापेक्षेतेत्यनसिद्धावप्यसिद्धिमुद्भाव्य परं पराजित्याप्रत्यूहं गृहान् प्रतिष्ठेत ।

* किञ्चेति * अनुमतोऽपसिद्धान्तस्य दूषणभावो दूषणत्वं यस्मिन् तत्तादृक् दर्शनं च तच्चेति तथोक्तं स्वीकृतं तादृक् दर्शनं येन स तथा । दूषणस्यैवाभिधानयोग्यत्वात् प्रथमकल्प एवास्त्वित्यत आह *आद्य इति *कश्चित्कुटिलमतिरपसिद्धान्तं स्वीकृत्यापि पश्चात्तन्न स्वीकरोति यथा पूर्वं स्वीकृतशब्दानित्यत्वादिं तं प्रति किन्नु वक्तव्यं स्यादपसिद्धान्तदूषणभावस्य तेन त्यक्तत्वात्तदुद्भावनमेव तं प्रति न युज्यत इत्यर्थः । पूर्वस्वीकृतपरित्यागरूपापसिद्धान्तनिग्रहेण निगृहीतत्वादपसिद्धान्ते परित्यक्तेऽपि न किञ्चिद्वक्तव्यमित्यत आह *न तावदिति* मृतस्य पुनर्मारणाभाववन्निगृहीतस्य पुनर्निग्रहाभावात्कुतो न युक्तमित्यत आह*अपसिद्धान्त इति *अमृतसेकेन पूर्वमृतिपरिहारवदपसिद्धान्तदूषणपरित्यागेन पूर्वापसिद्धान्तप्रसङ्गस्यान्यतरासिद्धिलक्षणपरिहारस्य तेनाभिधीयमानत्वादित्यर्थः । यद्यपि प्रतिवादी विषदतेऽपसिद्धान्ते तथापि मदभिप्रायेण तस्य निगृहीतत्वान्न वक्तव्यमित्यत आह * अन्यथेति * अनित्यः शब्दः कृतकत्वादित्यादौ स्वाभिप्रायेणासिद्धिमुक्त्वा परं निगृह्य विजयी स्यादित्यर्थः। तत्र परेणाऽसिद्धेः परिह्रियमाणत्वान्न विजयी स्यादित्यत आह* परेति * यथा परेणाऽपसिद्धान्तस्यान्यतरासिद्धिपरिहारो नापेक्ष्यते तथा परोऽप्यसिद्धिपरिहारं नापेक्षेतेत्यर्थः । अस्तु तथा वा को दोष इत्यत आह *अनसिद्धाविति * सम्यग्घेतावप्यसिद्ध्यादिकमुद्भाव्य परान्निगृह्य विजयप्र-

सङ्ग इत्यर्थः ।

इममेवार्थं स्पष्टीकर्तुं पुनश्चोद्यमुद्भावयति ।

३४ उक्तार्थानुवादः ।

निगृहीतस्य तस्यापरमभिधानमनादरणीयमेवेति चेन्न । अन्यतरासिद्ध्या निग्रहपरिहारस्यैव तेनाभिधीयमानत्वात् । तथाऽप्यनादरणेऽनसिद्धान्तसिद्धिमुद्भाव्य पराभिधीयमानमसिद्धिपरिहारमनादृत्य विजयतैवेत्युक्तम् । अथ मन्यसे मध्यस्थेनैतद्विचारणीयं किमनसिद्धान्तेनासिद्धिरुक्ता अनपसिद्धान्ते वाऽपसिद्धान्तः, एतद्विचार्य्य तेनैव जयपराजयाववधारणीयौ, तदर्थमेव मध्यस्थोपस्थापनमिति । न । तर्हि वादिना साधनेऽभिहिते दुष्टमतदित्यभिधायैव प्रतिवादिना निवर्त्तनीयं, मध्यस्थस्तु परमार्थतो दुष्टत्वमदुष्टत्वं वा तस्य साधनस्य विचार्य्य जयपराजयाववधारयिष्यति, सोऽयं प्रसूय निर्वृत्तीभूतपिकदाम्पत्यापत्यपोषणकृतमहायासवायसव्यसनं समासादयिष्यति मध्यस्थो वराकस्तावकदुष्परामर्शप्रकर्षेण ।

* निगृहीतेति * अपसिद्धान्तोद्भावनेन पूर्वमेव तस्य निगृहीतत्वात्तस्य न मयाऽपसिद्धान्तोऽङ्गीक्रियत इति यद्वचनं तन्नादरणीयं निगृहीतवचनत्वादित्यर्थः । अपसिद्धान्तनिग्रहस्यान्यतरासिद्ध्या परिह्रियमाणत्वादनिग्रहत्वमेवेति परिहरति * नेति * अन्यतरा-

सिद्धस्यापि निग्रहत्वादेव न तद्वचन आदर इत्यत आह * तथापीति * स्वीकृत्यापसिद्धान्तं पश्चाद्यो विप्रतिपद्यते तं प्रति न किञ्चिद्वक्तव्यं कथकेन, मध्यस्थस्यैव तत्र व्यवस्थाहेतुत्वादिति शङ्कते *अथेति* कचिदसिद्धावुद्भावितायां किमसिद्धेऽसिद्धोद्भावनमुतानसिद्धे तथाऽपसिद्धान्त उद्भावितेऽपि किमपसिद्धान्तेऽपसिद्धान्त उद्भावित उतानपसिद्धान्त इत्येतद्विचार्य यद्यसिद्धादावसिद्ध्याद्युद्भावनं तर्हि तदुपदर्शकस्य जय इतरस्य पराजयोऽन्यथा वैपरीत्येन जयपराजयाविति मध्यस्थो निर्णेष्यतीत्यर्थः । कुत इत्यत आह * एतदिति * विचार्य जयपराजयनिर्णयार्थत्वान्मध्यस्थवरणस्येत्यर्थः । अतिप्रसङ्गेन परिहरति * तर्हीति * अनित्यः शब्दः कृतकत्वादित्युक्तेऽसिद्ध्युद्भावनेन वादिनं निगृह्य प्रतिवादी तस्यासिद्धिपरिहारवचनेऽनादरं कुर्यादित्यर्थः । तर्हि विजयासिद्धिरतोऽन्यतरासिद्धिपरिहारवचने आदर इत्यत आह * मध्यस्थेति * एवमर्थमुपपाद्योपहसति * सोऽयमिति * प्रसूय–जनयित्वा निर्वृत्तीभूतश्चरितार्थो यः पिकस्तदपत्यपोषणार्थं कृतो महानायासो येन वायसेन तद्व्यसनमिव व्यसनं प्राप्तवान्कोकिलापत्यपोषणवत् वायसस्य मध्यस्थस्य निष्प्रयोजनप्रयास इत्यर्थः ।

यद्यप्यसावधुना विप्रतिपद्यतेऽपसिद्धान्तेऽपि तथापि न तावता तस्य किञ्चित्प्रयोजनमिति शङ्कते ।

३५ पूर्वानुमत्यैवाऽपसिद्धान्तोपन्यास इति शङ्कानिरासः ।

अथोच्यते सम्प्रति विप्रतिपद्यतां नामापसिद्धा-

न्तेऽप्यसौ किमेतावता पूर्व्वं स्वीकृतापसिद्धान्तदूषणभावस्य दर्शनस्य तावत्तेन स्वीकरणमकारि तदेवादायापसिद्धान्तस्योपन्यासो युक्त इति । मैवम् । यदीदानीन्तन्यननुमतिरस्य नादियते अस्यामुपजातायामपि प्राक्तनानुमतिमादायैव च दूषणप्रवृत्ति स्तदाऽपसिद्धान्तस्यापि कुतोऽवकाशः स हि पूर्व्वानुमतस्येदानीमननुमतिमाश्रित्यैव प्रवर्त्तते नान्यथा । तस्मात् स्वीकृतापसिद्धान्तदूषणभावमपि वादिनं प्रति विप्रतिपत्तिकाले साधनीयमपसिद्धान्तस्य दोषत्वमिति द्वितीयानवकाशः । यस्य तु सौगतादेर्मतेऽपसिद्धान्तो न दूषणं तं प्रत्यवश्यं साधनीयमेवास्य दूषणत्वम् ।

* अथेति * अन्यतरासिद्ध्या परोद्भावितापसिद्धान्तनिग्रहपरिहारप्रयोजनमस्तीत्यत आह * पूर्वमिति * स्वीकृतोऽपसिद्धान्तदूषणभावो येन दर्शनेन तस्येति विग्रहः । अपसिद्धान्तदूषणभावदर्शनास्वीकारबलादेव कथं तदुपन्यास इत्यत आह * तदिति * पूर्वतनानुमतिरेव कारणं निग्रहोद्भावने नाधुनातनीत्यर्थः । पूर्वानुमतिवदिदानींतनानुमतिरप्यादरणीयेति परिहरति * मैवमिति * इदानींतनानुमतिमनङ्गीकृत्यापसिद्धान्तदूषणमुद्भाव्यते चेत्पूर्वं शब्दानित्यत्वमङ्गीकृत्येदानीं तदनङ्गीकारेऽप्यपसिद्धान्तोद्भावनं न स्यादिदानींतनानङ्गीकारस्याप्रयोजकत्वादित्यर्थः । इ-

दानीन्तनानुमतेरप्रयोजकत्वे कुतोऽपसिद्धान्तनाव-काश इत्यत आह * स हीति * एककर्तृकैकविषय-स्वीकारास्वीकारसमुच्चयात्मकत्वात्तस्येत्यर्थः। इदा-नींतनापसिद्धान्तानुमत्यभावे तदुद्भावनमशक्यं त-स्मादसावापादनीयेति प्रथमकल्पमुपसंहरति * त-स्मादिति * अनङ्गीकृतापसिद्धान्तदूषणभाववा-दिनं प्रति तदुद्भावनमिति द्वितीयविकल्पोऽस्त्वित्यत आह *द्वितीय इति* अङ्गीकृतदूषणभावं प्रत्यपि तद्वि-प्रतिपत्तिकाले यदा नावकाशस्तदाऽनङ्गीकृततत्त्वं प्रति तदनवकाश इति किमु वक्तव्यमित्यर्थः। तर्ह्यनङ्गीकृता-पसिद्धान्तस्य दूषणत्वे स्वीकृतपरित्यागे किमु वक्तव्य-मित्यत आह * यस्येति * अपसिद्धान्तो दूषणत्वेना-पाद्य वक्तव्य इत्यर्थः।

योऽपसिद्धान्ते विप्रतिपद्यते तं प्रत्यपसिद्धान्तस्य दूषणत्वमापादनीयमिति यदुक्तं तदयुक्तमेकैकस्य स्वीकारास्वीकारसमुच्चयव्याघातस्यैवापसिद्धान्तमुपे-क्ष्य वक्तव्यत्वादित्याशङ्क्याह।

३६ अनङ्गीकृतापसिद्धान्तदोषं प्रति व्याघात उद्भाव्य इति शङ्का-निरासः।

नच वाच्यं योऽपसिद्धान्ते विप्रतिपत्तिं करोति तं प्रति व्याघात एवाभिधेयः, दर्शनविशेषं स्वीकुर्वता प्रथमं तद्द-र्शनान्तर्निवेशिनः प्रतिबन्दीदूषणत्वादेस्तेन स्वीकारात् पश्चात्तस्यैवास्वीकार स्तावेतौ स्वीकारास्वीकारावेकैक-स्य व्याहताविति। यद्ययमपसिद्धान्तात्मैव व्याघातः

तदाऽपसिद्धान्तदूषणत्वेऽपि विप्रतिपन्नस्य विप्रतिपत्ति-मव्युदस्य नाभिधातुं युक्तः । अथ दूषणान्तरमयं व्याघातोऽपसिद्धान्तमनुपजीव्य सम्भाव्यमानोद्भावन स्तदा सार्व्वत्रिकापसिद्धान्तोदाहरणेऽयमेवास्तु किमपसिद्धान्तस्य दूषणत्वाङ्गीकारेण ।

* नचेति * दर्शनविशेषं स्वीकुर्वता तदन्तःपातितया प्रतिबन्ध्यादेः स्वव्याघातकत्वादिना दूषणत्वमङ्गीकृतं पश्चात्तत्याग एकोपाधावेकस्य भावाभावसंसर्गव्याघात इत्यर्थः । कुतो न वाच्यमित्याशङ्क्यायं व्याघातोऽपसिद्धान्तात्मा ततो दूषणान्तरं वेति विकल्प्य प्रथममनूद्य दूषयति * यदीति * द्वितीयं शङ्कते * अथेति * अर्थान्तरत्वेऽपि तदुपजीव्यत्वेऽपसिद्धान्तोऽवश्यमापादनीय इत्याशङ्क्याह * अपसिद्धान्तमिति * तर्हि सर्वानुगतैकदूषणसम्भवे क्वचित्स्वीकृतास्वीकारेऽपसिद्धान्तोद्भावनं क्वचित् व्याघातोद्भावनमिति द्वैरूप्यं गौरवादनुपपन्नमिति परिहरति * तदेति *

प्रथममुद्भावितस्यापसिद्धान्तस्य परदूषितस्य परित्यागे व्याघातोद्भावने प्रतिज्ञाहानिर्निग्रहः स्यादिति दूषणान्तरमाह ।

३७ व्याघातोद्भावने प्रतिज्ञाहान्यापत्तिः ।

किञ्चैवमपसिद्धान्त उद्भाविते पश्चात्तद्विप्रतिपत्तावुपजातायामपसिद्धान्तमुपेक्ष्य व्याघातलक्षण-

स्यास्य दोषान्तरस्याभिधाने प्रतिज्ञाहान्यापत्तेः प्रतिज्ञाहानिः स्वीकृतोक्तत्याग इति। एवं प्रथमं किञ्चिद्दूषणमुक्त्वा तत्परिहारिणि दूषणान्तराभिधाने न प्रतिज्ञाहानिरिति गतं प्रतिज्ञाहान्यादिभिर्निग्रहैः।

* किञ्चेति *: तदुपपादनाय तल्लक्षणमाह * मतीति * स्वीकृतोक्तपरित्यागेपि प्रतिज्ञाहान्यनङ्गीकारे को दोष इत्यत आह * एवमिति * एवंसति तत्र किञ्चित् दूषणं साधनं चाऽभिधाय पश्चात्तत्परित्यागेन दूषणसाधनान्तराभिधाने प्रतिज्ञाहानिरित्येतल्लयमियादविशेषादेवं च निग्रहान्तराण्यपि न सिद्ध्येरन्नित्यर्थः।

स्वीकृतोक्तपरित्याग एवात्र न पूर्व,मपासिद्धान्तनिग्रहमुद्भाव्य तत्साधनार्थमेव व्याघातलक्षणनिग्रहान्तरस्योद्भाव्यमानत्वान्नहि साध्यं प्रतिज्ञाय हेतूपन्यासे साध्यपरित्याग इति शङ्कते।

३८ प्रतिज्ञाहान्यापत्तिर्नेतिशङ्कानिरासः।

प्राक् प्रतिज्ञातदोषनिर्व्वाहार्थमेव निग्रहान्तरकथनान्नैष दोष इति चेन्न। पूर्व्वनिग्रहपरिहारमकृतवति तेनैव पराजिते निग्रहान्तरोपन्यासस्यायुक्तत्वादिति। नचानेन भयेन भवता व्याघात एवाभिधेयः प्रथमं नापसिद्धान्त इति वाच्यम्। अपसिद्धान्तवैयर्थ्यप्रसङ्गात् सर्व्वत्रापसिद्धान्तोदाहरणे व्याघाताभिधानस्यैवमङ्गीकर्त्तव्य-

स्यात् । न हि कश्चिच्छक्यतेऽत्रधारयितुं मयाऽपसिद्धान्त उद्भाविते नायं विप्रतिपत्स्यत इति ।

*प्रागिति*पूर्वोद्भाविते निग्रहे परिहृते व्याघातनिग्रहोद्भावनमुनापरिहृत एवाद्ये प्रतिज्ञाहानिरेव, यदि द्वितीयस्तत्राह * नेति * अकृतपरिहारे पूर्वनिग्रहे निग्रहान्तरोद्भावनेऽधिकं नाम निग्रहस्थानं स्यादित्यर्थः । यद्यपसिद्धान्तमभिधाय तद्विप्रतिपत्तौ सत्यां व्याघात उद्भाव्येत तदा स्यात्प्रतिज्ञाहानिः प्रथमत एवापसिद्धान्तमुपेक्ष्य व्याघात एवोद्भाव्यत इत्याशङ्क्याह *नचेति* कुतो नैव वाच्यमित्यत आह *अपसिद्धान्तेति * स्वीकृतपरित्यागोऽपसिद्धान्त इति लक्षणात्तस्य निग्रहत्वप्रतिपादनवैयर्थ्यप्रसङ्ग इत्यर्थः । न वैयर्थ्यमपसिद्धान्तदूषणत्वमङ्गीकृत्य यः स्वोक्तं परित्यजति स्वीकृतमपि तं प्रति तदुद्भावनस्यार्थवत्त्वादित्यत आह *सर्वत्रेति* अपसिद्धान्तदोषमनङ्गीकृतवतः सुगतादेर्नये यथा व्याघात एवं तद्दूषणत्वमङ्गीकुर्वतो नैयायिकादेर्मतेऽपि व्याघात एव दूषणत्वेनोपन्यसनीय एकरूपप्रयोजनस्यैव युक्तत्वादित्यर्थः । यत्र मयाऽपसिद्धान्त उद्भाविते वादी विप्रतिपत्स्यत इति निश्चयस्तत्र व्याघातोद्भावनमितरत्रापसिद्धान्तस्येति विभागोऽप्यनुपपन्न इत्याह * नहीति * तदुद्भावनात्प्राक् प्रमाणाभावेन विप्रतिपत्त्यभावं निश्चेतुमशक्य इत्यर्थः ।

विप्रतिपन्नम्प्रत्यपसिद्धान्तस्य दूषणत्वमापादनी-

यमित्युक्तमङ्गीकरोति ।

३९. विप्रतिपन्नं प्रत्यपसिद्धान्तदूषणत्वप्रसाधननिरासः ।

नन्वस्त्वेवं विप्रतिपन्नं प्रति अपसिद्धान्तस्य दूषणत्वं प्रसाधनीयमिति । मैवम् । येनाप्यस्वीकारदण्डेन दूषणेन तत्स्वीकारयिष्यसि तदनङ्गीकारस्यापि सम्भवात् । उक्तञ्च सौगतैः—

"न हि शास्त्राश्रया वादा भवन्ती ति
नापसिद्धान्तो निग्रहाधिकरणमिति"
रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः ।
विलब्धा बत केनामी सिद्धान्तविषयग्रहा"इति च ।

* नन्विति * दूषणत्वेन तदङ्गीकृतव्याघातादिदण्डेनापसिद्धान्तस्य दूषणत्वं साधनीयं तदपि न सम्भवति पूर्वसिद्धान्तवदेव व्याघातदण्डदूषणत्वादपि व्युत्थानसम्भवादिति परिहरति * मैवमिति * एवम्भूत एव नास्ति यः स्वशास्त्रस्वीकृतमपि न स्वीकरिष्यतीत्यत आह * उक्तं चेति * रिक्तस्य–ज्ञानलवेनापि हीनस्य जन्तो–र्जननमरणादिधर्मिणः संसारिणो जातस्य–केवलं जन्ममात्रप्रयोजनस्यातएव गुणदोषमपश्यतः–गुणदोषविवेकहीनस्य सिद्धान्तविषयग्रहाः-क्षणिकत्वस्थिरत्वादिसिद्धान्तस्वीकाराः केन–पापिष्ठेन

१ मूलानुसारेण प्रथमं नहीत्यादिग्रन्थव्याख्यानमेवोचितं परं पुस्तकत्रयेऽपि तथैवोपलम्भात्तथैव स्थापितम् ।

विलब्धा—अन्यथाऽर्थं जानतैवाऽऽहार्यभ्रान्तिमूलवाक्येन प्रतिपादिता इत्यर्थः । बतेति खेदे । कथायां प्रवृत्तत्वात्कथायाश्च शास्त्राश्रयत्वात्तस्य च सिद्धान्तविषयत्वात्सिद्धान्तः स्वीकार्य इत्यत आह * न हीति * आहत्यापसिद्धान्तस्यानिग्रहत्वे वचनमाह * नेति * निग्रहत्वाधिकरणमिति भावपरो निर्देशः ।

इदानीं तात्पर्यपरिशुद्धौ तदूदूषणत्वसमर्थनमुदयनोक्तं दूषयितुमुपन्यस्यति ।

४० उदयनमतारम्भः ।

तत्र कश्चिदाह—शास्त्रमनाश्रित्य कथारम्भानुपपत्तिः यदा हि क्षणभङ्गसाधनप्रयोक्ता अस्फूर्त्तिमता स्थिरत्वादिना सिद्धसाधनमुद्भाव्य निगृह्यते तदा किं कुर्यात् । प्रथमात्विप्रतिपत्तिविरोधमुद्भावयेदिति चेत् एवं तर्हि विप्रतिपत्त्यनुगुणप्रमेयान्तरव्यतिक्रममप्युद्भावयेदेव, अन्यथा विप्रतिपत्तिव्यतिक्रममप्युपेक्षेत, न खलु तत्तदनुगुणव्यतिक्रमयो र्विरोधापत्तिं प्रति कश्चिद्विशेषः । न चैकपुरुषार्थानुगुणाङ्गाङ्गिभावव्यवस्थितपदार्थजातव्युत्पादनादन्यच्छास्त्रं नाम, तस्मात् क्षणिकत्वस्वीकारे तदनुगुणापोहादिसमस्तस्वीकारः तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति सर्व्वज्ञोऽपि नान्यथा प्रमातुं क्षमः । न च समस्ततदनुगुणपदार्थजातं कथारम्भे वर-

शब्देनाभिधातुमुचितं तदैव शास्त्रप्रणयनप्रसङ्गात् परिषदनपेक्षितत्वाच्च । नच तद्व्यतिक्रमोद्भावनाय समस्ततदनुगुणोहः परस्परस्य शास्त्रमनाश्रित्य शक्यः । नच तत्तदनुगुणव्यतिक्रमे तदुपेक्षणे वा तत्त्वप्रतिपत्तिजयाविति अकामेनापि तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयमिति ।

* तत्रेति * कथारम्भानुपपत्त्या शास्त्रमाश्रयणीयं पक्षप्रतिपक्षपरिग्रहरूपत्वात्कथाया इत्यर्थः । अस्तु शास्त्राश्रयणं तावताऽपसिद्धान्तस्य दूषणत्वे किमायातमित्यत आह * यदा हीति * यत्सत्तत् क्षणिकं यथा जलधरः सन्तश्चामी भावा इति क्षणभङ्गसाधनानुमानप्रयोक्ता यदा सद्दूषणापरिस्फूर्तिमता सिद्धसाधनेन निगृह्येत तदा किंकुर्यात् तम्प्रति तदनुद्धारवचनं तस्यैवाप्रतिभानिग्रहेण पराजयप्रसङ्गस्तदुद्धारे वाऽपसिद्धान्तादन्यो निग्रहो नास्तीत्यर्थः । प्रथमोक्तविप्रतिपत्तिप्रतिपादकवाक्यार्थविरोधस्वीकारद्योतकवाक्ययोद्भावनात्तयोर्वाक्यांशयोः परस्परविरुद्धार्थत्वा दस्त्येव व्याघातो निग्रहान्तरं ततः पूर्वापरव्याघातलक्षणं निग्रहान्तरं किमिति नोद्भावयेदित्याशङ्कने * प्रथमेति * परिहरति *एवमिति* यत्र स्थिरवादी स्थैर्यलक्षणाविप्रतिपत्तिविषयाविपरीतं क्षणिकत्वं स्वीकृत्य केवलं दूषणं न वदति किन्तु विप्रतिपत्तिं परिहरति प्रतिपत्त्यनुगुणं यत्प्रत्यभिज्ञाप्रामाण्यं तत्र तद्विपरीतं स्वीकृत्य तत्रापि न्यायेन विरोधोऽवश्यं वाच्योऽवचने पूर्ववत्तस्य पराजयप्रसङ्गादित्यर्थः । प्रथम-

विप्रतिपत्तिव्यतिक्रमोद्भावनेपि तदनुगुणप्रमेयान्तरव्यतिक्रमः कस्मादुद्भाव्यत इत्यत आह *न खल्विति* तत्तदभावोपनायकयोर्यथा विरोधस्तथा तदनुगुणभावाभावोपनायकयोर्विरोधोऽविशिष्ट इत्यर्थः। तथाप्यपसिद्धान्तसमाश्रयणस्य किमायातमित्याशङ्क्य तदर्थं शास्त्रस्वरूपमाह * नचेति * एकपुरुषार्थसम्बन्धोपकार्योपकारकभावव्यवस्थितस्य पदार्थजातस्य कार्त्स्न्येन प्रतिपादको ग्रंथः शास्त्रं शास्त्रद्वये निष्प्रयोजने प्रकरणादौ चातिव्याप्तिपरिहाराय विशेषणानि। इदमत्रोदाहरणं स्थिरार्थज्ञानं निःश्रेयसाधिगमः स्थैर्यं च प्रत्यभिज्ञायमानत्वात्तन्मानत्वं च मानलक्षणयोगात्तल्लक्षणं च तर्कतोऽतिव्याप्त्यादिपरिहारेणेत्यादि स्थिरवादिना स्वीकार्यं तथा लक्षणपक्षादावपि द्रष्टव्यम्। यस्मादेव लक्षणं शास्त्रं तस्मादिति फलितमुपसंहरति * तस्मादिति * क्षणिकत्वं प्रतिजानता प्रत्यभिज्ञाप्रामाण्यं खण्डनीयं तदप्रामाण्यं चानुगतभावे न सिध्येत् अनुगतसामान्यं शब्दार्थो नास्ति किन्तु तदपोहस्तच्छब्दार्थ इत्यादि स्वीकार्यमित्यर्थः। तेषां हेतुहेतुमद्भावादेकपरित्याग इतरपरित्याग इत्याह *तदेकेति* तदनुगुणपरित्यागे तत्परित्यागे वाऽनुगतस्वीकृतपरित्यागादपसिद्धान्तसिद्धिरित्याशयः। स्यादेतत्सर्वं कथारम्भस्य शास्त्राश्रयणापेक्षित्वे, तदेव कुतः। शास्त्रापेक्षाव्यतिरेकेण तत्तदनुगुणपदार्थप्रतिपादनासम्भवादिति चेन्न। कथारम्भ एव तेषां स्वशब्देनाभिधानसम्भवादित्याशङ्क्याह * नचेति *

कुत इत्यत आह * तदेति * तत्तदनुगुणपदार्थजातप्रतिपादने तदैव शास्त्रप्रणयनप्रसङ्ग इत्यर्थः। पूर्वप्रणीतशास्त्राभावे तत्परिज्ञातृपरिषदोऽभावेन तदनपेक्षत्वं च स्यादित्याह * परिषदिति * पक्षप्रतिपक्षपरिग्रहेऽपि नान्योन्यशास्त्रापेक्षा स्वीकृततदनुगुणव्यतिक्रमोद्भावनस्य तदैव तत्तदनुगुणप्रमेयोहेनापि सम्भवादित्याशङ्क्याह * नचेति * तर्हि तदनुगुण उत्क्रम्यतां तद्नुक्रमो वाऽपेक्ष्यतां परेण को दोष इत्यत आह *नचेति* स्वीकृतपरित्यागोपेक्षायामन्यस्यापि दूषितस्य परित्यागेनान्यस्योपन्यासस‍म्भवान्न कथापर्यवसितिरित्यर्थः। तत्वनिर्णयो वादफलं विजयो जल्पादेः। पूर्वपक्षमुपसंहरति *इत्यकामेनेति* एकपुरुषार्थप्रतिबद्धाङ्गाङ्गिभावव्यवस्थितपदार्थजातप्रतिपादनमधिकृत्य शास्त्रं कथामाकाङ्क्षमाणैरनिच्छद्भिरप्यच्छमतिभिराश्रयणीयमित्यर्थः।

यदनङ्गीकारे तदनुगुणपदार्थविरोधमुद्भाव्यं मन्यसे स एव निरूपयितुमशक्य इत्यभिप्रेत्य परिहरति।

४१ उदयनमतखण्डनारम्भः।

तदेतदपेशलम्। किं तदनुगुणं प्रमेयान्तरं यदनभ्युपगमे विरोधमुद्भावयेदित्युच्यते। द्वयमभ्युपगम्यं सम्भवति। एकं तावद्यदनभ्युपगमे कथैव प्रवर्त्तयितुमशक्या यथा प्रमाणादि सर्व्वकथकसिद्धम्। इतरत्तु प्रतिदर्शनसिद्धं किञ्चित् यथा क्षणभङ्गेश्वरादि। तत्र यदि

प्रथममभ्युपगम्यैव कथाप्रवृत्तिरिति तत्स्वीकारे पश्चात्तदनङ्गीकारोऽपसिद्धान्तः। तन्न। स्वव्याघातकत्वेन तस्य भवद्भिरेव जातित्वाङ्गीकारात्। जातेश्च निरनुयोज्यानुयोगे निवेशात्।

*तदिति* तदुपपादनीयाभ्युपगम्यं यत्तदाह *द्वयमिति* तदेव द्वयमपि विविच्य दर्शयति *एकमिति* तदेवोदाहरणेन दर्शयति *यथेति* इदमेकमस्तु किं तदपरमभ्युपगम्यमित्यत आह *इतरदिति *तदप्युदाहरणेन दर्शयति *यथेति* क्षणभङ्गो बौद्धस्य, नैयायिकादेरीश्वरो, नियोगः प्राभाकरादेः, स्वतन्त्रसिद्धत्वादित्यर्थः। एवमभ्युपगम्यद्वयं विविच्य दर्शयित्वा ऽपसिद्धान्तस्वरूपमनुवदति दूषणाय *तत्रेति* कथाप्रवृत्त्यनुपपत्त्या प्रमाणाद्यङ्गीकृत्य पश्चात्तदनङ्गीकारोऽपसिद्धान्तो मतो यदि इत्यर्थः। निग्रहान्तरत्वान्नासावपसिद्धान्त इति दूषयति *तन्नेति * कथामूलतया स्वीकृतस्य परित्यागः स्वीकृतकथाविरोधितया स्वव्याघातकत्वेन जातिरिति भवद्भिरेव स्वीक्रियते इत्यर्थः। जातिरप्यपसिद्धान्तान्तर्भूतैवेति नेत्याह *जातेश्चेति*

प्रतिदर्शनसिद्धक्षणभङ्गाद्यभ्युगम्य पश्चात्त्यागोऽपसिद्धान्त इति द्वितीयं दूषयति।

४२ द्वितीयपक्षनिरासः।

नापि द्वितीयः दर्शनभेदनियतं हि क्षणभङ्गादि यत्कथारम्भेऽप्युपगन्तव्यं तत् किं तदभ्युपगमस्य प्रकृ-

तत्साध्यापोहाभ्युपायतयो,त तन्नान्तरीयकतया । न प्रथमः क्षणभङ्गसाधनप्रस्तावे अपोहादि परित्यजतः सौगतस्यापसिद्धान्ताभावापत्तेः तदभ्युपगमस्य तदनुपायत्वात् । अन्योन्याभ्युपगमोपायत्वे चान्योन्यविचारस्य निष्पत्तिरेव न स्यात् विचारे सति प्रामाणिकत्वप्रतीतौ तदभ्युपगमः तदनभ्युपगमे च विचार इति । अभ्युपगतोपायत्यागविषय एवायमपसिद्धान्तो नान्यत्रेति चेन्न । यो हि यदुपायः तमभ्युपगम्य विचारः प्रवर्त्तयितव्य इत्येव कुतः, तस्योपायतया तेन विचारः प्रवर्त्तयितव्य इत्येव युक्तं न तु तदभ्युपगमोऽपि तावता तदुपायः स्यात् तस्य च तदभ्युपगमस्य च पृथक्कारणत्वाभ्युपगमे प्रमाणस्योपदर्शयितुमशक्यत्वात् शक्यत्वेऽपि वा तत्रापि स्वाभ्युपगमः किमित्यभ्युपेयो वैयर्थ्यात् उपायत्वादेव परस्य तथा प्रतीत्युपपत्तेः ।

*नापीति* तदुपपादनार्थैव विकल्पयति *दर्शनेति* तदभ्युपगमस्तस्य प्रकृतसाध्यहेतुत्वादुत व्यापकत्वादिति विकल्पार्थः । प्रथमं दूषयति * नेति * उपायतया स्वीकृतस्य परित्यागोऽपसिद्धान्तश्चेत् क्षणिकत्वसाधनकालेऽपोहादित्यागोऽपसिद्धान्तो न स्यादित्यव्याप्तिरित्यर्थः । कुत इत्यत आह * तदिति * क्षणिकत्वस्यैवापोहादिहेतुत्वेनापोहादेः क्षणिकत्वोपा-

यत्वाभावादित्यर्थः । क्षणिकत्वाभ्युपगमो यथाऽपोह्याद्यभ्युपगमोपायस्तथाऽपोह्याद्यभ्युपगमोपि क्षणिकत्वोपगमस्येत्यत आह *अन्योन्येति* अन्योन्योपायत्वेऽन्योन्यविचारानिष्पत्तिरेव कस्मादित्यत आह * विचारे सतीति * एकस्य विचारेण प्रामाणिकत्वप्रतीतावन्यस्य तदुपायतया प्रामाणिकत्वमेवमितरत्रापीति परस्पराश्रयत्वमित्यर्थः । अस्तु तर्हि क्षणिकत्वस्यैवापोह्योपायत्वादपोह्यप्रस्तावे क्षणिकत्वप्रस्तावे तत्त्याग एवापसिद्धान्त इति शङ्कते * अभ्युपगतेति* अपोह्यादि विचारयता क्षणिकत्वस्यैवाभ्युपगन्तव्यत्वे मानाभावादिति परिहरति *नेति* कथं तर्हि युक्तमित्यत आह *तस्येति* स चेद्धेतुस्तदभ्युपगमोपि हेतुः स्यादित्यत आह *नत्विति* उभयोःकारणत्वे प्रमाणाभावाद्गौरवाच्चेति हेतुमाह *तस्येति* अनन्यथासिद्धसन्निधित्वमेव प्रमाणमित्याशङ्क्याङ्गीकरोति *शक्यत्व इति* अङ्गीकृतमनेनेदमिति परस्य तत्प्रतीतिरेव प्रयोजनमित्यत आह * उपायेति *

शास्त्राधिगताभ्युपगमवैयर्थ्येपि प्रमाणोपनीताभ्युपगममाश्रित्यापसिद्धान्तप्रवृत्तिर्भवतीति शङ्कते ।

४३ पुनः शङ्कानिरासः ।

अथोच्यते उपेयमुपायेन साधयता उपेयवदुपायस्यापि सत्त्वमुपगन्तव्यमिति पश्चात्तदनुपगमेऽपसिद्धान्तोपन्यासः सावकाशः असत उपायत्वानुपपत्तेः । तद्धुपायत्वेनोपन्यसनात्तत्सत्त्वाभ्युपगमस्तस्य साक्षादश्रुतोऽप्य-

सत्त्वेनाभ्युपगन्यमानस्योपायत्वस्वीकारानुपपत्त्या क-ल्पनीयः कल्पितेन तेन श्रूयमाणतत्सत्त्वानभ्युपग-मविरोधादपसिद्धान्तोऽभिधेयः। एवञ्च सति सत्त्वान-भ्युपगम एवोपायत्वानुपपत्तिप्रसङ्गो दूषणमुच्यतामु-पजीव्यत्वात् तदुपन्यासमन्तरेणाश्रूयमाणतदीयाभ्युपग-मस्य दर्शयितुमशक्यत्वात् कृतं तदुपजीविना पश्चात्त-नेनापसिद्धान्तेन।

*अथेति* उपेयमिच्छतोपायस्वरूपं तावदाश्रयणीयं न तत्सत्त्वमपि प्रमाणाभावादित्यत आह *अत इति* सम्भाव्य लघूपायतयाऽपसिद्धान्तोद्भावनस्य वैयर्थ्यमभि-प्रेत्य परिहरति *तर्हीति* नियतप्राक्सत्त्वकारणत्वा-न्यथानुपपत्त्या साधनस्य सत्त्वं कल्प्यतां किमेतावतेत्य-त आह *कल्पितेति* कारणत्वानुपपत्त्या कल्पिता-श्रूयमाणसत्त्वाभ्युपगमविरोधेनाऽपसिद्धान्तोपन्यास इत्युक्तं स्यादित्यर्थः। अस्त्वेवमेव को दोष इत्यत आह *एवञ्चेति* सत्त्वाभ्युपगमे कारणत्वानुपपत्ति-रेवानिष्टं दूषणमुच्यतां वृथाऽपसिद्धान्त इत्यर्थः। हे-तुमाह *उपजीव्येति* तदुपजीव्यत्वमेवासिद्धं सत्त्वा-भ्युपगमस्येत्यत आह *तादिति* एवं चोपजीव्यत-याऽवश्यप्रथमप्रत्येतव्यस्य लघूपायस्यान्यस्य सम्भ-वे पश्चात्प्रतीतिकापसिद्धान्तोपन्यासो गौरवात्प्रयोज-नाभावाच्चानुपपन्न इत्याह *कृतमिति*

तन्नान्तरीयकतया तदभ्युपगम इति द्वितीय क-

त्वेऽप्युक्तखण्डनमतिदिशति ।

४७ दूषणातिदेशः ।

अतएव न द्वितीयः तन्नान्तरीयकाभ्युपगमोऽपि हि तत्सत्तानभ्युपगमे साध्यस्याभावापत्त्याऽनुमन्तव्यः तथा च सैव दूषणमस्त्वनभ्युपगमे कृतं तयाऽभ्युपगमं परिकल्प्यतेनानभ्युपगमविरोधादपसिद्धान्तोपन्यासेनेति । एवं निग्रहान्तरखण्डनमूहनीयम् ।

इति कवितार्किकचक्रवर्ति—श्रीश्रीहर्ष—कृते

खण्डनखण्डखाद्ये निग्रहनिरुक्तिर्नाम

द्वितीयः परिच्छेदः ।

* अत इति * अतिदिश्यमानं खण्डनमेव दर्शयति * तदिति * किम्वायातमिति चेदिदमत्रायातमित्याह * तथा चेति * सत्तानभ्युपगमे साध्यानुपपत्तिमुपजीव्य तत्सत्ताभ्युपगमं परिकल्प्य पश्चात्त्यागेनापसिद्धान्तोपन्यासाद्वरं प्रथमत एव स्वसाध्यानभ्युपन्यास इत्यर्थः । इति शब्दः समाप्तौ । अनुक्तनिग्रहान्तरेष्वपि यथासम्भवं खण्डनमूहनीयमित्याह * एवमिति * सामान्यलक्षणमेव तावत्कथकाशक्तिसूचकं निग्रहस्थानमिति न सम्भवति ज्योतिःशास्त्रादावतिव्याप्तेः । कथकपराजयनिमित्तमित्यपि न । तद्दीरितेऽतिव्याप्तेरवंशब्दतोऽर्थतश्च पुनर्वचनं पुनरुक्त-

१ मनभ्युपगमं इति मू० पु० नास्ति ।

मित्यपि न । वादान्तरे शब्दानित्यत्वसाधनमुपन्यस्य कालान्तरे तदुपन्यासे गतत्वात्तदेत्यादिविशेषणोपादाने हेत्वन्तरं तच्छब्दार्थानिर्वचनं च । एवमेव सर्वनिग्रहविशेषलक्षणेषु तच्छब्दादिविशेषणानुपादानेऽननुगमादित्येषादिगिति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याभयानन्द-
पूज्यपादशिष्यस्य भगवदानन्दपूर्णस्य कृतौ
खण्डनफक्किकाविभजने निग्रहानिरुक्ति
नाम द्वितीयः परिच्छेदः



## अथ तृतीयः परिच्छेदः ।

एवं तावत्प्रमाणतदाभासनिग्रहस्थानानिर्वचनीयत्वप्रपञ्चेनाद्वैतविरोधं परिहृत्य प्रश्नसत्त्वेनाद्वैतविरोधमाशङ्क्य तत्परिहारायोपक्रमते ।

१ किंशब्दार्थविचारारम्भः ।

अथ यान्यत्रलम्ब्य बहुलं वाग्व्यवहारास्तेषां सर्वनाम्नामर्थाः कथं निर्वाच्याः । तथाहीश्वरसद्भावे किं प्रमाणमिति ब्रुवाणः प्रतिवक्तव्यः किं शब्दोऽयमाक्षेपार्थो वा, कुत्सितार्थो वा, वितर्कार्थो वा, प्रश्नार्थो वा, स्यात् । तत्र यदि प्रथमः पक्षः तदेश्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात् तथा च सति न प्रतिज्ञामात्रात्साध्यसिद्धिरिति हेत्वादिकं वाच्यं भवति तच्च भवता नाभ्यधायि तस्मान्न्यूनत्वं दोषः । अत एव न द्वितीयः ईश्वरसद्भावे कुत्सितं प्रमाणमित्यस्यापि प्रतिज्ञामात्रत्वात् ।

* अथेति * अथशब्दोऽधिकारार्थः । सर्वनामनिर्वचनानर्हता प्रस्तुता वेदितव्या । बहुलग्रहणं तत्खण्डनानां सार्वत्रिकत्वप्रकटनाय । सर्वनामार्थनिर्वचने काऽनुपपत्तिरित्याशङ्क्यानुपपत्तिं दर्शयितुं प्रश्नमुत्थापयति * तथाहीति * किंशब्दस्यानेकार्थसाधारणत्वात् विकल्पयति * किमित्यादिना * आक्षेपार्थत्वमभावप्रतिपादनार्थत्वं, कुत्सितार्थत्वं दुष्टत्वप्रतिपा-

दनार्थत्वं, वितर्कार्थत्वं सन्देहार्थत्वं, प्रश्नार्थत्वं जिज्ञासाविषयत्वापादनार्थत्वं, तत्र प्रथमकल्पानुवादेन वाक्यस्य परिनिष्पन्नमर्थं दर्शयति * तत्रेति * भवत्वयमर्थस्तथाऽपि को दोष इत्यत आह * तथाचेति * प्रतिज्ञामात्रान्नार्थसिद्धिर्विपरीतप्रतिज्ञाया अपि सुलभत्वादिति हेतुदृष्टान्तादिकं वक्तव्यमापद्यते इत्यर्थः । हेत्वादिकमपि कथितमेवार्थादित्याशङ्क्य तद्द्योतकपदाभावान्नेत्याह * तच्चेति * तथापि किमनिष्टमापन्नमित्यत आह * तस्मादिति * उक्तन्यायं द्वितीयकल्पेऽप्यतिदिशति * अत इति * परामृष्टमेव हेतुं स्पष्टयति * ईश्वरेति *

खण्डनान्तरमाह ।

२ द्वितीयविकल्पस्यैव प्रकारान्तरेणनिरासः ।

अपि च साध्यासाधकत्वाद्वा तत् कुत्स्यते भवता, अन्यथा वा । अन्यथा चेदलं तदुद्भावनया साध्यसिद्धेरप्रत्यूहत्वात् । नापि प्रथमः प्रमाणञ्च साध्यासाधकञ्चेति व्याघातात् । गौणोऽयं प्रमाणशब्द इति चेन्न । प्रमाणत्वयोगिनि यद्ययं प्रमाणशब्दप्रयोगस्तदा गौणत्वव्याघातः मुख्यत्वात् अथ प्रमाणाभासे, तदा अलन्तदुद्भावनया । ईश्वरसद्भावे यः प्रमाणाभासः स कुत्सित इत्यत्र परस्यापि सम्प्रतिपन्नत्वात् । ईश्वरसद्भाव इति च विशेषोपादानं

व्यर्थं स्यात् अन्यत्रापि हि विषये प्रमाणाभासः कुत्सित एव साध्यासाधकत्वात् । नापि तृतीयः तथा सति हि वितर्कस्य पक्षान्तरसापेक्षत्वेन पक्षान्तरमपि वचनीयं भवति ईश्वरसद्भावे किमेतत् प्रमाणमुतान्यदिति तच्च भवता नाभ्यधायि ततो न्यूनत्वं दोषः ।

* अपि चेति * साध्यासाधकत्वं प्रमाणस्य कुत्सितत्वमुतान्यादिति विकल्पार्थः । अन्तिमकल्पमल्पत्वात् प्रथममनूद्य दूषयति * अन्यथेति * कुत इत्यत आह * साध्येति * अन्यप्रकारनिमित्तप्रमाणकुत्सनेऽपि साध्यसाधकत्वात्प्रमाणात्साध्यसिद्धेरप्रतिबन्धेनोत्पन्नत्वादित्यर्थः । साध्यासाधकत्वमेव कुत्सितत्वमिति प्रथमं प्रत्याह * नापीति * कुत इत्यत आह * प्रमाणं चेति * प्रमीयते ऽनेनेति प्रमाणत्वात्तदसाधकमिति वाक्यांशयोः परस्परव्याघात इत्यर्थः । उपचरिताग्निभावस्य माणवकस्यादाहकत्ववदुपचरितप्रमाणभावस्यासाधकत्वप्रतिपादनान्न कश्चिद्व्याघात इति शङ्कते * गौण इति * प्रमाणत्वसामान्यवति प्रमाणशब्दोपचार उत प्रमाणवदवभासमाने तल्लक्षणरहित इति विकल्प्य प्रथमं दूषयति * नेति * मुख्यार्थगुणयोगादर्थान्तरवृत्तेर्गौणत्वान्मुख्ये च तदभावाद्विरोध इत्यर्थः । द्वितीयमाशङ्कते * अथेति * प्रमाणाभासस्य कुत्सितत्वोद्भावना न कार्येति परिहरति * अलमिति * इष्टापादनत्वेन त-

र्काभासत्वादिति हेतुमाह * ईश्वरेति * प्रमाणाभासस्य कुत्सितत्वापादनपक्षे व्यर्थविशेषणताऽऽपादनवाक्यस्येत्याह * ईश्वरेति * तदेव वैयर्थ्यमुपपादयति * अन्यत्रेति *

"सम्भवे व्यभिचारे च स्यात् विशेषणमर्थव"

दितिन्यायेनान्यत्राऽकुत्सितप्रमाणाभासव्यावृत्त्यर्थमीश्वरेति विशेषणं वाच्यं तच्च व्यावर्त्यं नास्तीत्यर्थः। वितर्कार्थः किंशब्द इति तृतीयं परास्यति * नापीति * कुत इत्यत आह *तथेति* अनेककोट्यवलम्बिप्रत्ययस्य संशयत्वात्प्रमाणकोट्यतिरिक्तकोट्यन्तरमपि दर्शनीयमित्यर्थः। अभिनयेन पक्षान्तरविवेचनं दर्शयति * ईश्वरेति * अन्यदप्रमाणमितियावत्। ततः किमित्यत आह * तच्चेति * तथाऽपि किं दूषणमित्यत आह * तत इति *

किंशब्दः प्रश्नार्थ इति चतुर्थं प्रतिक्षिपति।

३ किं शब्दस्य प्रश्नार्थकत्वनिरासः।

नापि चतुर्थः प्रश्नार्थात् खलु किं शब्दात्कस्याचित् पदार्थस्य जिज्ञास्यमानता प्रतीयते सा चेह प्रमाणपदसमभिव्याहारात् प्रमाणविषयिणी प्रतीयते यद्विषयश्च प्रश्नस्तदुत्तरवादिनाऽभिधेयं तत् अयं प्रश्न ईश्वरसद्भावे प्रमाणसामान्यविषयस्तद्विशेषविषयो वाऽभिप्रेतः आद्यश्चेदीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत यद्विषयोहि प्रश्नस्तदभिधेयं प्रमाणसामान्यविषयश्च प्रश्नः तच्च प्रमाणशब्देनाभिधीयत एव। अथ द्वितीयः तथापीश्वरसद्भावे

प्रमाणमित्येवोत्तरमापद्येत यथा प्रश्नवाक्ये प्रमाणशब्दो विशेषपरस्तथोत्तरवाक्येऽपि ।

* नापीति * काऽनुपपत्तिरित्याशङ्क्य तां दर्शयितुं प्रश्नवाक्ये प्रतीयमानं दर्शयति * प्रश्नेति * प्रश्नस्य जिज्ञासाविनाभूतत्वात्तस्याश्चेष्यमाणज्ञानविषयत्वात्प्रश्नप्रतिपादकेन किंशब्देन कश्चिदर्थो ज्ञातुमिष्यत इति प्रतीयत इत्यर्थः । जिज्ञास्यमानता च प्रमाणस्यैव प्रतीयत इत्याह * सा चेति * प्रमाणपदसमभिव्याहारबलात्प्रमाणस्यैव जिज्ञास्यमानता प्रतीयतां नाम तावता प्रस्तुते किं स्यादित्यत आह * यदिति * यत्पृष्टं तदेव वक्तव्यमन्यथाऽऽम्रान्पृष्टः कोविदारानाचष्ट इति वदनवधेयवचनत्वप्रसङ्गादित्यर्थः । ततो वा किमित्याशङ्क्य प्रतिवचनप्रकारं दर्शयितुं प्रश्नविषयं विकल्पयति * इत्येति * सामान्यव्यतिरेकेण विशेषासिद्ध्यभावात्सामान्यविषय एवायं प्रश्न इति प्रथमसनूद्योत्तरमाह * आद्यश्चेदिति * कुत इत्यपेक्षायां प्रागुक्तमेव हेतुं स्मारयति * यदीति * किंशब्दप्रतिपादितस्य प्रश्नस्य प्रमाणसामान्यमेव विषय इत्याह * प्रमेति * प्रमाणसामान्यविषयत्वे प्रश्नस्य प्रमाणमित्युत्तरं कथं सङ्गच्छते तद्वाचकपदाभावेन तत्प्रतीत्यसम्भवादित्यत आह * तच्चेति * प्रश्नवाक्यगतप्रमाणशब्देन तत्सामान्याभिधानवदुत्तरवाक्येऽपि प्रमाणशब्देन तत्सामान्यमभिधीयत एवेत्यर्थः । प्रमाणविशेषविषयः प्रश्न इति द्वितीयकल्पेऽपि प्रतिवचनं

तादृगेव भवतीत्याह * अथेति * प्रतिवचनगतप्रमाणशब्दस्य तद्विशेषवाचकत्वं दृष्टान्तेनाह * यथेति *

ईश्वरसद्भावे यः प्रमाणविशेषः प्रमितिहेतुतया विवक्षितःकोऽसाविति प्रश्नार्थ इति शङ्कते।

४ विशेषपरः प्रश्न इति शङ्कानिरासः।

कोसौ विशेष इति चेन्न। पूर्व्ववदुत्तरत्वात्। किञ्च अस्यापि प्रश्नस्य विशेषो विषयः किंशब्दस्य विशेषशब्देन सामानाधिकरण्यात् तथाच सति विशेष इत्येवोत्तरं स्यात्। स्यादेतत् विशेषशब्देन न विशेषमात्रमनिर्द्धारितमत्र विवक्षितं किन्त्वसाधारणी व्यक्तिस्तत्र विशेषशब्दस्य तात्पर्य्यं तस्मात्काऽसावसाधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः तत्र च तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवम्विधाः प्रलापाइति। नैतदेवं, यतोऽत्रापि विशेष इत्येवोत्तरं यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्व्वतोव्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्य्यं तथोत्तरवाक्यस्थितस्यापि, एवञ्च सति यत्र विषये भवदीयस्य प्रश्नवाक्यस्य तात्पर्य्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम्।

* क इति * कोऽसावित्यत्रापि किंशब्दस्याऽऽक्षेपाद्यर्थानां कतमोऽर्थ इति विकल्पस्य तद्दूषणस्य च तुल्यत्वमिति परिहरति * नेति * खण्डनान्तरमाह *

किञ्चेति * ईश्वरसद्भावे कः प्रमाणविशेष इत्यत्र किंशब्दस्य प्रश्नवाक्यस्थविशेषपदसमभिव्याहारात् प्रमाणविशेषो विषयतया प्रतीयत इत्यर्थः । अस्तु विशेषविषयत्वं प्रश्नस्य तथापि किमत्रोत्तरं वक्तव्यमित्यत आह * तथा चेति * विशेषपदसमभिव्याहृतकिंशब्दस्य विशेषणमात्रगोचरत्वे विशेष इत्युत्तरं सङ्गच्छेत न च तन्मात्रगोचरत्वं तस्येति शङ्कते * स्यादेतदिति * किं तर्हि विवक्षितमित्यत आह * किमिति * सजातीयप्रमाणव्यक्त्यन्तरेभ्यो व्यावृत्ता प्रमाणव्यक्तिर्विवक्षितेत्यर्थः । विशेषपदस्य तद्वाचकसामर्थ्याभावे कथं तद्विवक्षेत्याशङ्क्य तात्पर्येण इत्याह * तत्रेति * निगमनव्याजेन प्रश्नवाक्यार्थं दर्शयति * तस्मादिति * असाधारणप्रमाणव्यक्तिगोचरप्रश्नस्येयमसौ प्रमाणव्यक्तिरित्येवोत्तरं वाच्यमन्यथा प्रश्नप्रतिवचनयोर्वैरूप्यप्रसङ्गादिति फलितमाह * तवेति * प्रतिवचनगतविशेषपदेनापि सर्वतोव्यावृत्तप्रमाणव्यक्तेरेव तात्पर्यतः प्रतिपादनात् विशेष इत्युत्तरं सङ्गच्छत इति परिहरति * नैतदिति * प्रतिवचनगतविशेषपदस्यासाधारणव्यक्तौ तात्पर्यं दृष्टान्तेनोपपादयति * यथेति * प्रश्नप्रतिवचनगतविशेषपदस्यैकार्थविषयतात्पर्यमुपपाद्य फलितं निगमयति *एवञ्चेति*

ईश्वरसद्भावे किं प्रमाणमिति प्रश्नस्य प्रकारान्तरेणाऽभिप्रायं शङ्कते ।

५ प्रश्नस्य प्रकारान्तरेणाभिप्रायनिरासः ।

अथ मन्यसे किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः

अत्रार्थेऽनुमानं प्रमाणमितरद्वेति। अत्राप्यनुमानमित्युत्तरमस्माकम्। किं तदनुमानमिति चेत्। अयमपि प्रश्नोऽनुमानमात्रविषय, उत तद्विशेषविषयइति विकल्प्य प्रमाणप्रश्नवदुत्तरं वाच्यमिति। अत्र च सङ्ग्रहश्लोकौ—

"यथाविधं यं विषयं निजस्य
प्रश्नस्य निर्व्वक्ति परो यथोक्तया।
वाच्यस्तथैवोत्तरवादिनापि
तथैव वाचा स तथाविधोऽर्थः॥ १॥
प्रश्नस्य यः स्याद्विषयः स वाच्यो
वाचा तया चैष भवन्निरुक्तः।
इदं त्वयाप्यास्थितमेतथैव
गिरा स्वपृच्छाविषयस्य वक्रा" ॥ २॥

*अत्रेति* कोऽसावभिप्राय इत्यत आह *अत्रेति* ईश्वरेऽनुमानं प्रमाणमुताऽऽगमादिरिति विकल्पोऽभिप्रेत इत्यर्थः। यद्येवं प्रष्टुरभिप्रायस्तर्ह्यनुमानमित्येव परिहर्तव्यमित्याह सिद्धान्ती *अत्रेति* यदीश्वरसद्भावेऽनुमानं प्रमाणतयोपन्यस्यते किं तदिति पृच्छयत इति शङ्कते *किमिति* किं तदनुमानमिति प्रश्नस्यानुमानसामान्यं विषय उत तद्विशेष इति विकल्प्यानुमानमित्येवोत्तरं प्रश्नवाक्यगतानुमानशब्देन सामान्यं विशेषो वा यथोच्यते तथा प्रतिवचनगतानुमानशब्देनाऽप्यभिधानादिति परिहरति* अयमपीति *

उक्तमर्थं श्लोकाभ्यां सङ्गृह्णाति*अत्रेति* परः-पृच्छको निजस्य प्रश्नस्य यं विषयं यथाविधं-यादृशं यथोक्त्या निर्वक्ति उत्तरवादिना स विषयस्तथाविधः एकयैव वाचा वाच्य इत्यर्थः। पृच्छकेन यद्यादृशं पृष्टमुत्तरवादिनाऽपि तत्तादृशमेव वक्तव्यमिति नियमः कुतस्तत्राह * प्रश्नस्येति * यत्पृष्टं तदेव वक्तव्यमिति लौकिको न्याय इत्यर्थः। सत्यं तथापि तेनैव वाक्येन कथं तदुपस्थापनमित्यत आह * वाचेति * तस्यैव शब्दस्य पृच्छकेनापि विशेषविषयतया निर्वक्तव्यत्वादुत्तरवादिनापि स एव शब्दस्तद्विषयो भवतीति हेतुमाह* इदमिति* स्वप्रश्नविषयवक्त्रा त्वयाप्येतया गिरा-तच्छब्देन तन्निर्वचनं स्वीकृतमित्यर्थः।

दूषणान्तरं वक्तुं पीठिकां करोति।

६ दूषणान्तरकथनम्।

प्रश्नार्थाच्च किंशब्दाज्जिज्ञासाविषयताऽर्थस्य प्रतीयते जिज्ञासा च ज्ञातुमिच्छा, इच्छा च नाज्ञाते भवत्यतिप्रसङ्गात्, तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तत्र स्वज्ञानमिच्छाकारणीभूतं वक्तव्यं तदयथार्थं यथार्थं वा स्यात्। यथार्थञ्चेत् तर्हि तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुमशक्यत्वात्। तेनापि प्रमाणेन स्वगोचर ईश्वरसद्भाव उपस्थाप्यत इत्यनायासेनैव सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः। अथाऽयथार्थं तन्ना-

स्मिन्नयथार्थज्ञानविषये यद्यस्माभिरयथार्थमेव ज्ञानमुत्पादनीयमिति भवतः पृच्छतो वाञ्छितं तदा केयं स्वाधीनेऽर्थे परापेक्षा भवानेवायथार्थज्ञानोत्पादनकुशलो यथैकं तत्र मिथ्याज्ञानमजीजनत्तथा परमप्युत्पादयतु । वयं पुनर्यथार्थज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्व्वथैवाकृतिनः किमिह नियुज्येमहीति । अथ मदीयस्यायथार्थज्ञानस्य यो विषयः स मदीययथार्थज्ञानविषयो भवता क्रियतामिति त्वदीयं वाञ्छितं तदा व्याघातादीदृश्यर्थे भवतः प्रवृत्तिरेवानुपपन्ना, शुक्तिका रजतत्वेन मम यथार्थज्ञानविषयो भवत्वित्येतदर्थे प्रेक्षावान् कथङ्कारं प्रयतेत । येन रूपेणायथार्थज्ञानविषयत्वं तेनैव रूपेण यथार्थज्ञानविषयत्वे व्याघातात् ।

* प्रश्नेति * प्रश्नस्य जिज्ञासाऽविनाभूतत्वादिष्यमाणज्ञानस्य सविषयत्वात्प्रश्नप्रतिपादककिंशब्दसामर्थ्यात्कस्य चिदर्थस्य जिज्ञास्यमानत्वं प्रतीयत इत्यर्थः । ततः किमित्यत आह * जिज्ञासेति * ईश्वरप्रमाणरूपविषयाज्ञाने भवतीच्छा तज्ज्ञाने वेति विकल्प्य प्रथमं प्रत्याह * इच्छेति * रमणीयविषयज्ञानमन्तरेणेच्छाङ्गीकारेऽपि सर्वदा सर्वस्य सर्वविषयेच्छाप्रसङ्ग इत्यर्थः । अतो द्वितीयकल्पः परिशिष्यत इत्याह * तस्मादिति * ततो वा किमित्याशङ्क्य तद्दर्शयितुं विकल्पयति * तदिति * कस्मिन् सति किं स्यादित्यत

आह *यथार्थ इति* तदेव कुत इत्यत आह *विषयेति* ईश्वरविषये प्रमाणमन्तरेण तद्गोचरज्ञानस्य यथार्थत्वमेव न स्यादित्यर्थः। तज्ज्ञानेन प्रमाणमुपस्थाप्यतामिष्टेश्वरसद्भावः केनोपस्थाप्यत इत्यत आह * तेनेति* द्वितीयं शङ्कते * अथेति* अयथार्थे यथार्थज्ञानोत्पादनाऽसम्भवादयथार्थमेव ज्ञानमुत्तरवादिनाप्युत्पादनीयमिति प्रश्नार्थः स्यादित्याह *तस्मिन्निति* यदीत्यसन्देहे। अस्तु को दोष इत्यत आह * तदेति * अयथार्थज्ञानोत्पादनस्य स्वाधीनत्वे हेतुमाह * भवानिति* ज्ञानोत्पादयितृत्वाविशेषात् द्वितीयमप्ययथार्थज्ञानमुत्पादयन्तु भवन्त इत्यत आह * वयमिति * अकृतिनो–न पण्डिता इत्यर्थः। प्रष्टुरभिप्रायान्तरं शङ्कते *अथेति* यदयथार्थज्ञानं मम तस्य यो विषयः स यथा मदीययथार्थज्ञानविषयो भवति तथा भवता क्रियतामित्यर्थः। येन रूपेणायथार्थज्ञानविषयत्वं तेन रूपेण यथार्थज्ञानविषयत्वं व्याहतमिति परिहरति *तदेति* उक्तमर्थं दृष्टान्तेनोपपादयति *शुक्तीति* प्रेक्षावतस्तथाप्रवृत्तिर्वा कस्मादनुपपन्नेत्यत आह *येनेति*

यद्यपीश्वरसद्भावविषयज्ञानमयथार्थं तथापि स्वत्सिद्धान्ते यथार्थमेव तदिति भवता तत्र यथार्थज्ञानस्योत्पादनीयत्वात्तदर्थं भवान्पृच्छयत इति शङ्कते।

७ परमतेऽयथार्थत्वेऽपि स्वसिद्धान्तेन सत्यज्ञानमुत्पाद्यामिति निरासः।

अथ मन्यसे स्वसिद्धान्तमनुरुन्धानेन भवता यथार्थज्ञानं तत्रोत्पादनीयमतस्तदर्थं भवाननुयुज्यत

इति नैवम्। य ईश्वरसद्भावविषयो भवता प्रमाणाभासः प्रमाणतया भ्रान्त्या प्रतीतस्तस्य प्रमाणत्वमस्माभिर्व्युत्पादनीयमिति नास्माकमीदृशः सिद्धान्तः प्रत्युतेश्वरसद्भावविषयं यत्प्रमाणं भवता प्रमाणाभासत्वेन भ्रान्त्या प्रतीतमस्ति तत्प्रमाणनीयमिति। स्यान्मतमीश्वरसद्भावविषयस्य प्रमाणस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं पृच्छतामस्माकं नतु प्रमाणेनाऽप्रमाणेन वेति विशेषोऽप्यभिमत इति। न। ज्ञापनमात्रस्याप्रमाणज्ञानमादायाऽप्युपपत्तेः। तत्र स्वाधीने केयं परापेक्षेत्याद्युक्तमनुषञ्जनीयम्।

* अथेति * यत्प्रमाणाभासं प्रमाणत्वेन भ्रान्तिगृहीतं तत्प्रमाणमापादनीयं मयेत्युक्तं स्यान्नायं मत्सिद्धान्त इति परिहरति * नैवमिति * त्वत्सिद्धान्तविपरीतत्वान्मत्सिद्धान्तस्येति हेतुमाह * प्रतीति * त्वया यथार्थज्ञानं तत्रोत्पादनीयमिति यदुक्तं मया तदुपेक्ष्य ज्ञापनमेव प्रार्थ्यत इति शङ्कते * स्यादिति * मात्रचो व्यावर्त्यमाह * नन्विति * ज्ञापनमात्रं चेद्विवक्षितं तस्याप्रमाणेनापि कर्तुं शक्यत्वात्तत्र च भवतः स्वातन्त्र्यात्परापेक्षा नास्तीत्युक्तमिति परिहरति * नेति *

ईश्वरसद्भावप्रमाणविषयं यत् मदीयज्ञानं तस्य यथार्थत्वमयथार्थत्वं वेत्यस्याप्यनिश्चितमिति शङ्कते।

८ ज्ञानस्य यथार्थायथार्थत्वयोः सन्देह एवे तिशङ्कानिरासः।

स्यादेतत् येयमीश्वरसद्भावविषया प्रमाणप्रतीतिरस्मा कमुत्पन्ना सा व्यभिचारिणी सत्या वेति संशयोऽत्रा- स्माकं तन्नैकपक्षनिर्द्धारणाधीनं यदिदं दूषणमत्रादि भ- वता तन्निरवकाशमिति। नैतदस्ति। एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थत्वसंशयेन तस्याः प्रतीतेर्गोचरो यत्प्र- माणं तस्यापि योऽसौ विषय ईश्वरसद्भावस्तत्र सर्व्वत्रैव संशयानस्य भवतः प्रश्नोऽयं नतु विप्रतिपन्नस्येति स्यात् तथाच स्वीकुरु शिष्यभावं, प्रसादय चिरं चर- णशुश्रूषाभिरस्मान्, च्छेत्स्यामस्ते संशयमिति। विप्रतिप- न्ना एव वयमाहार्य्यः संशयोऽस्माकमिति चेत् तर्ह्यवधृ तैककोटय एव वयं कार्य्यानुरोधात्तु संशयमालम्बामह इत्युक्तं स्यात् एवं तर्हि तदेव कोट्यवधारणं भवतां यथार्थमयथार्थं वेति विकल्पोक्तयुक्त्या दूषणीयम्।

* स्यादिति * यथार्थत्वायथार्थत्वसन्देहेन को लाभ इत्यत आह * नेनेति * अयथार्थपक्षप्रयुक्तदूषणं त्वदुक्तं निरवकाशमित्यर्थः। ईश्वराभावेऽवधृते तत्स- द्भावप्रमाणप्रतीतियथार्थत्वसन्देहानुपपत्तेः सद्भावं प्र- ति सन्दिहानस्य प्रश्नोऽयं स्यादिति परिहरति * नैतदिति * भवतु वक्तृसन्देहनिमित्तोऽयं प्रश्नस्त- थापि किमित्यत आह * तथाचेति * "नासम्वत्सर- वासिने प्रब्रूयात्" "न चाशुश्रूषवे वाच्य"मित्यादिश्रु-

तिस्मृतिभ्यश्चरणशुश्रूषाभिर्वयं प्रसादनीयाः प्रसन्नाश्च यूयं संशयं छेत्स्याम इत्यर्थः। सन्देहनिमित्तश्चेत् प्रश्नस्तर्हि शिष्यभावं व्रजेमहि विप्रतिपन्ना एव तु वयं प्रश्नोऽप्याहार्यसंशयमूल इति शङ्कते *विप्रतीति* प्रश्नतात्पर्यं दर्शयन् परिहरति * तर्हीति * कार्यानुरोधादिति—जयादिफलानुरोधादिति यावत्। भवत्वेकस्कोऽप्यवधारणं तथापि को दोष इत्यत आह * एवं तर्हीति *

अनध्यवसायज्ञानेन प्रश्नविषयं प्रतीत्य पृच्छयत इत्यस्मिन्नपि पक्षे दूषणमतिदिशति।

९ कल्पान्तरेऽपि दूषणातिदेशः।

एतेनानध्यवसायेन तदस्माभिः प्रतिपन्नमित्यपि निरस्तं वेदितव्यम्। व्यभिचारिविषयमव्यभिचारिविषयं वा तदिति विकल्पाभ्यां तस्यापि ग्रस्तत्वात्—

"परस्परविरोधे हि न प्रकारान्तरस्थिति"

रिति न्यायात्। एवमीश्वराभिसन्ध्यादावपि तत्तत्स्थाने तिष्ठत्सर्व्वनामान्तरखण्डनमत्र द्रष्टव्यम्।

इति कवितार्किकचक्रवर्ति—श्रीश्रीहर्षमिश्रकृते
खण्डनखण्डखाद्ये सर्व्वनामार्थनिरुक्तिर्नाम
तृतीयः परिच्छेदः।



*एतेनेति* परामृष्टमेव खण्डनं स्पष्टयति * व्यभिचारीति* अनध्यवसायज्ञानं व्यभिचारित्वाव्यभिचारित्वकोटिद्वयबहिर्भूतमेव किन्न स्यादित्यत आह * परस्परेति * यत्तदादिशब्दानामनुगतार्थत्वविकल्पखण्डनं तत्र तत्र यदुक्तं तदस्मिन्परिच्छेदे सर्वनामान्तर ऊहनीयमित्युपसंहरति * अत्रेति *

इति श्रीमत्परमहंसपरिव्राजकाचार्याभयानन्दपूज्यपादशिष्यस्यानन्दपूर्णस्य कृतौ खण्डनफक्किकाविभजने सर्वनामार्थनिरुक्तिर्नाम तृतीयः परिच्छेदः



## अथ चतुर्थः परिच्छेदः ।

नैयायिकादिपरिकल्पितप्रमाणादिपदार्थानिर्वचनीयताप्रपञ्चेनाद्वैतविरोधं परिहर्तुं तदनिर्वचनीयतां प्रपञ्चयितुमुपक्रमते । तत्र पदार्थशब्दो भावत्वान्विते रूढ इति तैरङ्गीकाराद्भावत्वखण्डनाय तत्र द्रव्यादयः षट् पदार्था इति वदतां भावत्वान्वितषट्लक्षणान्यतमलक्षणयोगो विवक्षित इति प्रथमं भावत्वं खण्डयितुं प्रकृतव्याजेन शङ्कते ।

१ भावत्वखण्डनारम्भः ।

ननु तथापि भावात्मके तस्मिन्नीश्वरे विधायकं किञ्चित्प्रमाणं वक्तव्यमिति चेत् । किं पुनर्भावत्वम् । विधित्वमिति चेन्न । पर्य्यायाप्रश्नात् । स्वरूपसत्त्वमिति चेत् । अभावस्यापि तथाभावात् । प्रतिस्वं व्यावृत्तत्वेनाननुगतत्वापत्तेश्च । अस्तीति प्रतीतिविषयत्वमितिचेन्न । अभावो घटस्यास्तीतिप्रत्ययसम्भवेनाभावस्यापि तथात्वप्रसङ्गात् । नास्तीतिप्रतीतिविषयत्वेऽपि च घटादेर्भावत्वानिवृत्तेः ।

* नन्विति * तथापीति पूर्वपरिच्छेदोक्तप्रकारेण किं प्रमाणमित्यादिप्रश्नस्यासम्भवेऽपीत्यर्थः । भावस्यापि तथाभावादिति यद्यपीश्वरसद्भावे प्रमाणं वक्तुं न पार्यते तथापि भावत्वात्तस्य विधायकप्रमाणान्य-

तिरेकेणासिद्धेर्विधायकं प्रमाणं वाच्यमित्यर्थः। एवं परमुखेन चोदयित्वा भावत्वखण्डनं प्रस्तौति * किमिति * भावत्वस्यैवानिर्वक्तव्यतया विधायकं प्रमाणन्न वक्तव्यमिति आक्षेपाभिप्रायमपि प्रश्नं मत्वोत्तरमाह * विधित्वमिति * न मया पर्यायः पृष्ट इति परिहरति * नेति * भावत्वलक्षणं शङ्कते * स्वेति * सत्वमित्युक्ते पर्यायत्वप्रसङ्गपरिहाराय स्वरूपेति विशेषणम्। स्वरूपस्य सत्त्वमुत स्वरूपमेव सत्वमाद्ये स्वरूपसत्वयोर्भेदेन स्वरूपमसत् स्यात् द्वितीयेऽतिव्याप्तिरिति दूषयति * नेति * नह्यसन् घटादिर्न घटादिरित्यभावस्यापि स्वरूपसद्भावाद्भावत्वप्रसङ्ग इत्यर्थः। न केवलमतिव्याप्तिः अव्याप्तिरपीत्याह * प्रतीति * लक्षणान्तरं शङ्कते * अस्तीति * नास्तीतिशब्दप्रत्ययाविषयाऽभावव्यवच्छेदार्थं अस्तीतिविशेषणं द्रष्टव्यम्। यथाश्रुतमिदमलक्षणमतिव्याप्तेरिति परिहरति * नेति * तर्हि नास्तिप्रत्ययाविषयत्वे सत्यस्तिप्रत्ययविषयत्वं भावत्वमस्तु नचैवमतिव्याप्तिरभावस्य नास्तिप्रत्ययस्यापि विषयत्वादित्यत आह *नास्तीति* देशान्तरे कालान्तरे च घट इहेदानीं नास्तीति नास्तिप्रत्ययाविषयोपि न सत्वं जहातीत्यव्याप्तिरसम्भवो वेत्यर्थः।

खण्डनान्तरं वक्तुं विकल्पयति।

२ अस्तिशब्दार्थविकल्पनिरासः।

अस्तीति चास्त्यर्थो वा शब्दो वा विवक्षितः। नाद्यः तस्यानिरुक्तेः। सत्ता तदर्थ इति चेन्न। सामान्यादीनां तद-

भावादभावत्वापत्तेः। स्वरूपसत्त्वञ्च निरस्तम्। नापि द्वितीयः अभावोऽस्तीतिप्रतीतेरुक्तत्वात्। वर्त्तत इत्याद्याकारेण च प्रतीयमानस्याभावत्वप्रसङ्गात्। सोऽप्यस्तिपर्य्याय इति चेन्न। उभयसाधारणैकार्थनिर्व्वचनमन्तरेण पर्य्यायत्वस्य प्रतिपादयितुमशक्यत्वात्। यत्रैकस्यास्तिपदप्रयोगः तत्रैवापरस्य वर्त्ततइति प्रयोगात् सामान्येन तावत् पर्य्यायत्वं शक्याधिगममिति चेन्न। प्रमेयाभिधेयादिशब्दानां तथात्वेऽप्यपर्य्यायत्वात्। यत्रैत्यस्य प्रवृत्तिनिमित्तार्थत्वे च तन्निर्व्वचनप्रसङ्गस्तदवस्थः स एवार्थो भावत्वमुच्यतां।किं शब्दोल्लेखगवेषणया।

*अस्तीति* प्रतीतिविशेषणत्वेनोच्यमानोऽस्त्यर्थ उत तच्छब्द इति विकल्पार्थः। भावत्वस्यैवार्थत्वात्तस्याप्यनिरूपितत्वात् न प्रथम इति परिहरति *नेति* अस्त्यर्थस्यानिरूपितत्वमसिद्धं सत्तायास्तदर्थत्वेन निरुक्तेरिति शङ्कते *सत्तेति* अव्याप्त्या दूषयति *नेति* सामान्यविशेषसमवाया निःसामान्या इत्यङ्गीकारात्सत्तासामान्यसंसर्गासम्भवात्तेषामभावत्वप्रसङ्ग इत्यर्थः। सामान्यादीनां सत्तासामान्याभावेपि स्वरूपसत्त्वमस्तीत्यत आह *स्वेति* सत्तैकार्थसमवायित्वं समवायेऽव्यापकमिति द्रष्टव्यम्। शब्दो वेति द्वितीयं कल्पं दूषयति *नापीति* अस्तिशब्दविशेषणप्रतीतिविषयत्वमभावस्यापीत्युक्तातिव्याप्तेरवेत्य-

र्थः। अव्यापकं चेदं लक्षणमित्याह * वर्तत इति * घटो वर्तते भवति भाव इत्यादिशब्दोल्लिखितप्रत्ययविषयस्यापि भावत्वस्वीकारात्तदव्याप्तिरित्यर्थः। अस्तिशब्देन तत्पर्यायस्यापि विवक्षितत्वादस्तिशब्दतत्पर्यायान्यतमशब्दोल्लिखितप्रतीतिविषयत्वस्य लक्षणत्वाभाव्याप्तिरिति शङ्कते * सोऽपीति * असम्भवेन दूषयति * नेति * पर्यायत्वं तदेकार्थप्रतिपादकत्वं तच्च तत्प्रतिपाद्यार्थैक्यावगममन्तरेण न शक्याधिगमं तदवगमे च तदेव भावत्वलक्षणमास्तामित्यर्थः। एकस्मिन्विषये तावदुभयोः शब्दयोः प्रवृत्तिरवगता तेनैक्यावधारणेन पर्यायत्वावधारणं भवतीति शङ्कते * यत्रेति * एकस्यापरस्येति पुरुषभेदो विवक्ष्यते विषयभेदो वेति द्रष्टव्यम्। व्यभिचारेण दूषयति * नेति * अस्त्यादिशब्दाः पर्याया एकस्मिन्विषये प्रयुज्यमानानेकशब्दत्वात्करादिशब्दवदिति वाच्यं तत्प्रमेयवाच्यादिशब्दैर्व्यभिचरतीत्यर्थः। किञ्च यत्रेतियच्छब्देनास्तिशब्दप्रवृत्तिनिमित्तभूतोऽर्थो विवक्षित उतान्यः, नान्यः प्रकृतानुपयोगात्प्रथमश्चेत्तत्राह * यत्रेति * तन्निर्वचनं चाशक्यं स्वरूपसत्त्वादेर्दूषितत्वादित्याशयः। शक्यत्वे वा तदेव भावलक्षणमुच्यतां लाघवादितरथा प्रयोजकगौरवप्रसङ्गादित्याह * स इति *

लक्षणान्तरं शङ्कते।

१ भावत्वस्य लक्षणान्तरनिरासः।

अपरप्रतिषेधात्मकत्वं भावत्वमिति चेन्न। व्यव-

च्छेद्यासम्भवेन परपदवैयर्थ्यात्। भावाभावयोः परस्परप्रतिषेधात्मकतास्वीकाराच्च। तथापि भावो नास्तीत्यभावप्रतिपत्तिवदभावो नास्तीति भावस्याप्रतीतिरिति चेन्न। तावतापि लक्षणानिरुक्तेः। अपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भावत्वमिति चेन्न। चक्षुरादिभिर्भावत्वाग्रहणप्रसङ्गात्। नहि प्रतीयमानत्वं चक्षुरादिग्राह्यं अभावो नास्तीति प्रतीतेर्निर्विषयत्वप्रसङ्गाच्च। न हीयं भावविषया, भवत्पक्षे परप्रतिषेधमुखेन प्रतीयमानत्वात्। नाप्यभावविषयैव तन्निषेधार्थत्वात्। नैवं प्रतीतिरेव स्यादिति चेन्न। शाब्द्याः प्रतीतेः सम्भवात्। आकाङ्क्षादिमद्भिः पदैः प्रतिस्वं संसर्गबोधनात्।

"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि"।

* अपरेति * परप्रतिषेधात्मको न भवतीत्यपरप्रतिषेधात्मकस्तत्त्वं विशेषणं चाभावव्यवच्छेदार्थम्। प्रतिषेधात्मकत्वविशेषणेनाभावव्यवच्छेदेन व्यावर्त्याभावात्परेतिविशेषणं व्यर्थमिति परिहरति * नेति * अभावस्य भावप्रतिषेधत्ववदभावप्रतिषेधत्वं भावस्य स्वीक्रियत इति लक्षणासम्भवमाह * भावेति * प्रतीतिमवलम्ब्य वैषम्यं शङ्कते * तथापीति * भावस्य स्वभावगत्याऽभावप्रतिषेधत्वेपि तन्निषेधमुखेन प्रतीतिर्नास्ति तेन परप्रतिषेधमुखेनाऽप्रतीयमानत्वलक्षणं नासम्भवीत्यभिप्रायः। अविदितपरा-

भिसन्धितया सिद्धान्ती परिहरति * नेति * प्रतीत्यभा-
वेऽप्यर्थस्य तथात्वाल्लक्षणाऽसम्भव इति भावः। स्वा-
भिप्रायं विवृणोति पूर्ववादी *अपरेति* अतिप्रसङ्गबा-
धितत्वेन लक्षणाऽसिद्धिरिति परिहरति *नेति* प्रती-
यमानत्वस्य भावत्वं तदचाक्षुषं स्यादित्यर्थः। तदेव
स्पष्टयति *तर्हीति* प्रतीतेः स्वयम्प्रकाशत्वं मनोवेद्यत्वं
साक्षिवेद्यत्वं वेति न चक्षुरादिविषयत्वमित्यर्थः। भूतले
कुम्भाभावो नास्तीति स्वाभावप्रतिषेधमुखेन प्रतीय-
मानकुम्भस्यापि भावत्वादव्याप्तिरित्याह * अभाव
इति* निर्विषयत्वमेवोपपादयति*नहीति* भावविषय-
त्वाभावे हेतुमाह *परेति* भावविषयत्वाभावेपि
न निर्विषयत्वमभावालम्बनेनोपपत्तेरित्यत आह *
नापीति* भावविषयत्वमभावविषयत्वं च सति धर्मि-
णि चिन्त्यतेऽभावो नास्तीति प्रतीतिरूपधर्म्येव नास्ती-
ति शङ्कते * नैवमिति * एवंविधप्रत्यक्षप्रतीतेर-
सम्भवेपि शाब्दी प्रतिपत्तिरस्त्येवेति परिहरति * ने-
ति * तत्सम्भवः कुत इत्यत आह * आकाङ्क्षेति *
कथं वा शब्दस्येदृशं सामर्थ्यमित्याशङ्क्य किंपुनर्न्या-
येनाह * अत्यन्तेति *

अपरप्रतिषेधमुखेन प्रत्यक्षप्रमितिविषयत्वं भावत्वं
विवक्षितं घटाभावोऽस्तीतिप्रतीतिसम्भवेपि न तस्य
भावत्वप्रसङ्गोऽभावप्रतीतेः पारोक्ष्यादिति भट्टमतानु-
सारेण शङ्कते।

४ भावत्वलक्षणे प्रत्यक्षप्रमितिविषयत्वनिवेशादिशङ्कानिरासः।

प्रत्यक्षप्रतीत स्तथा विवक्षितत्वादयमदोष इति चेन्न।

सर्वस्य भावस्य प्रत्यक्षत्वानङ्गीकारात् । सेश्वरपक्षे सर्वं प्रत्यक्षमिति चेन्न । तेन तेषापमपरप्रतिषेधात्मतया ग्रहणे प्रमाणाभावात् । तेषां विधिरूपतया तथैव ग्रहणमिति चेन्न । विधिरूपत्वस्यानवधारणात् । यदपरप्रतिषेधात्मकतया शब्देनापि बोध्यते तत्तावत् भावरूपमिति चेन्न । परपदवैयर्थ्यात् । तत्त्यागेऽप्यचाक्षुषादित्वापत्तेः । सुरभि चन्दनमित्यादाविवान्योपनीतभागवत् तत्र चाक्षुषत्वं भविष्यतीति चेन्न । तथाविधविषयेण विशिष्टाया बुद्धेर्विषयविशेषणताग्रहे स्वाश्रयोऽप्यंशतः स्यात् । तेनोपलक्षितायास्तथात्वे चाभावविशिष्टभावग्रहार्थस्याभावस्य तथात्वापत्तेः । तेन यदेवं विधं तद्भावरूपमिति च ब्रुवतैवंविधत्त्वाद्भावत्वमन्यद्वाच्यमभेदे च यदेवंविधं तद्भावरूपमिति नियमानुपपत्तेः । अस्योपलक्षणत्वे चोपलक्ष्यस्यान्यस्य वाच्यत्वात् । अस्यैव भावार्थत्वे चाभावो नास्तीति कृत्वा प्रतीयमानस्य भावस्य भावत्वाभावप्रसङ्गात् । भिन्नञ्च भावत्वं न सम्भवति षट्पदार्थव्यतिरेकप्रसङ्गात् । यच्च किञ्चिद्भावत्वं तत्स्वात्मन्यस्ति नोवा, अस्ति चेदात्मनि वृत्तिविरोधः नास्ति चेत्स्वस्यान्यप्रतिषेधमुखेन चाप्रतीयमानस्याभावत्वप्रस-

ङ्ग इति ।

* प्रत्यक्षेति * धर्मादेः प्रत्यक्षत्वानङ्गीकारादव्यापकमितिपरिहरति * नेति * सर्वस्येश्वरप्रत्यक्षत्वान्नाव्यापकमिति शङ्कते । * सेश्वरेति * प्रमाणाभावादसिद्धं लक्षणमिति परिहरति * नेति * धर्मादयोऽपरप्रतिषेधमुखेन कस्यचित्प्रत्यक्षा विधिरूपत्वात् घटवदित्यनुमानं प्रमाणं शङ्कते * तेषामिति * विधिरूपत्वस्य भावत्वात्तस्याव्याप्यनिरूपणाद्धेत्वासिद्धिरिति परिहरति * नेति* धर्मादावव्याप्तिपरिहारं शङ्कते *यदिति* अपरप्रतिषेधात्मकतया शब्देनापि प्रतीयमानत्वं तद्धर्मादावप्यस्तीत्यर्थः। पूर्वोक्तप्रसङ्गबाधेन परिहरति * नेति * अस्तु तर्ह्यपरप्रतिषेधात्मकतया शब्देनापि प्रतीयमानत्वं भावत्वमित्यत आह * तादिति * प्रतीतेश्चक्षुराद्यविषयत्वेन तद्विशिष्टोऽभावोऽप्यचाक्षुषः स्यादित्यर्थः । लक्ष्यधर्मत्वाल्लक्षणस्य लक्ष्यनिष्ठं लक्षणं वाच्यं लक्ष्यस्याव्याप्यनिरूपितत्वादसिद्धिर्लक्षणस्येत्यभिप्रेत्याह * यदिति* अभेदे दोषमाह *अभेदेति* विशेषणविशेष्यभावानियमानुपपत्तेरित्यर्थः । यद्वा लक्ष्यलक्षणयोरैक्यं नेष्टं वृत्त्यवृत्तिभ्यामनुपपत्तेरित्यर्थः।अप्रतिषेधात्मकतया प्रतीयमानत्वमुपलक्षणं न विशेषणमतो नाचाक्षुषादित्वापात इत्यत आह *अस्येति* लक्ष्यलक्षणयोरेकत्वे दोषान्तरमाह *अस्यैवेति* अप्रतिषेधात्मकतया प्रतीयमानत्वस्यैव भावत्वेनास्त्यभाव इति प्रतिषेधात्मकतया प्रतीयमानत्वस्य भावत्वं न स्यादित्यव्याप्ति-

रित्यर्थः । भावत्वं च षट्पदार्थानन्तर्भूतं न वेति विकल्प्य न प्रथमः सम्भवति पदार्थातिरेकप्रसङ्गात् द्वितीयेपि द्रव्याद्यन्तर्भावे सामान्यादेरभावत्वप्रसङ्गः सामान्याद्यन्तर्भावेपि समवायाद्यन्तर्भावत्वप्रसङ्गात् नच द्रव्यादिस्वरूपमेव तदिति सम्भवत्यनुगतव्यवहाराभावप्रसङ्गादित्यभिप्रेत्याह * भिन्नं चेति * किञ्च यत्किञ्चिद्भावलक्षणमुच्यते तत्स्वात्मन्यस्ति वा न वेति विकल्पयति * यदिति * स्ववृत्तिविरोधान्नाद्य इत्याह * अस्तीति * द्वितीये भावरूपस्यात्मन्येव न वर्तते इत्यव्याप्तिरित्याह * नास्तीति *

इति भावत्वखण्डनम् ।

एवं भावत्वनिराकरणेन षट्पदार्थनियमं निरस्य योऽप्यभाव इष्यते तस्याप्यनिर्वाच्यताप्रतिपादनाय प्रकृतव्याजेन शङ्कते ।

५ अभावत्वखण्डनारम्भः ।

नन्वेवमीश्वरे प्रमाणानुपदर्शनात्तदभाव एवापद्यत इति चेत् अभावत्वं किमभिधीयते । निषेधात्मकत्वमिति चेत् तद्यदि प्रतिक्षेपात्मकत्वं तदा भावेऽप्यस्ति, भावाभावयोर्द्वयोरपि परस्परप्रतिक्षेपात्मकत्वस्वीकारात् । अथाभावत्वमेव तदा न निवृत्तः पर्यनुयोगः । एतेन निषेधमुखेन प्रतीयमानत्वमिति निरस्तम् ।

* नन्विति * निषेधात्मकत्वमभावत्वमुत निषे-

धमुखेन प्रतीयमानत्वमुत भावविरोधित्वमिति विकल्पयन्नाह*अभावत्वमिति*प्रथममनुवदति*निषेधेति* किमिदन्निषेधत्वं प्रतिक्षेपात्मकत्वं अभावत्वं वेति विकल्प्य प्रथममनुवदति * तदिति * भावेऽतिव्याप्त्या दूषयति * भावेति * तत्रापि हेतुं दर्शयति *भावेति* अभावत्वं निषेधत्वमिति द्वितीयं शङ्कते * अथेति * किमिदमभावत्वमिति पर्यनुयोगोऽपरिहृतः स्यादिति परिहरति * तदिति * निषेधात्मकत्वमभावत्वमिति प्रथमकल्पोक्तदूषणं निषेधमुखेन प्रतीयमानत्वमिति द्वितीयेऽप्यतिदिशति * एतेनेति * निषेधत्वम्प्रतिक्षेपत्वमभावत्वं वेति विकल्पदूषणयोस्तुल्यत्वेनेत्यर्थः ।

तृतीयं कल्पं शङ्कते ।

६ तृतीयकल्पनिरासः ।

भावविरोधित्वमिति चेन्न । सर्व्वभावविरोधित्वं तद्विशेषविरोधित्वं वा । नाद्यः असिद्धेः नहि घटाभावो भूतलादि विरुणद्धि । नापि द्वितीयः भावानामपि केषाञ्चित्तथाभावात् । अथ सहानवस्थानं विरोधो विवक्षितः स भावानां नास्तीति चेन्न । गोत्वाश्वत्वादौ तस्यापि भावात् । एकविधावन्यनिषेधः स इति चेन्न । भेदे भावभेदयोरेव प्रसङ्गात् । एकविधिरेवापरनिषेधः स इति चेन्न । निषेधस्याभावार्थत्वे भावार्थत्वे चासिद्धेः । नास्तीति प्रतीयमानत्वमिति चेन्न । घटाभावो नास्तीति घटस्य तथा-

प्रतीयमानतया अभावत्वापत्तेः । अस्तीति भावत्वनिरुक्तौ यदुक्तं दूषणं तदापत्तेश्च ।

* भावेति * नैतद्विकल्पासहत्वादित्याह *नेति* सर्वभावविरोधित्वस्यैव मुख्यत्वादाद्य एवास्त्वित्यत आह * नाद्य इति * तामेवासिद्धिमुपपादयति * नहीति * द्वितीयेऽपि वध्यघातकभावो विरोध उत सहानवस्थानमिति विकल्प्य प्रथममतिव्याप्त्या दूषयति * नेति * आखुनकुलादीनामपि वध्यघातकभावादभावत्वप्रसङ्ग इत्यर्थः । द्वितीयं शङ्कते * अथेति * लक्षणमात्रं सहावस्थितानामेव वध्यघातकभावात् सहानवस्थानविरोधाभावान्नातिव्याप्तिरित्यर्थः । गोत्वाश्वत्वादिसामान्यानां नियतव्यक्तिवृत्तीनां कदाचिदपि सहावस्थानाभावादतिव्याप्तिरिति दूषयति * नेति * गौरयन्नास्तीतिबोधितेऽश्वस्य निषेधो न सिद्ध्यति घटाभावोऽस्तीति बोधिते घटनिषेधः सिद्ध्यति तेनैकविधावन्यनिषेधो भावाभावयोः विरोधो विवक्षित इति शङ्कते * एकेति * एकविध्यन्यनिषेधयोर्भेद उताभेद इति विकल्प्य प्रथमं दूषयति * नेति * गौरयमित्युक्तेऽश्वो न भवतीति तन्निषेधः सिद्ध्यत्यश्वाभावाविनाभावित्वात् गोरित्यतिव्याप्तिरित्यर्थः। अभेदपक्षमुत्थापयति *एकेति* तत्र निषेधशब्देन अभाव उच्यते किं वा नास्तीतिप्रतीयमानत्वमिति विकल्प्य नाद्योऽभावत्वस्याऽद्यापि अनिरूप्यमाणतयाऽसिद्धेरिति परिहरति * नेति* नास्ति-

प्रत्ययविषयत्वं तदिति द्वितीयं शङ्कते * नास्तीति * अतिव्याप्त्या दूषयति * नेति * नास्तीति प्रतीयमानत्वं विरोधस्तद्यानभाव इत्युक्तं स्यात्तथा च घटाभावो नास्तीति स्वाभावनिषेधरूपतया प्रतीयमानस्यापि घटस्याभावरूपत्वं प्रसज्यत इत्यर्थः। दूषणान्तरमतिदिशति *अस्तीति* नास्तीति प्रतीतेर्नास्त्यर्थो विशेषणमुत तच्छब्द आद्ये तदर्थस्याभावत्वस्याद्याप्यसिद्धेरसम्भवो द्वितीयेऽपि न भवति न वर्तत इत्यादिशब्दोल्लिखितप्रत्ययस्याभावत्वं न स्यात् भावे नास्तिप्रत्ययाविषयत्वस्य दर्शितत्वादातिव्याप्तिश्चेत्यादि द्रष्टव्यमित्यर्थः।

अभावलक्षणान्तरं शङ्कते।

७ अभावस्य लक्षणान्तरनिरासः।

प्रतियोगिनिरूपणाधीननिरूपणत्वमिति चेन्न। प्रतियोगिनः परार्थत्वेऽतिप्रसङ्गात् विरोध्यर्थत्वे चैतदनिरुक्तेः असदर्थत्वे नञर्थस्यासिद्धेः अतीतानागतज्ञानादौ विषयादिनाऽतिप्रसङ्गात्।

*प्रतीति* प्रतियोगिज्ञानजन्यज्ञानविषयत्वमभावत्वमिति यावत्। भेदोऽप्यन्योन्याभाव इति नातिव्याप्तिः। प्रतियोगीति विशेषणं भावव्युदासार्थम्। प्रतियोगिशब्देन परमुच्यते किं वा विरोध्युतासदिति विकल्प्य प्रथमं दूषयति * नेति * अन्यनिरूपणाधीननिरूपणीयत्वमित्युक्तं स्यात्तथा चातिव्याप्तिः

संयोगसमवायादिसम्बन्धस्य सम्बन्धिनिरूपणीयत्वादित्यर्थः॥ द्वितीयं दूषयति *विरोधीति* विरोधानिरुक्तौ विरोधिनोऽप्यनिरुक्तिर्विरोधश्च सहानवस्थानादिरूपो निर्वक्तुमशक्य इत्युक्तमित्यर्थः। तृतीयं प्रत्याह *असदिति* असत्त्वमभावस्तथाचाभावेनैवाभावनिरूपणं इत्यात्माश्रयात् असम्भवः। असदर्थत्वेऽसत्त्वस्यासिद्धिरिति पाठान्तरं तत्रैवमर्थः प्रतियोगिपदस्यासदर्थत्वेऽसन्निरूपणाधीननिरूपणमित्युक्तं स्यात्तथाचासिद्धिरभावस्याव्याप्यसिद्धेर्घटाभावः पटाभाव इति भाव-([1]निरूपणत्वादभावस्येति । असन्निरूपणाधीननिरूपणत्वस्यातिव्याप्तिमाह * अतीतेति * अभूद्वृष्टिरिति ज्ञानविधाने च तत्कालमविद्यमानांविषयेण निरूपणीयेऽनुमितभाविलिङ्गे तत्कालसमानिरूपणीयेनुमितभाविलिङ्गेन तत्कालमतानिरूपणीयेति स्वप्रदेशजलपूरणाज्ञाने भाव)त्वंप्रसङ्ग इत्यर्थः। विषयादिना निरूपणीये ज्ञानादावपि प्रसङ्गादिति सम्बन्धः।

भङ्गान्तरम्भणितुं विकल्पयति।

८ लक्षणेदोषान्तरकथनाय विकल्पः।

यच्च किञ्चिदभावस्य लक्षणमुच्यते स भावोऽभावो वा स्यात् । नाद्यः भावस्याभावानाश्रितत्वात् विषयिधर्म्मेण च कथमपि तथात्वे तन्निर्वाच्यं स्यात् । अ-

---

१ एतावान् ( ) ग्रन्थः सो० पु० नास्ति।

न्यदेव तद्वदिति चेन्न । तद्वदभावस्याभावत्वे स्ववृत्तिः भावत्वे च व्याघातात् । न द्वितीयः तस्यात्मनि वृत्तौ विरोधापत्तेः अवृत्तावव्यापकत्वप्रसङ्गादिति ।

* यच्चेति * अभावस्य लक्ष्यत्वात्तल्लक्षणं भावत्वं युक्तमित्यत आह * नाद्य इति * भावत्वे द्रव्याद्यन्यतमं स्यात् द्रव्यादि नाभावाश्रितमित्यसम्भावि लक्षणमित्यर्थः । माभूद्भावस्याभावाश्रितत्वं तथापि तद्व्यवहारः स्यात् यथा विषयानाश्रितेनैव ज्ञानेन विषयस्तद्वानुपदिश्यते ज्ञात इति तद्वद्भावस्य लक्षणस्याभावानाश्रितत्वेपि विषयिणि ज्ञाने वर्त्तमानत्वात्तद्विषयेऽप्यभावे लक्षणवत्वव्यपदेशः स्यादित्याशङ्क्याह * विषयीति * ज्ञानत्वादिषु परिगणितेषु विषयिधर्मेषु त्वदुक्तलक्षणमन्तर्भवतीति निर्वाच्यमित्यर्थः । परिगणितविषयिधर्मेषु ज्ञानत्वादिषु तन्नान्तर्भवति किन्तु ततोऽव्यतिरिक्तमेवेति शङ्कते * अन्यदिति * ज्ञानत्वादिव्यतिरिक्तमेव तद्वदिति तत्तुल्यं विषयिधर्मान्तरमभावलक्षणमित्यर्थः । भवतु यत्किञ्चिदभावलक्षणं तथापि तल्लक्षणविशिष्टाभावस्याभावत्वमेवोत भावत्वमिति विकल्प्य प्रथमं दूषयति * नेति * लक्षणविशिष्टस्य तद्वतोऽप्यभावत्वं तल्लक्षणं तत्र न वर्त्तते वर्तते वा, यदि न वर्तते तर्हि तत्रैवाव्याप्तिर्यदि वर्तते तदा स्वविशिष्टे स्ववृत्तिरित्यंशत आत्माश्रय इत्यर्थः । स्वरूपेणाभावोऽपि लक्षणविशिष्टत्वेन भाव एव भवतीति द्वितीये दोषमाह * भावत्वेचेति * अभाव एव लक्षणवि-

शिष्टो ऽप्यभावोभाव इति वाक्यमेव व्याहतं नहि भावोऽभावो भवतीत्यर्थः। अभावलक्षणमभाव इति द्वितीयं कल्पं दूषयति * न द्वितीय इति * अभावरूपमभावलक्षणं स्वात्मनि वर्तते न वेति विकल्प्य प्रथमं प्रत्याह * तस्येति * द्वितीये तस्मिन्नेवाव्यापकमित्याह * अवृत्ताविति *

अभावस्य लक्षणान्तरं शङ्कते।

९ अभावस्य लक्षणान्तरनिरासः।

प्रतिक्षेप्यविशिष्टमेव यत् प्रतिभाति सोऽभाव इति चेन्न। प्रतिक्षेपानिरुक्तौ प्रतिक्षेप्यानिरुक्तेः। विशिष्टशब्दार्थश्च निर्वचनीयः स्यात्। तत्र विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा। नाद्यः दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः। दण्डिनमानयेत्युक्तेऽतदानयनप्रसङ्गाच्च। तत्सम्बन्धेनोपलक्षितत्वाच्चथेति चेन्न। अतद्गत उपलक्ष्यत्वेऽतिप्रसङ्गात्। तद्गतश्चान्यस्त्वात्। सम्बन्धोहेतुः स च तदधिकरण एवेति चेन्न। सम्बन्धात्तदधिकरणसम्बन्धान्यत्वापत्तेरित्येष न पन्थाः। तत्सम्बन्धिनि तत्र व्यवहार इति चेन्न। तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात्। एवं परम्पराकल्पनायामप्यनवस्थामात्रं नतु व्यवहार्य्यगतो विशेषः कश्चित्।

*प्रतीति* घटाभावपटाभाव इति प्रतिक्षेप्यघटादिविशिष्ट एव यो भाति सोऽभाव इत्यर्थः । घटत्वविशिष्टावभासघटे प्रतिक्षेप्यविशिष्टावभासधर्मिणि चातिव्याप्तिपरिहाराय विशेषणद्वयम् । प्रतिक्षेपोऽभावः तन्निर्वचनमन्तरेण प्रतिक्षेप्यानिर्वचनात्तद्विशिष्टलक्षणासिद्धिरिति परिहरति *नेति* प्रतिक्षेप्यानिरुक्त्या लक्षणं प्रतिक्षिप्य विशिष्टानिरुक्त्यापि लक्षणासिद्धिमाह * विशिष्टेति * विशिष्टानिर्वचनीयतां प्रपञ्चयितुं विकल्पयति * तत्रेति * विशिष्टं विशेषणादिभ्यस्तत्त्वान्तरमिति मीमांसकपक्षं प्रतिक्षिपति * नाद्य इति* दण्डी दण्डपुरुषतत्सम्बन्धव्यतिरिक्तश्चेत्तानन्तरेणाऽपि प्रतीयेत 'घटव्यतिरेकेणाऽपि पटवन्न प्रतीयतेऽतः प्रतीतिबाधितमित्यर्थः । दण्डपुरुषादिप्रतीतिविलक्षणप्रतीतिविषयत्वेन तानन्तरेण स्वातन्त्र्येणास्ति प्रतीतिरित्याशङ्क्याह * दण्डिनमिति * विशिष्टान्यत्वे दण्डिनमानयेत्युक्ते दण्डपुरुषतत्सम्बन्धानयनं न स्यादस्ति चानयनं तस्मादानयनव्यवहारकारणीभूतं विशिष्टज्ञानमपि विशेषणादिविषयं वाच्यं ज्ञानेच्छाप्रवृत्तीनां कार्यकारणभूतानां समानविषयत्वनियमादित्यर्थः । दण्डिनोऽन्यत्वेपि तस्य दण्डपुरुषसम्बन्धोपलक्षितत्वात् दण्डिनमानयेत्युक्ते दण्ड्यानयनवद्दण्डाद्यानयनमपि स्यादिति शङ्कते * तदिति * विशिष्टसम्बन्धितया विशिष्टवाचिना शब्देन दण्डादयोऽप्युपलक्षिता अतस्तेषामानयनमिति वा शङ्कते * तदिति * दण्डादिभिरुपलक्ष्यमाणो दण्डी दण्डा-

त्यसम्बन्धितयोपलक्ष्यते उत सम्बन्धितयेति विकल्प्य प्रथमं दूषयति * नेति * विशिष्टमात्रस्योपलक्ष्यत्वा-दुपलक्षणस्य तद्बहिर्भावादुपलक्षणानयनं न स्याद-न्यथाऽन्यस्मिन्नुपलक्षितेऽन्यत्र व्यवहार इत्यतिप्रस-क्तिरित्यर्थः। द्वितीयं दूषयति * तदिति * प्रथमवि-शिष्टवत् द्वितीयविशिष्टस्यापि तद्वतो विशेषणादि-भ्योऽन्यत्वात् दण्डाद्यानयनं तत्र स्यादन्यथाऽतिप्रस-क्तेरेवेत्यर्थः। यद्यप्येतद्वानुपलक्ष्यते तथापि तदुपल-क्षणे दण्डादिसम्बन्धो हेतुः स च विशिष्टविशेषणा-द्युभयाधिकरण इति दण्डाद्यानयनं स्यादुपलक्षणहेतु-सम्बन्धाधिकरणत्वादिति शङ्कते *सम्बन्ध इति*सम्ब-न्धमात्रमुपलक्षणहेतुरुत दण्डाद्यधिकरणमात्रे घटादेर-प्यानयनप्रसङ्गो द्वितीये दण्डाद्यधिकरणसम्बन्धो न दण्डादावस्ति स्ववृत्तिविरोधादिति तदानयनं न स्या-दिति परिहरति * नेति * सम्बन्धात्–सम्बन्धमात्रा-त्तदधिकरणसम्बन्धस्येति विशेषणविशेष्यअधिकरणं यस्य सम्बन्धस्य तस्य देवदत्तदण्डविशिष्टस्य केव-लसम्बन्धादन्यत्वाद्दण्डादेर्व्यवहाराविषयत्वापत्तिरित्य-न्वयः। उत्तरोत्तरसम्बन्धाङ्गीकारेऽप्ययमेव न्याय इ-त्याह*इतीति* उपलक्षणपक्षोक्तदोषपरिहाराय दण्ड-पुरुषतत्सम्बन्धानां दण्डिविशेषणत्वाद्दण्डिनि व्य-वह्रियमाणे तेषामपि व्यवहार इति शङ्कते *नदिति* विशिष्टवैशिष्ट्यं यत्तस्यापि विशिष्टत्वाद्विशेषणादि-भ्यश्च तत्त्वान्तरत्वान्न दण्डादिव्यवहारनियामकत्वमि-ति परिहरति * नेति * तदपि वैशिष्ट्यं देवदत्तादि-

विशिष्टतया तद्व्यवहारनियामकं स्यादित्याशङ्क्याह * एवमिति * तत्तद्वैशिष्ट्यस्यापि विशेषणादिभ्योऽन्यत्वात् व्यवहारनियमो न स्यात् किन्त्वनवस्थामात्रं परिशिष्यत इत्यर्थः ।

इदानीं विशिष्टस्य विशेषणादिभ्योनन्यत्वं तार्किकमतं दूषयति ।

१० विशिष्टस्य विशेषणादिभ्योऽनन्यत्वमिति तार्किकमतनिरासः ।

द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गो विशेषाऽभावात् । न ते प्रत्येकं दण्डिपदार्थाः किन्तु मिलिता इति चेत् मिलिता इति किं ते च मेलकं चाभिधीयते उत तेभ्योऽन्य एव कश्चित्, आद्ये प्रत्येकं स एव प्रसङ्गः मेलकेप्यधिकः । द्वितीयस्तु प्रतीतिव्यवहारविरोधात्पूर्वनिरस्तः । एकज्ञानारूढो वा अविरलनानाज्ञानारूढो वाऽनेकश्च सम्बन्धश्च विशिष्टपदार्थ इति चेन्न । घटपटाविति बुद्धावारूढौ घटपटौ सम्बन्धश्च घटपटरूपो विशिष्टः स्यात् । घटत्वपटत्वसम्बन्धानां तद्बुद्धावारूढानामभ्युपगमेन सम्बन्धस्यापि तद्बुद्ध्यारोहोपगमध्रौव्यात् अन्यथा घटत्वविशिष्टरूपो घटः पटत्वविशिष्टरूपश्च पटः कथमभ्युपेयस्तत्र । नच घटपटावित्यपि विशिष्टमेव, स्वतन्त्रयोः घटपटयोः परस्परासम्बन्धयोस्तत्र व्यवहारात् न पुनर्यथा दण्डी पुरुषस्तथा घटी पटः पटी घ-

ट इति वा तत्र व्यवहारः । न चैकज्ञानाद्यारूढतैव तयोर्न मन्तव्या, यतो घटपटाविति द्वित्वं तयोस्तद्द्वयानवगाहिना कथं विज्ञानेनावगाह्येतेति प्रत्यभिज्ञाप्रस्तावोक्तान् दोषानाह्वास्यामः । अत एवाविरलनानाज्ञानारूढतापि विशिष्टता निरवकाशा ।

* द्वितीय इति * दण्डादीनां प्रत्येकं विशिष्टत्वाविशेषादित्यर्थः । दण्डादीनां प्रत्येकं विशिष्टत्वाभावात् न प्रत्येकं विशिष्टव्यवहारप्रसङ्गो मिलितानामेव पदार्थानां विशिष्टपदार्थत्वस्वीकारादिति शङ्कते * न त इति * तदेव दूषयितुं विकल्पयति * मिलिता इति * मेलकमिति यावत् प्रत्येकं विशिष्टत्वाविशेषात्तद्व्यवहारप्रसङ्ग एव प्रथमकल्प इत्याह * आद्य इति * मेलके च दण्डिव्यवहारप्रसङ्गोऽतिरिच्यते इत्याह * मेलक इति * मेलकोविशेषणादिभ्योऽन्य एव मिलितपदेनोच्यत इति द्वितीयं दूषयति * द्वितीयस्त्विति * देवदत्तादिप्रतीतिं विनापि तत्प्रतीतिः स्यात्तथा तदानयनं विनापि दण्ड्यानयनं स्याद्वस्त्वन्तरत्वात् घटवदिति विरोध इत्यर्थः । एकज्ञानारूढत्वेनाविरलनानाज्ञानारूढत्वेन वा मिलितपदप्रयोगो न तत्त्वान्तरत्वाभिप्रायेणातो न प्रतीतिविरोधो नापि केवलदण्ड्यादौ प्रसङ्ग इति शङ्कते * एकेति * एकज्ञानारूढः सम्बन्धोऽनेकश्च विशिष्टपदार्थः अथवाऽविरलनानाज्ञानारूढः सम्बन्धोऽनेकश्च विशिष्टपदार्थ इत्यन्वयः । एकज्ञानारूढ इत्युक्ते घटमात्रे

ऽतिप्रसङ्गनिवारणाय सम्बन्ध इत्युक्तम्। केवलसम्बन्धनिवारणायानेकश्चेति। घटपटौ रूपं समवेतं इत्यनेकप्रतीतिविषयनिवारणायैकेति। द्वितीयलक्षणेऽपि कालाविलम्बेनोत्पाद्यमानज्ञानारूढानां विशिष्टत्वं वारयत्यविरलेति। अतिव्यापकत्वेन दूषयति * नेति * विशिष्टमेव दर्शयति * घटपटरूप इति * घटपटाविति-बुद्धौ न सम्बन्धो भात्यतो न वैशिष्ट्यप्रसङ्ग इत्याशङ्क्याह * घटत्वेति * घटपटयोर्मिथः सम्बन्धास्फुरणेऽपि घटत्वसामान्यात्सम्बन्धप्रतीतिरस्तीत्यर्थः। विपक्षे दोषमाह * अन्यथेति * घटबुद्धौ घटत्वस्य पटबुद्धौ पटत्वस्य सम्बन्धाप्रतिभासे न घटत्वादिजातिसिद्धिः प्रमाणान्तराभावादित्यर्थः। घटपटरूपस्य विशिष्टस्य लक्ष्यत्वेन स्वीकारान्न लक्षणस्य तत्रातिव्याप्तिरित्याशङ्क्याह * नचेति * कुत इत्यत आह * स्वतन्त्रेति * व्यवहारस्वातन्त्र्यमेव दर्शयति * न पुनरिति * घटपटाविति द्विवचनप्रयोगात् द्वित्वमेव तयोर्भाति न पुनस्तावप्येकज्ञानेनातो न वैशिष्ट्यप्रसङ्ग इत्यत आह। * नचेति * आदिपदेनाविरलनानाज्ञानारूढत्वग्रहणम्। कुतो न मन्तव्यमित्यत आह * यत इति * तत्तदन्तार्विशिष्टाश्रयमेकत्वं तदुभयानवगाहिनाऽनुभवेन स्मरणेन वा गृह्यतेत्युक्तं तथा घटपटस्वरूपानवगाहिज्ञानेन तद्द्वित्वं नावगाह्यतेत्यर्थः। उक्तातिव्याप्तिं द्वितीयलक्षणेऽप्यतिदिशति * अत इति * घटपटरूपोर्विशिष्टः स्यादित्युक्तदोषादेवेत्यर्थः। दण्डीति प्रत्ययेन घटपटाविति प्रत्ययस्य तुल्यत्वादिति द्रष्टव्यम्।

उक्तातिप्रसङ्गनिवारणाय लक्षणान्तरं शङ्कते।

११ अतिप्रसङ्गनिवारकलक्षणान्तरनिरासः।

अथाप्रकाशमानासम्बन्धोऽनेक एकबुद्ध्यारूढस्तथा नचैवं घटपटौ तत्कथमुक्तदोषापत्तिरिति चेन्न। अप्रकाशमानोऽसम्बन्धोऽययोरित्ययमप्यर्थो विशकलित इति घटत्वपटत्वव्यक्त्यादिवैशिष्ट्यमपि तत्र भज्येताविशेषात्।

* अथेति * घटपटावित्यस्य वैशिष्ट्यव्यावृत्तये विशेषणमप्रकाशेति। एकस्वरूपव्यावृत्तयेऽनेकेति। अनेकबुद्ध्यारूढव्यावृत्त्यर्थमेकबुद्धीति। तथा—विशिष्ट इत्यर्थः। घटपटयोस्तु परस्परमसम्बन्ध एव प्रकाशतेऽतोनाप्रकाशमानासम्बन्धत्वमतो न वैशिष्ट्यापत्तिरिति निगमयति * नचेति * लक्षणवाक्यस्य पर्यवसितमर्थं दर्शयन्परिहरति * नेति * इत्युक्तं स्यादित्यध्याहारः। अस्त्वयमर्थः को दोष इत्यत आह * अयमपीति * घटपटावित्येवंरूपोऽर्थः सङ्घटितोभासमानोऽपि त्वया विशकलित इति कृत्वा घटपटावित्यस्मिन् ज्ञाने घटत्वपटत्वाभ्यां सम्बन्धप्रतीतावपि तयोः परस्परसम्बन्धाप्रतीतेः स्वजातिभ्यां वैशिष्ट्यप्रतीतिरपि न स्यादित्यर्थः।

पुनरपि घटपटावित्यस्य विशिष्टत्वप्रसङ्गपरिहाराय लक्षणान्तरं शङ्कते।

१२ अतिप्रसङ्गनिवारक लक्षणान्तरनिरासः।

अथ धर्मधर्मिसम्बन्धाः स्वतन्त्रा एवैकबुद्ध्यारूढा-

स्तथा नच घटपटौ धर्म्मधर्म्मिरूपावित्यनतिप्रसङ्ग इति चेन्न । धर्म्मत्वस्यैकस्य दण्डादिगुणादिसाधारणस्य वक्तव्यत्वापातात् । सोऽप्येष्टव्य इति चेत् । इष्यतां परं तस्यापि वालुकावद्विशकलितस्योपगन्तव्यत्वेन धर्म्म्येव किन्न धर्म्मः स्यात् । तथाप्रतीत्यभावान्न स्यादिति चेन्न । त्वदुक्तैकप्रतीत्यारोहस्याविशेषे प्रतीतिरपि तथा किन्न स्यात् । मास्तु धर्म्मत्वमनुगतं तत्तद्रूपादिपदार्थस्वरूपमेव तथा विचित्रं यत्तदेव धर्म्मिणा सम्बन्धेन चसममेकबुद्ध्यारूढं विशिष्टं नान्यदिति चेन्न । तेषां स्वरूपाणां भेदेन नानाभूतेषु विशिष्टेषु अनुगता विशिष्टबुद्धिर्न स्यात् । सम्बन्धमपि तर्हि विलुप्तैवस्वभावादेव रूपादिकं तथाविधमाधत्ताम् । एतदपि किं नस्यादितिचेत्तर्हि वराकोधर्म्म्यपि विसृज्यतां यथा विना सम्बन्धं विशिष्टबुद्धी रूपादिस्वभावसामर्थ्यात्समर्थिता तथा विना धर्म्मिणमप्यास्त्विति जितं जैनैः ।

* अथेति * स्वतन्त्रा इति विशिष्टस्यानुपसर्जनीभूता इतिविशेषणं–दण्डादीनां विशिष्टस्य विशेषणत्वं कथितदूषणं परिहर्तुम् । धर्माधर्मविशेषणेन कथमुक्तप्रसङ्गनिवारणमित्यत आह * नचेति * परिहरति *नेति* दण्डी देवदत्तो रक्तः पट इति द्रव्यगुणादिभिर्द्रव्यगुणादेर्विशिष्टत्वं दृश्यते तस्य द्रव्यगुणादि प्रति

द्रव्यगुणादेर्द्धर्मत्वं वाच्यमेवञ्च तद्धर्मत्वमननुगतं चे-दव्याप्तिरनुगतं चेद्दर्शनीयं तदित्यर्थः । धर्मत्वाधि-करणं धर्म इति दण्डादौ धर्मत्वं वक्तुं श-क्यत इति शङ्कते * सोऽपीति * विशिष्टस्याद्या-प्यसिद्धेः धर्मत्वयुक्तोधर्मइति वक्तुमशक्यत्वाद्धर्मत्वं दण्डादयश्च अयःशलाकावत् विशकलिताः स्वीका-र्यास्तथाच धर्मिणोऽपि धर्मत्वं किं न स्यात् विशक-लितधर्मत्वस्य तत्रापि भावादिति परिहरति * इष्य-तामिति * धर्मिणो धर्मत्वविशिष्टत्वेन प्रतीतिव्यवहा-राभावान्न धर्मत्वमिति शङ्कते * तथेति * एकबुद्ध्या-रूढत्वं विशिष्टव्यवहारनिदानं त्वयाऽङ्गीकृतं तदत्रापि सम्भवति धर्मधर्मिसम्बन्धा एकबुद्ध्यारूढा. इत्युक्त-त्वादतो धर्मिणोपि धर्मत्वविशिष्टव्यवहारः स्यादिति दूषयति * नेति * यद्वा पूर्वोक्तघटपटस्वरूपैकविशि-ष्टप्रसङ्गे तथाप्रतीत्यभावादित्याशङ्कापरिहार इति योज्यम् । अनुगतं धर्मत्वं निरूपणन्न सहते चेन्माभूत् का क्षतिरिति शङ्कते * माऽस्त्विति * तर्हि द्रव्यादिषु अनुगतधर्मबुद्धिर्न स्यान्निमित्ताभावादित्याशङ्क्याह * तदिति * रूपादीनां स्वरूपमेव तादृशबुद्धिनिमित्तमि-त्यर्थः । किं तद्विचित्रस्वरूपमिति दर्शयति * यदिति * रूपादेः स्वरूपमेव धर्मिणा सम्बन्धेन च सहितमेक-बुद्ध्यारूढं विशिष्टं न तत्वान्तरमित्यर्थः । स्वानुगतो-पाध्यभावे क्षतिमाह * नेति * स्वरूपाणां व्यावृत्त-त्वेनानुगतबुद्धिनिदानत्वाभावात् अनुगतविशिष्टबु-द्धिरनुगतधर्मबुद्धिश्च न स्यादित्यर्थः । धर्मिणा

सम्बन्धेन च साहित्यं यदुक्तं तदपि न सिध्यति स्वभाववैचित्र्यं वदत इत्याह *सम्बन्धमिति* यथाऽनुगतमुपाधिं लुम्पसि तथा सम्बन्धमपि लुम्प एकज्ञानारूढं विशेषणं विशेष्यं च विशिष्टप्रत्ययमाधास्यति स्वभावादेवेत्यर्थः। सम्बन्धोऽपि लुप्यतामधर्मिष्ठ एव प्रसङ्ग इत्याह *एवमिति* प्रतीयमानसम्बन्धत्यागे धर्मिणोऽपि त्यागप्रसङ्ग इति परिहरन्ति *तर्हीति* कथं धर्मिविसर्जने धर्मिविशिष्टप्रत्यय इत्यत आह *यथेति* सम्बन्धाभावेऽपि रूपादिस्वरूपसामर्थ्यादेव विशिष्टप्रत्ययवत् धर्म्यभावेऽपि तत एव विशिष्टप्रत्ययः स्यादिति न रूपादिमद्घटादि धर्मिभूतमस्ति किन्तु रूपादिभिरेव रूपवान् घट इत्यादिव्यवहारो निर्वर्त्यते स्वलक्षणत्वात् सर्वस्येति स्वीकुर्वद्भिर्बौद्धैर्जितमित्यर्थः।

शुक्लः शङ्ख इत्यादिसंसृष्टप्रत्यये धर्मातिरिक्तधर्मिप्रतीतेस्तदपलापोऽशक्योऽनुभवविरोधादिति प्रतीतिबलेन चोदयति।

१३ प्रतीतिबलेनातिरिक्तधर्मिसिद्धिनिरासः।

स्यादप्येवं यदि शुक्ल इत्येतावन्मात्रमेव प्रतीयेत, किन्तु शुक्लः शङ्ख इत्यादिना प्रत्ययेन सामानाधिकरण्यमुल्लिखता धर्म्यप्यानीय दीयत इति चेन्न। शङ्खत्वजातेरुपाधेर्वा रूपादेरविरलतादृगवस्थितस्य वा स्वरूपवैलक्षण्यमेव तत्पदेऽभिधित्सता येन विनाऽप्यधिकरणं सामानाधिकरण्यव्य-

वहारः स्यात्। किञ्च नैतावन्मात्रं, बुद्धिमादाय तदर्थगतवैचित्र्यान्तरखण्डने बुद्धिरेव स्वकारणसामर्थ्यात्तथोत्थिता तत्तद्व्यवहारप्रसवित्री स्वीक्रियतां कृतमर्थव्यसनेन।

तस्मात्—

"प्रत्येतव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकम्।
धियं निवेश्य लुम्पद्भ्यो भङ्गं साक्ष्येव यच्छति" ॥ १॥

अनुभवोऽन्यथासिद्ध इति परिहरति * नेति * शङ्खत्वस्य जातेः स्वरूपवैलक्षण्यमेव वा नैरन्तर्येणैकबुद्ध्यारूढतयाऽवस्थितस्य रूपादेः स्वरूपवैलक्षण्यमेव वा धर्मिपदेऽभिधीयतां किमन्येन धर्मिणेत्यर्थः। अतिप्रसङ्गान्तरमाह * किञ्चेति * नैतावन्मात्रं दूषणमविरलनानाज्ञानमादाय विशेषणाव्यतिरिक्तविशिष्टखण्डने वैशेषिकेण क्रियमाणे न तस्य स्वरूपादिरपि सिध्येत् पूर्वपूर्ववासनासमुत्थितसंवित्तेरेव तत्तद्व्यवहारजनकत्वसम्भवादिति बाह्यार्थापलाप एव सर्वत्र स्यादित्यर्थः। यस्माद्दण्डादिप्रत्ययविलक्षणे दण्डीतिप्रत्यये सति तदपलापोऽशक्यस्तस्मादिति फलितं श्लोकेन सङ्गृह्णाति। एकैकस्मिन्यादृशः प्रत्ययः शब्दो वा ततो विलक्षण एव दण्डीतिप्रत्ययः शब्दश्चातो ज्ञातव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकं तन्न लुप्यते वैशेषिकादिभिर्विशिष्टं वस्त्वन्तरं नास्ति विलक्षणबुद्धिरेव तद्व्यवहारं जनयतीतिवदद्भिस्तेभ्यो

भङ्ग मनुभव एव प्रयच्छतीत्यर्थः ।

अर्थवैचित्र्यस्थाने धियं निवेश्यार्थं खण्डयतोपि नानुभवविरोधो यतोऽदृश्ये प्रतियोगिनि धर्मिमात्रधियमभावस्थानेऽभिषिक्तवानितिशङ्काव्याजेन तस्याप्यंशतोऽनुभवविरोधमाह ।

१४ विशिष्टनिरासे युक्त्यन्तरम् ।

यत्तु केन चिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता तत्तस्य परमुचितम् ।

गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् ।
प्रसिद्धएव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः ॥२॥

अपि चैकबुद्ध्यारूढोऽनेकश्च सम्बन्धश्च विशिष्टइति पक्षे योप्येवंरूपवैलक्षण्यभाग्विशिष्ट इति कथ्यते सोऽप्ययं विशिष्टोऽविशिष्टाद्वैलक्षण्येन बोध्यमानो ज्ञानमन्तर्भाव्यैव स्यादिति तत्र तत्रापि ज्ञानान्तरनिवेशनेऽनवस्था क्वचिदनिवेशे तदभावादविशिष्टत्वे शेषस्याऽऽमूलमविशिष्टत्वापातः । तद्योग्यस्तथेति चेत् । न तर्हि योग्यतापि तद्विशेषणं वालुकावदसंलग्नाऽतिप्रसञ्जिकैवेत्युक्तमावर्त्तते ।

*यत्त्विति* यत्तु परं तत्तस्यैवेतियावत् । उक्तमर्थं श्लोके नोपनिबध्नाति * गुरुरिति * गुरुरभावस्य स्थाने धियमभिषिक्तवानितियत् तत् स्थाने स्थानेशब्दो निपातत्वात् युक्तमित्यस्मिन्नर्थे । बुद्धो बन्धुर्यस्य स बुद्धबन्धः क्ष-

णिकप्रमाणसम्बन्धिसत्त्वमङ्गीकुर्वताऽभावक्षणिकत्वा-
द्युपगमादिति भावः। विशिष्टखण्डने युक्त्यन्तरं वक्तुं
पूर्वोक्तलक्षणमनुवदति * अपि चेति * एवंरूपवैल-
क्षण्यहीनेभ्यो वैलक्षण्यगुणो विशिष्टोऽस्तु को दोष
इत्यत आह *सोऽपीति * स तावद्विशिष्टः अविशि-
ष्टाद्वैलक्षण्येन बोध्यते नवा नचेदविशिष्टाद्विशिष्टस्य
वैलक्षण्यज्ञानाभावात् विशिष्टस्याविशिष्टाद्वैलक्षण्यप्र-
सिद्ध्येत् बुध्यते चेत् तद्विशिष्टाद्वैलक्षण्येन बुद्धादविशि-
ष्टाद्विशिष्टवैलक्षण्यं बुध्यत उताबुद्धाद्यद्यबुद्धात्तदा स्व-
तो वैलक्षण्येनाबुद्धात् स्वस्य वैलक्षण्यज्ञानाभाववत्त-
तोपि तन्न स्याद्बुद्धाच्चेत्तदास्माद्वैलक्षण्येन स्वस्य वै-
लक्षण्यज्ञानाभावात् सोपि न स्यात्तदर्थं तत्र तत्र
ज्ञानान्तरनिवेशनेऽनवस्थेत्यर्थः। यद्यनवस्थापरिहा-
राय क्वचिद्वैलक्षण्यज्ञानन्नेष्यते तत्राह * क्वचिदिति *
यत्र वैलक्षण्यशृङ्खलाविच्छेदस्तत्र वैलक्षण्यज्ञानाभावेन
विशिष्टत्वासिद्धेरामूलमविशिष्टत्वापात इत्यर्थः। वि-
लक्षणज्ञानविषयत्वाभावेऽप्यविशिष्टाद्वैलक्षण्यज्ञान-
योग्यस्य विशिष्टत्वेन विवक्षितत्वान्नानवस्थेति शङ्के
*तदिति* दूषयति *तर्हीति* योग्यतापि विशेषणं
भवन्ती विशिष्टे विशिष्टाऽविशिष्टा वा यदि विशिष्टा
तर्हि तत्तज्ज्ञानापेक्षयाऽनवस्था यद्यविशिष्टा सर्वत्रैव
तन्निमित्तप्रतीतिप्रसङ्गोऽविशेषादित्यर्थः।

एकज्ञानारूढत्वमित्युक्तं तदपि दुर्निरूपमित्याह।

१५ विशिष्टस्यैव प्रकारान्तरेण निरासः।

एवमेकमिति ज्ञानमित्यारूढमित्यादिद्वारे द्रष्टव्य-

म् । तथाहि—

"अविशिष्टाद्विशिष्टस्य वैशिष्ट्ये यदि धीर्विशेत् ।
तद्बुद्धिधाराविश्रान्तिः स्याद्वा मूलाविशिष्टतेति ॥३॥

विशिष्टनिरासेन च सर्वाणि लक्षणानि निरस्तानीति मन्तव्यं यथा गुणाश्रयो द्रव्यमित्यादि ।

* एवमिति * एकत्वविशिष्टमेकमुच्यते ज्ञानत्वविशिष्टं ज्ञानमारूढत्वविशिष्टं आरूढं सम्बन्धत्वविशिष्टः सम्बन्धस्तस्य विशिष्टानभ्युपगमेऽसिद्धेर्न विशिष्टव्यवहारसिद्धिरित्याशयः । उक्तेऽर्थे श्लोकमवतारयति * तथाहीति * विशिष्टस्याऽविशिष्टाद्वैशिष्ट्ये वैलक्षण्ये धीप्रवेशमन्तरेण वैलक्षण्याऽसिद्धेर्यदि वैलक्षण्यधीर्विशेत् तर्हि तद्बुद्धिधारानवधित्वेऽनवस्थाप्रसङ्गात् क्वचिद्विश्रान्तौ तत्र विशिष्टत्वाऽसिद्धेस्तत्प्रभृत्यामूलमविशिष्टताऽऽपद्यत इत्यर्थः । विशिष्टनिरासेन न केवलमभावनिरासः सिद्धः किन्तु सर्वलक्षणनिरासः स्यात्पक्षधर्मतादिविशिष्टत्वाल्लक्षणस्येति विशिष्टखण्डनस्य महत्प्रयोजनम् । विशिष्टदृष्टान्तव्याजेन द्रव्यादिखण्डनं प्रस्तौति * यथेति *

इति अभावखण्डनं विशिष्टखण्डनञ्च ।

---

द्रव्यलक्षणखण्डनेऽधिकं दूषणमाह ।

१६ द्रव्यलक्षणखण्डनारम्भः ।

इतोऽपि गुणाश्रयो द्रव्यमित्यसङ्गतं तथाहि—कथमेत-

लक्षणमत्रधारणीयं सङ्ख्यारूपगुणवत्तया रूपादेरपि प्रतीतेः। भ्रान्तिरसाविति चेत् । पृथिव्यादौ कथमभ्रान्तिरिति वक्तव्यम् । तत्र बाधकाभावादिति चेत् । तुल्यम् । गुणस्य गुणवत्तायां बाधकमस्माभिरवश्यं वक्तव्यं निर्गुणा गुणा इति सिद्धान्तादिति चेन्न। रूपादेर्गुणत्वस्यैव निश्चेतुमशक्यत्वात् ।

* इतोऽपीति * गुणत्वाद्याश्रयगुणादिव्यावृत्यर्थं गुणाश्रयत्वविशेषणम् । अतिव्याप्त्याद्यभावे कथमसङ्गतं लक्षणमित्यतस्तदुपपादयति * तथाहीति * सितासितहरितपीतरक्ततया पञ्च रूपाणि मधुरादयः षड्रसा इति सङ्ख्यालक्षणत्वाद्रूपादावतिव्याप्तिरित्यर्थः । पञ्चाद्याकारबुद्धिविषयतया द्रव्यसारूप्यात् रूपादौ सङ्ख्याप्रतीतिस्तत्र भ्रान्तेति तत्र नातिव्याप्तिरिति शङ्कते *भ्रान्तिरिति* भ्रान्तेरभ्रान्तिपूर्वत्वात्पृथिव्यादौ तत्र अभ्रान्तिरिति वाच्यन्न तन्निश्चयो मानाभावादिति परिहरति * पृथिवीति * इयं प्रतीतिर्न भ्रान्तिरबाध्यप्रतीतित्वात्सम्प्रतिपन्नवदिति मानं शङ्कते * तत्रेति* समसमाधिरित्याह *तुल्यमिति * प्रत्यक्षबाधाभावेपि यौक्तिकबाधाद्भ्रान्तत्वं शङ्कते *गुणस्येति* स्ववृत्त्यनवस्थादिरूपबाधकमित्यर्थः । कुत इत्यत आह * निरिति * रूपादेर्गुणत्वस्यासिद्धेर्नानवस्थादीति परिहरति * नेति *

सामान्यवान् गुणः संयोगविभागयोरनपेक्षो न

कारणं गुण इति तल्लक्षणयोगाद्गुणत्वं रूपादेरिति शङ्कते ।

१७ गुणलक्षणनिरासः ।

सामान्यवान् गुण इत्यादिगुणलक्षणयोगात्तन्निश्चय-इति चेन्न । अगुण इति गुणलक्षणांशस्यासिद्धेः सङ्ख्या-वत्तया प्रतीतेर्विद्यमानत्वात् । भ्रान्तिरिति चेन्न । पर-स्पराश्रयप्रसङ्गात् । सङ्ख्यावत्तया प्रतीतेर्भ्रान्तित्वे गुण-लक्षणसिद्धिः तत्सिद्धौ च बाधेन भ्रान्तित्वस्थापनम् । नच हेत्वन्तराद्रूपादेर्गुणत्वसिद्धौ बाधकसिद्धिः दृष्टा-न्तस्यापि सङ्ख्यायोगिप्रत्ययाक्रान्तत्वेन प्रसक्तद्रव्यको-टिप्रवेशतया गुणत्वेनासिद्धेः । सङ्ख्यायाः सङ्ख्यावत्त्वे-नानवस्थाप्रसङ्गान्निःसङ्ख्यत्वव्यवस्थितौ दृष्टान्तत्वं सम्भविष्यतीति चेन्न । पृथक्त्वेनापि तस्याः सम्भावि-तद्रव्यकोटिप्रवेशत्वात् । एवं पृथक्त्वस्यापि सङ्ख्या-वत्तयेति ।

* सामान्येति * उत्तरत्रिकद्रव्यकर्मव्यावृत्त्यर्था-नि विशेषणानि । गुणनिश्चयमन्तरेण तत्प्रतियोगिक-स्यास्य गुणत्वस्य गुणशून्यत्वस्य लक्षणांशस्यासिद्धे-र्विशेषणासिद्धिर्लक्षणस्यान्यथाऽन्योन्याश्रय इति परि-हरति *नेति* असिद्धौ हेतुमाह* सङ्ख्येति * सङ्-ख्यावत्त्वप्रतीतेर्भ्रान्तित्वादगुण इति विशेषणसिद्धि-

१ प्रसङ्गापत्तिः । सङ्ख्यावत्त्वेति मु० पु० पा० ।

रिति शङ्कते * भ्रान्तिरिति * परस्पराश्रयान्नैकस्यापि सिद्धिरिति तदेवोपपादयति * सङ्ख्येति * रूपादयो गुणाः सामान्यवत्वास्पर्शवत्वाक्रियत्वेसति बाह्येंद्रियग्राह्यत्वात्सङ्ख्यावदित्यनुमानतो रूपादेर्गुणत्वसिद्धेर्न परस्पराश्रय इत्यनवस्थाप्रसङ्गस्य बाधकत्वसिद्धिरित्याशङ्क्याह *नचेति* कुत इत्यत आह *दृष्टान्तेति* एका सङ्ख्याऽनेका सङ्ख्येतिसङ्ख्यावत्वप्रतीत्या गुणत्वासिद्धौ साध्यवैकल्यात् दृष्टान्तस्येत्यर्थः। सङ्ख्यायाः सङ्ख्यावत्वेऽनवस्थाप्रसङ्गाद्गुणेत्यादिलक्षणात् गुणत्वसिद्धौ सैव दृष्टान्तोभवतीति शङ्कते *सङ्ख्येति* पृथक्त्वगुणयोगित्वसम्भवात्तथापि साध्यशून्यं निदर्शनमिति परिहरति * नेति* तर्हि पृथक्त्वस्य पृथक्त्वान्तरयोगेऽनवस्थानाद्गुणत्वसिद्धौ पृथक्त्वमेव दृष्टान्त इत्यत आह * एवमिति * पृथक्त्वान्तरायोगित्वेपि द्विपृथक्त्वस्य पृथक्त्वमिति सङ्ख्यावत्वप्रतीतेः साध्यवैकल्यमित्यर्थः।

गुणलक्षणान्तरमाशङ्क्य निराचष्टे।

१८ गुणस्य लक्षणान्तरनिरासः।

जातीतरानाश्रयोऽकर्म्मरूपो गुण इत्यपि न, जातिव्यापकत्वात्। जातिमात्राश्रय इत्येवार्थ इति चेन्न। अभावाश्रयतया सर्वव्यापनात्। जातिमात्रभावाश्रयइति चेन्न। उपाधीनामपि तदाश्रितत्वात्। नोपाधीनामाश्रयो रूपादिः किन्तु कथमपि सम्बन्धी तावतैवानुमादिप्रवृत्तिरिति चेन्न। उपाधिसम्बन्धं प्रत्यप्याश्रयत्वस्य मन्त-

व्यत्वात् । अन्यथा यदि किञ्चिद्रूपमत्र नेष्यते तदा सामान्यविशेषानुमानं तत्र न स्यात् । व्यधिकरणयोर्गम्यगमकभावानभ्युपगमात् । तस्माद्यदेतदेव लक्षणं तत्तावन्न जातिरूपं तदिदं रूपं यदि रूपादौ नास्ति तदानीमस्ति, यद्यस्ति तदा नास्तीति विचित्रेण लगेत्युक्ते न लगति मालगेत्युक्ते च लगतीति प्रवह्लिकामनुकरोति ।

* जतीति * द्रव्यव्यावृत्त्यर्थं जातीतरानाश्रयत्वविशेषणं तस्य गुणाद्याश्रयत्वात् । तदन्याश्रयत्वनिषेधेऽर्थात् जातिमात्राश्रयत्वादिकर्मरूपसिद्धेः सामान्यादिव्यवच्छेदः । कर्मव्यवच्छेदार्थमकर्मेतिविशेषणम् । यथाश्रुतस्यातिव्याप्तिरित्याह *जातीति* जातीतरानाश्रयत्वादकर्मरूपत्वाच्च गुणत्वप्रसङ्ग इत्यर्थः । ननु जातेर्जातीतरानाश्रयत्वमसिद्धं समवायाश्रयत्वादितिचेन्नैवम् । समवायकटाक्षेण गुणस्यापि तदसिद्धिप्रसङ्गादिति । विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् जातिमात्राश्रयत्वं विवक्षितन्तदभावाच्च जातेर्नातिव्याप्तिरिति शङ्कते * जातीति * असम्भवेन तं दूषयति *नेति* गुणानां जात्याश्रयत्वेपि गुणाद्यनन्ताभावाधिकरणत्वेन मात्रार्थाभावादसिद्धिर्लक्षणस्येत्यर्थः । मात्रशब्देन जातिव्यतिरिक्तभावानाश्रयत्वस्य विवक्षितत्वान्नासिद्धिरिति शङ्कते*जातीति*
जातिव्यतिरिक्तलक्षणप्रमेयत्वादिभावोपाधीनां गुणा-

श्रयत्वादसिद्धिर्लक्षणस्येति परिहरति * नेति * उपाधिं प्रत्याश्रयत्वन्नास्ति रूपादेरिति शङ्कते *नेति* उपाध्यनाश्रयत्वे रूपादेरुपाधिभिः सम्बन्धो न स्यादित्यत आह * किन्त्विति * कार्योत्पादनशक्तेः कार्यगतत्वाभावेऽपि कार्यसम्बन्धवदनाश्रितोऽप्युपाधिस्तन्निष्ठताव्यवहारं स्वभावभेदादेव जनयतीत्यर्थः। कथं तर्हि लक्षणस्य केवलव्यतिरेक्यनुमानस्य पक्षधर्मतेत्यत आह *तावतेति* परिहरति *नेति* भावस्वरूपमेव सम्बन्धोऽन्य एव वा, उभयथापि सम्बन्धस्य रूपाद्याश्रयत्वमाश्रयणीयमन्यथा पक्षधर्म्मत्वाभावात्तद्गतवैधर्म्यास्यसाधनत्वप्रसङ्गात्तन्निष्ठत्वे जातिमात्राश्रयत्वासिद्धिरित्यर्थः। उक्तमर्थं व्यतिरेकमुखेनोपपादयति *अन्यथेति* यदि किञ्चिद्भावरूपं गुणेषु नेष्यते तदाऽयं सामान्यगुणोऽयं च विशेषगुण इत्यनुमानस्य व्यधिकरणसिद्धिप्रसङ्गादित्यर्थः। व्याघातान्नैवमभ्युपेयमित्युपसंहरन् लक्षणस्याजातिरूपत्वं दर्शयति *तस्मादिति* व्याघातमेव दर्शयति *तदिति* अत्यर्थं विचित्रेण प्रकारेण त्वदीयमिदं लक्षणं प्रहेलिकाक्रीडामनुकरोतीति सम्बन्धः। जातिमात्रभावाश्रयोऽकर्मरूप इति लक्षणं यदि लक्ष्ये नास्ति तदा हेतोः पक्षधर्मत्वं यद्यस्ति तर्ह्यपक्षधर्मत्वं यथा बालोन्मत्तादि लगेत्युक्ते न लगति मालगेत्युक्ते लगतीति विज्ञातं वैचित्र्यं तत्तुल्यमित्यर्थः। यद्वा लगेत्युक्ते न लगति मालगेत्युक्ते लगतीति।

एवं गुणलक्षणानिरूपणेन रूपादेर्गुणत्वासिद्धि-

मुक्त्वा द्रव्यलक्षणे दूषणान्तरमाह।

१९ द्रव्यलक्षणे दूषणान्तरम्।

अपि च गुणाश्रय इत्यत्र कश्चाश्रयार्थः? समवायीति चेन्न। गुणत्वादेरपि द्रव्यत्वप्रसङ्गात् गुणावच्छिन्नस्य समवायस्य गुणत्वेऽपि विश्रान्तत्वात्। गुणः समवेतो यत्र स गुणसमवायीति विवक्षितमिति चेन्न। यत्रेत्यस्याधिकरणार्थस्याद्याप्यनिरूपणेन तेनैव तद्व्याकारानुपपत्तेः। इहेति प्रत्ययहेतुराधार इति चेन्न। इह शङ्खे पीतिमेति प्रत्ययाच्छङ्खस्य पीतगुणाधिकरणत्वप्रसङ्गात्। भ्रान्तिरसौ यथार्थश्च प्रत्ययोऽत्र विवक्षित इति चेन्न। तदर्थासत्त्वानिरूपणव्यतिरेकेण तदप्रामाण्यस्य बोद्धुमशक्यत्वात्। न चाद्यापीहेति प्रत्ययस्यार्थः प्रतीतो यत्प्रतियोगिकमसत्त्वं तत्र निरूप्यते। पीतत्वं प्रतियोगि तच्च क्वचित्सिद्धमेवेति चेन्न। तस्य प्रमितत्वादेवासत्त्वानुपपत्तेः। तत्र न तस्य प्रमितत्वमिति चेन्न। तत्रेत्याधारत्वानिरूपणादिति।

*अपिचेति* न कोपीत्याक्षिप्तमपि पृष्टं मत्वा तन्निरुक्तिं शङ्कते * समवायीति* अतिव्यापकमिति दूषयति *नेति* प्रसङ्गमेव स्पष्टयति *गुणेति* सम्बन्धस्य ह्याश्रयत्वादित्यर्थः।गुणः समवेतो यत्र स गुणसमवायी विवक्षितो नच गुणत्वादौ गुणत्त्वस्य समवेतत्वमित्यतिव्याप्तिपरिहारं शङ्कते * गुण इति * यत्रेतिनिर्दिष्ट-

स्याधिकरणत्वस्याऽसिद्धतया तेनैव तन्निरूपणमयुक्त-मात्माश्रयादिति परिहरति *नेति* इहेत्येवंरूपायाः प्रतीतेर्यत्कर्मतया कारणं तदाश्रयपदार्थ इति शङ्कते * इहेति* प्रत्ययमात्रहेतुत्वमधिकरणत्वमुताभ्रान्तस्येति विकल्प्य प्रथमं दूषयति *नेति* द्वितीयं शङ्कते *भ्रान्ति-रिति*भ्रान्तित्वमेवासिद्धमिति परिहरति *नेति*कि-मिहेतिपदार्थस्यासत्त्वप्रतियोगित्वमुत पीतत्वस्येति विकल्प्याद्यं दूषयति *नचेति* इह पीतिमा नास्तीति इह पदार्थावच्छिन्नं पीतत्वं निषेध्यतया निरूपणीयं त-दाश्रयार्थानिरूपणान्न शक्यनिरूपणमित्याशयः। पीत-त्वमात्रं प्रतियोगीति द्वितीयं शङ्कते * पीतत्वमि-ति * तथाप्यप्रमितप्रतियोगिकनिषेधानुपपत्तिरित्यत आह * तच्चेति * पीतत्वस्य येन रूपेण प्रमितत्वं तेनैव रूपेण प्रतियोगित्वमुताप्रमितरूपेणेति वि-कल्प्य प्रथममसम्भवेन दूषयति * नेति * द्वितीय-मुत्थापयति * तत्रेति * आधारपदार्थघटितरूपेण तस्याप्रमितत्वं वाच्यं तस्याद्याप्यसिद्धेरप्रसिद्धप्रति-योगिकनिषेधाऽनुपपत्तिरेवेति परिहरति * नेति *

अस्तु तर्हि समवायिकारणं द्रव्यमित्यत आह।

२० द्रव्यस्य लक्षणान्तरदूषणम्।

एतेन समवायिकारणं द्रव्यमित्यपि लक्षणं निरस्त-म्। कथं निर्णेतव्यमिदं समवायिकारणमिदं नेति रू-पादौ घटादौ च सङ्ख्यासमवायिकारणत्वयुक्तेस्तुल्यत्वा-त्। सङ्ख्यैव रूपादौ नास्तीति चेत् घटादौ कथमस्ति

प्रत्ययस्योभयत्रापि तुल्यत्वादित्युक्तमनुषञ्जनीयम् । द्रव्य एव सङ्ख्यास्वीकारे तत्सम्बन्धात् गुणेऽपि तद्व्यवहारोपपत्तौ कल्पनालाघवात् गुणे सङ्ख्याद्यस्वीकार इति चेत् विपरीतमेव कुतो न स्यात् सत्तासामान्याद्यपि गुणादौ किमर्थमङ्गीक्रियते द्रव्यद्वारैव तत्र व्यवहारोपपत्तेः ।

* एतेनेति * आश्रयानिरूपणेन कार्यसमवायो यत्र तत्समवायीति तत्समवायित्वानिरुक्तेः इत्यर्थः । रूपादौ चास्य लक्षणस्य भावात् द्रव्यत्वं प्रसज्यते इत्याह * कथमिति * कथं च तन्निर्णतव्यमित्यत आह *रूपेति* एको घट इतिवदेकं रूपमितितदाधिकरणप्रत्ययस्य समवायित्वप्रयोजकस्य तुल्यत्वादित्यर्थः । एकं रूपमित्यादिप्रतीतिर्भ्रान्तीरूपादौ गुणाभावात् गुणादीनां निर्गुणत्वादिति शङ्कते *सङ्ख्येति* घटादौ यादृशी सङ्ख्याप्रतीतिस्तादृश्येव रूपादौ तत्प्रतीतिर्न वैलक्षण्यलेशोपीत्युक्तयुक्तिरनुसन्धेयेति परिहरते * घटेति * लाघवतर्कावष्टम्भेन शङ्कते * द्रव्य इति * द्रव्यस्य तावत्सङ्ख्याधिकरणत्वमुभयानुमतं तदेकार्थसमवायादेव गुणादौ सङ्ख्याव्यवहारोपपत्तौ न सङ्ख्यान्तरमूरीकार्यं गौरवादित्यर्थः । गुण एव सङ्ख्यास्वीकारो द्रव्ये पुनः तत्समवायिनिबन्धन एव सङ्ख्याप्रत्यय इति विपरीतं किं न स्यादिति परिहरति * नेति * रूपादौ सङ्ख्याप्रतीतौ सत्यामपि

लाघवतर्कतस्तन्निराकरणे सत्ताद्यपलापोपि स्याद्-विशेषादित्याह * सत्तेति * आदिपदेन समवायसङ्ग्रहः। गुणः सन् कर्म सदिति सदनुगतव्यवहारस्तत्प्रयोजनमित्यत आह * द्रव्येति * द्रव्य एव सत्तादिस्वीकारे तदेकार्थसमवायाद् गुणादौ तद्व्यवहारोपपत्तिरित्यर्थः।

इति द्रव्यगुणयोर्लक्षणखण्डनम्।

एवं द्रव्यादिलक्षणं खण्डयित्वा सामान्यलक्षणखण्डनमारभते।

२१ सामान्यलक्षणखण्डनारम्भः।

ननु सामान्यार्थ एव कः? तथाहि—अनुवृत्तप्रत्ययकारणं सामान्यमिति न लक्षणं सामग्र्या सर्वकार्योत्पत्तेः तया तदेकदेशान्तरैश्च व्यभिचारात्। असाधारणविशेषणादनन्यजातीयप्रयोजकत्वञ्च तदिति चेन्न। स्वसामग्र्यामपि प्रसङ्गतादवस्थात्। भेदप्रतिपत्त्यादावपि प्रयोजकत्वाच्च। एतत्प्रतिपत्तिप्रमाणकत्वमिति चेन्न। स्वसामग्र्यामप्यस्याः प्रमाणत्वात्। एतदेकप्रमाणकत्वमिति चेन्न। अर्थक्रियाभेदादेरपि तत्र प्रमाणत्वात्। एतत्प्रतिपत्तिप्रमापकत्वमिति चेन्न। तद्विशिष्टस्यापि तत्त्वप्रसङ्गात्। तदवच्छिन्नप्रमांशप्रमापकत्वमिति चेन्न। तदसिद्धयैवासिद्धेः। इयं प्रतीतिर्येन विना नोपपद्यते

तत्सामान्यमिति चेन्न। कारकान्तराणामपि तथात्वादिति।

*नन्विति* क इत्याक्षेपे। सामान्यलक्षणमनूद्य दूषयति *तथाहीति* घटादिकारणविशेषव्यावृत्त्यर्थं विशेषणद्वयम्। कारणशब्दोऽत्र हेतुवाचक उत प्रमाणवचन इति विकल्प्य प्रथमेऽतिव्याप्तिमाह *सामग्र्या इति* अनुवृत्तप्रत्ययस्य जनकं सामान्यमित्युक्तं स्यादेवं च विषयमात्रात्तदनुत्पत्तेः सामग्रीतश्च तदुत्पत्तेस्तस्यास्तदेकदेशेषु चक्षुरादिषु चातिव्याप्तिरित्यर्थः। अनुवृत्तप्रत्ययस्यासाधारणं कारणं सामान्यन्नचैवमतिव्याप्तिः सामग्र्यादेः सर्वकार्यसाधारणत्वादिति शङ्कते *असाधारणेति* असाधारणत्वमेव विवेचयति *अनन्येति* अनुवृत्तप्रत्ययमात्रजनकमित्यर्थः। अनुवृत्तप्रत्ययसामग्र्यास्तदेकदेशानां च कार्यान्तराजनकत्वादसाधारण्यादुक्तप्रसङ्गतादवस्थ्यमिति मन्वानः परिहरति *नेति* नन्वसाधारणगिराऽनुवृत्तप्रत्ययस्य कर्मतया जनकं विवक्षितमिति न सामग्र्यादावतिव्याप्तिरिति। मैवम्। अतीन्द्रियगुरुत्वादिसामान्ये तदव्यापनात्। ज्ञानस्यापि कर्मजत्वे प्रत्यक्षत्वापातात्। तदपि योगिप्रत्यक्षमितिचेन्न। तस्यैव विगानात्, योगीन्द्रियन्न गुरुत्वादिविषयमिन्द्रियत्वादस्मदादीन्द्रियवदिति प्रयोगविरोधाच्च। नचादृष्टादि कस्यचित्प्रत्यक्षं प्रमेयत्वात् घटवदिति सप्रतिसाधनता कस्यचिच्छब्देनास्मदाद्यन्यतमाविवक्षायां बाधादस्मदादिविलक्षणाविवक्षायामप्रसिद्धविशेषणत्वात्साध्यवैकल्याच्च दृष्टान्तस्य, नचा-

न्यः साधारणः प्रामाणिकोऽस्तीत्यलम् । एवमतिव्याप्तिमुक्ताऽसम्भावि चेदं लक्षणमित्याह *भेदेति* गोत्वात् माहिषादिर्न भवतीति भेदप्रत्यये तदभिधाने च सामान्यस्य प्रयोजकत्वान्नानुवृत्तप्रत्यय एवासाधारणमित्यर्थः । कारणशब्दः प्रमाणवचन इति द्वितीयं शङ्कते * एतदिति* एषा प्रतिपत्तिः प्रमाणं यत्र तत्त्वमिति तत्समासः। यद्यपि सामग्री कारणं तथापि न तस्यामनुवृत्तप्रत्ययः प्रमाणमिति तद्व्यवच्छेदः। एतत्प्रतिपत्तिप्रमाणकत्वमात्रं लक्षणमुतैतदेकप्रमाणत्वमिति विकल्प्य प्रथमं दूषयति *नेति* सामग्र्यनुमापकत्वात् तत्राप्यस्याः प्रतिपत्तेः प्रमाणत्वादतिव्याप्तिरित्यर्थः । एषा प्रतिपत्तिरेकैव प्रमाणं यत्र तत्त्वमिति द्वितीयं शङ्कते *एतदिति* सामग्र्या नानाकारणमेलनापररूपाया न तदेकप्रमाणत्वं चक्षुरादेरूपादिज्ञानानुमेयत्वादालोकादेः प्रत्यक्षत्वादिति तद्व्युदास इत्यभिसन्धिः । स्मारकतया तावदर्थक्रियाविशेषोपि मानं ब्राह्मणत्वजातौ विशिष्टमातापितृजत्वज्ञानमतो ऽनुवृत्तप्रत्ययैकप्रमाणत्वमसिद्धमित्याह * नेति * कारणशब्दस्यार्थान्तरं शङ्कते * एतदिति * एषा प्रतिपत्तिः प्रमा यस्मिन् तत्वं सामान्यं नच सामग्र्यामेषा प्रमा तदनुमापकत्वेन प्रमाणत्वादितितन्निवृत्तिः । अतिव्याप्त्या दूषयति * नेति * नहि निष्कृष्टं सामान्यं प्रतीय इति व्यक्तिविशिष्टेऽनुवृत्तप्रतीतिः प्रमा भवतीति विशेषमवगाहितवतीति तस्यापि सामान्यरूपता स्यादित्यर्थः । अतिव्याप्तिपरिहाराय विशेषं शङ्कते *तदिति*

तत्र विषयेंऽशद्वयमस्ति व्यक्त्यंशः सामान्यांशश्चेति तत्र विषयतया सामान्यांशेनावच्छिन्नः प्रमांशः प्रमा यस्मिन् तत्त्वं विवक्षितन्नचासौ व्यक्त्यंशे, तदवच्छिन्नप्रमांशस्यैव तत्र प्रमात्त्वादिति नातिव्याप्तिरित्याशयः। सामान्यज्ञाने तदवच्छिन्नप्रमांशज्ञानन्तज्ज्ञाने च तद्विषयसामान्यज्ञानमितीतरेतराश्रय इति परिहरति * नेति * सामान्यासिद्धैव तद्विशिष्टलक्षणासिद्धिरित्यर्थः। लक्षणान्तरं शङ्कते *इयमिति* अनुगतप्रतीतिर्येन विना नोपपद्यते तत्सामान्यमित्यर्थः। नोत्पद्यत इत्यपपाठः पुनरुक्तत्वात्। नोपपद्यत इत्यत्राप्यसत्त्वा नानुपपत्तिस्तथाच तदभावे तदभाव इति व्याप्यत्वाभिधानात्तस्य च तत्प्रमाणकत्वेन पुनरुक्तत्वात्तस्मादुपपत्तिः ज्ञानं विषयनिरूप्यत्वात् ज्ञानस्यैत्यत्रेवार्थः। अनुवृत्तप्रत्ययज्ञापकमनःसंयोगादावतिव्याप्तिरिति परिहरति * नेति *

लक्षणान्तरं दूषयति।

२२ सामान्यस्य लक्षणान्तरदूषणम्।

अनुवृत्तं सामान्यमित्यप्यलक्षणम्। किमिदमनुवृत्तत्वं नाम?। अनेकाश्रितत्वमिति चेन्न। अवयविना संयोगादिभिश्च व्यभिचारात्। नित्यत्वे सतीति चेन्न। समवायेन व्यभिचारात्। अत एव न बहुवृत्तित्वमित्यपि। असम्बन्धत्वे सतीति चेन्न। अणुभिर्व्यभिचारादिति। नित्यत्वे सत्यनेकसमवेतं सामान्यमिति चेन्न। त्रिकल्पासहत्वात्।

एतल्लक्षणं नित्यमनित्यं वा स्यात् । नाद्यः स्वात्मनि वृत्तिविरोधात् विशिष्टप्रविष्टमपि हि नित्यत्वं नित्यमेव ।

* अनुवृत्तेति * कुत इत्यपेक्षयामनुवृत्तपदार्था-निरुक्तेरित्याह *किमिति* न किमपीत्यर्थः । अनुवृत्तप-दार्थं शङ्कते *अनेकेति* रूपादिव्यवच्छेदाय विशेषणम् । वृत्तिशब्देन संयोगः समवायो वा विवक्षित उभय-थाऽप्यतिव्याप्तिरिति दूषयति * नेति * अवयव्यवयवेषु स-मवेतः संयोगश्च सम्बन्धिनोरादिशब्देनानेकसंयुक्तश-रीरादि गृह्यत इत्यतिव्याप्तिरित्यर्थः । नित्यमनेकवृत्ति सामान्यन्न च संयोगादिव्याप्तिस्तस्यानित्यत्वादिति शङ्कते *नित्येति* समवायस्य नित्यत्वादनेकाश्रितत्वा-च्चातिव्याप्तिरित्याह *नेति* लक्षणान्तरेप्येतदतिदि-शति * अत इति * समवायव्यापनादेवेत्यर्थः । उक्ता-तिव्याप्तिं परिहर्तुमसम्बन्धत्वे सति नित्यमनेकवृत्ति सामान्यमिति शङ्कते * सम्बन्धेति* परमाणूनां संयोग-वृत्त्यानित्यत्ववतामनेकाश्रितत्वमस्तीति तत्रातिव्याप्ति-रित्याह * नेति * वृत्तिशब्देन समवायस्य विवक्षित-त्वान्नित्यमनेकवृत्तीति लक्षणस्य न समवायेऽणवादौ वा व्यभिचार इति शङ्कते *नित्येति* विकल्पासहत्वाद-सिद्धमिदं लक्षणमित्याह * नेति * तदुपपादनाय विकल्पयति *एतदिति* किञ्चात इत्यत आह *नाद्य इति* स्वात्मनि वृत्तिविरोधं स्पष्टयति * विशिष्टेति * नित्यत्वे सत्यनेकसमवेतत्वं हि लक्षणं तत्रापि चेन्नि-

---

१ वृत्त्यातपाद्धर्मात सो० पु० पा० ।

त्यत्वं वर्त्ततात्माश्रयोऽशत इत्यर्थः ।

अनित्यमिदं लक्षणमिति द्वितीयं दूषयति ।

२३ द्वितीयविकल्पदूषणम् ।

नापि द्वितीयः सामान्यस्य समवायस्य च नित्यत्वाभावप्रसङ्गात् । आत्मत्वादौ व्यक्त्यभावायत्तस्यापि विशिष्टाभावस्यासम्भवात्तस्य च कदाचिदसत्त्वानङ्गीकारे तदनित्यत्वस्यैव वक्तुमशक्यत्वात् । तद्ग्राहिणश्च प्रत्ययस्यैककालिकस्य च मिथ्यात्वेऽविशेषात् सार्वकालिकस्य मिथ्यात्वप्रसङ्गेन सर्वथा तदसत्त्वापत्तेः । एकस्य च सत्यत्वेऽविशेषात् । सर्वसत्यतायां कदाचिदपि तदसत्त्वं नास्तीति । एकदा तत्सम्बन्धेनोपलक्षितस्यान्यदापि विद्यमानत्वात् तथात्वमिति चेन्न । तादृशोपलक्ष्यासम्भवात् व्यक्तीनां भेदादनित्यत्वानुपपत्तिरेवेति । एतेन नित्यत्वमन्यत्रापि प्रतिवचनीयमिति ।

* नापीति * नित्यमनेकसमवेतरूपं विशिष्टलक्षणं तच्चेदनित्यं तर्हि विशेषणादिनाशात्तन्नाशो वक्तव्यः स्वप्रामित्युपलक्षितसत्तायोगित्वस्यानित्यत्वरूपत्वादेवं नित्यत्वस्य लक्षणान्तर्गतस्य नाशे व्यक्तमनित्यत्वं सामान्यस्य तद्धर्मस्यैव लक्षणत्वात्समवेतांशनाशेपि विशेष्यसामान्यनाशे तस्यानित्यत्वप्रसङ्गः समवायस्य नाशे तस्यानित्यत्वप्राप्तिरित्यर्थः । अनेकेति विशेषणीभूततद्व्यक्तिनाशादऽपि सा-

मान्यस्य समवेतत्त्वनाशोपपत्तेर्न्न सामान्यादेरनित्यत्वप्रसक्तिरित्यत आह *आत्मेति* आत्मत्वतत्समवायतद्व्यक्तीनां नित्यत्वान्न व्यक्त्यनित्यत्वनिमित्तमपि तत्समवेतानित्यत्वं सम्भवतीत्यर्थः । तथापि लक्षणानित्यत्वे किमायातमित्यत आह * तस्येति * सामान्यलक्षणानित्यत्वाभाव आत्मत्वादेरनित्यत्वव्यक्तिर्वेत्यर्थः । यद्यप्यात्मत्वसामान्यस्य तद्व्यक्तिषु समवेतत्वलक्षणग्राहिप्रत्ययः सदाकार एव जायते तथापि तस्य कदाचिन्मिथ्यात्वादनित्यत्वसिद्धिर्लक्षणस्येत्याशङ्क्याह * तदिति * यदि लक्षणमनित्यं तदा जातौ कदाचित्तल्लक्षणग्राहिप्रत्ययो मिथ्येति वाच्यमतश्च तन्न्यायेन सदैवासौ प्रत्ययो मिथ्येति न कदाचिल्लक्षणासिद्धिरित्यर्थः । यद्यात्मत्वसमवेतत्वानुसन्धानकालिकस्य लक्षणानित्यत्वप्रत्ययस्य मिथ्यात्वान्नात्मादेरनित्यत्वप्रसक्तिरित्याशङ्क्याह * तदिति * तदसत्तापत्तेर्लक्षणानित्यत्वाभावप्रसङ्गादित्यर्थः । घटत्वादेः समवेतत्वानुसन्धानकालिकस्य लक्षणानित्यत्वप्रत्ययस्य बाधकाभावेन प्रमाणत्वात् कथं सर्वथैव लक्षणानित्यत्वस्य मिथ्यात्वमुच्यत इत्याशङ्क्याह *एकस्येति* अविशेषादिति * लक्षणस्य सर्वत्रैकरूप्यादेकत्र तदनित्यत्वप्रत्ययस्य सत्यत्वे सर्वत्र सत्यतायां कदाचिदपि तदसत्त्वं लक्षणानित्यत्वस्यामिथ्यात्वं नास्तीति प्रसज्यत इत्यर्थः । एकदा नित्यत्वसम्बन्धेनान्यदाप्यनित्यत्वं लक्षणस्य व्यवह्रियते नित्यत्वोपलक्षितस्यान्यदापि विद्यमानत्वादिति समवेत-

त्वस्यानित्यत्वव्यवहारेऽपि नात्मत्वादेरनित्यत्वमर्थ इति शङ्कते * एकदेति * एकदा घटत्वादे र्यदि समवेतत्वानुसन्धानकाले तदनित्यत्वसम्बन्धेन तस्य समवेतत्वस्य लक्षितस्यान्यदात्मत्वादिसमवेतत्वानुसन्धानेऽपि समवायस्यैकतया विद्यमानत्वात्तथात्वमनित्यत्वेन व्यवह्रियमाणत्वमित्यर्थः । अनित्यासु घटादिव्यक्तिषु घटत्वादेः समवेतत्वं तावदनित्यं ततोऽन्यदेव नित्यासु व्यक्तिषु समवेतत्वमात्मत्वादेर्व्यक्तीनां भेदात्तद्विशिष्टसमवेतत्वस्यापि भिन्नत्वादकिञ्चिदपेक्षस्य समवेतत्वमात्रस्य चानुपलक्ष्यत्वादेकमनुगतं वाच्यं तत्सिद्धौ तस्यैव लक्षणत्वोपपत्तेर्व्यर्थं लक्षणान्तरकरणमिति परिहरति * नेति *

इति सामान्यखण्डनम् ।

---

आगामिखण्डनं सामान्येन सङ्गमयति ।

२४ विशेषलक्षणखण्डनारम्भः ।

के चानेन लक्षणेन व्यवच्छिद्यन्ते । विशेषादय इति चेत् विशेषा एव के ऽभिधीयन्ते । तत्र नित्येष्वेव द्रव्येष्वेव वर्त्तन्त एव ये ते विशेषाइत्यलक्षणम् । आत्मत्वादिना व्यभिचारात् नित्यान्तरेऽसत्त्वाच्च न तत्सर्व्वत्र नित्ये वर्त्तते विशेषास्तु नैवं, वर्त्तन्तएवेति नियमादितिचेन्न । प्रतिविशेषमव्याप्त्याऽलक्षणत्वात् । यज्जातीय एवमिति लक्षणार्थ इति चेन्न । जातेरनङ्गीकारात् । जा-

तीयेत्यस्यापदत्त्वात् । उपाधिरेव तथा विवक्षित इति चेन्न । तस्येतरव्यावृत्तस्यावगतौ व्यर्थमिदं तदुपजीविलक्षणं अत एव विजातीयव्यावृत्तिप्रतीतेः इतरव्यावृत्तस्य वाऽनधिगतौ लक्षणस्य दुरवधारणत्वापत्तेः इतरव्यावृत्ततया तज्जातीयत्वत्वस्याप्रतीतेः ।

* के चेति * विशेषा इति * विशेषलक्षणमाशङ्क्य निरस्यति * तत्रेति * द्रव्येषु वर्तन्ते ये ते विशेषा इत्युक्ते सत्तासामान्ये समवाये च प्रसङ्गस्तदर्थमाह * द्रव्येष्वेवेति * तथापि गुणेषु क्रियायां च प्रसङ्गः तदर्थमाह * नित्येष्वेवेति * नित्येष्वेव वर्तन्ते ये ते विशेषा इत्युक्ते परमाणुत्वशब्दबुद्ध्यादौ प्रसङ्गः तदर्थं वर्तत एवेति सर्वनित्यद्रव्यवृत्तित्वमेवेति विवक्षितमतोणुत्वादिधर्मव्यवच्छेदः । यथाश्रुतं तावदतिव्यापकमितिहेतुमाह * आत्मेति * आत्माण्वादीनान्नित्यद्रव्यत्वात्तथैव वर्त्तमानत्वादेवात्मत्वाणुत्वादीनां विशेषत्वप्रसङ्ग इत्यर्थः । वर्तत एवेति विशेषणेनेदं परिहृतमिति शङ्कते * नित्यान्तर इति * नित्यद्रव्यानिष्ठात्यन्ताभावमात्राप्रतियोगित्वमेवेति विवक्षितत्वाद्विशेषव्यक्तिषु नास्ति सर्वविशेषाणामेकैकद्रव्यवृत्तितया सर्वनित्यद्रव्यवृत्तित्वाभावादित्यसम्भवेन परिहरति * नेति * सर्वनित्यद्रव्यनिष्ठात्यन्ताभावाप्रतियोगिजातीयत्वं विवक्षितमतो न प्रत्येकमभावेपि लक्षणासिद्धिः सर्वविशेषाणान्तज्जातीयत्वादिति शङ्कते * यदिति * जा-

तिशब्दो मुख्यार्थः उतानुगतधर्ममात्रवचन इति विकल्प्य प्रथमं दूषयति*नेति* सामान्यादित्रयस्य निःसामान्यत्वस्वीकारात् जातीयेत्यस्यापदत्वादमुख्यार्थत्वादित्यर्थः। द्वितीयं शङ्कते *उपाधिरिति * जात्यभाव उपाधिरेवैकजातीयत्वव्यवहारप्रवर्त्तक इत्यर्थः। अत्यन्तव्यावृत्तबुद्धिजनकत्वलक्षणो य उपाधिरुच्यते सकिन्द्रव्यादिभ्यो व्यावृत्तो विशेषमात्रनिष्ठतयाऽधिगत उत नेति विकल्प्य प्रथमं दूषयति *तस्येति* एकेनोपाधिना लक्षणप्रयोजनविशेषव्यवहारस्य सिद्धेर्व्यर्थं लक्षणमित्यर्थः। इतरव्यावृततयाऽधिगतोद्वितीयं प्रत्याह * अत इति * उपाधिनिरूपणाधीनलक्षणासिद्धिरित्यर्थः। कुत इत्यत आह *इतरेति* तस्यद्रव्यादिसाधारण्येनोपाधिविशेषपदप्रवृत्तौ निमितत्वायोगान्नहि साधारणेन निमित्तेन नैमित्तिकमसाधारणं भवति ततो विशेषणासिद्धिरित्यर्थः।

इतरव्यावृत्ततयाऽधिगतोपाधिरेव विशेषलक्षणमस्त्विति शङ्कते।

२५ विशेषलक्षणनिरासः।

भवतु स एवोपाधिर्लक्षणमिति चेन्न। तस्यानिरुक्तेः। यतोऽनित्यद्रव्यव्यक्तिषु विश्वव्यावृत्तधीर्योगिनां स विशेष-इति चेन्न। स्वरूपधर्म्मव्यक्तिभेदेष्वपि प्रसङ्गात्। अन्यथा कार्य्यद्रव्यगुणादिव्यक्तिषु सा तेषां कुतः स्यात् तास्विव वैधर्म्यान्तरस्य नित्येष्वपि सम्भवात् विशेषवत्

विशेषाऽसम्भवेन लक्ष्यासिद्धिरिति ।

*भवत्विति* उपाधेस्त्वयाऽव्याप्यनिर्वचनात् कथं लक्षणं स्यादिति परिहरति * नेति * उपाधेर्निरुक्तिं पूर्ववादी शङ्कते * यत इति * समानलक्षणासु नित्य-द्रव्यव्यक्तिषु व्यावृत्तबुद्धिहेतुत्वमुपाधिरित्यर्थः । विमता व्यक्तिधीर्व्यावर्तकधर्मग्रहणनिबन्धना व्यावृत्तबुद्धित्वादस्मदादिव्यावृत्तबुद्धिवदित्यनुमानं मानमित्युक्तं भवति तत्सिद्धसाधनदूषितमिति परिहरति * नेति * स्वरूपभेदात् सुखादिलक्षणवैधर्म्याद्वाऽर्थ-क्रियासामर्थ्यभेदाद्वा पृथक्त्वगुणाद्वा व्यावृत्तबुद्धिसम्भवात् स्वरूपभेदादीनां विशेषत्वप्रसङ्गान्नायमुपाधिरित्यर्थः । स्वरूपभेदादीनां व्यावृत्तबुद्धिहेतुत्वमेव नास्ति कुतोऽतिप्रसङ्ग इत्यत आह * अन्यथेति * कार्यद्रव्यगुणादिपदार्थानामन्त्यविशेषानङ्गीकारात्तेषां व्यावृत्तबुद्धिः स्वरूपभेदादिनिबन्धनैव सा कुतः स्यादित्यर्थः । नित्यद्रव्येषु विशेषातिरिक्तवैधर्म्याभावाद्विशेषनिबन्धनैव व्यावृत्तबुद्धिस्तत्रेत्यत आह * तास्विति * विपक्षबाधकानुकूलतर्कविरहाच्चाप्रयोजकत्वमभिप्रेत्याह * विशेषवदिति * यथा तव विशेषेषु विशेषान्तरमन्तरेणैव स्वरूपमात्रात् व्यावृत्तबुद्धिस्तथा नित्यद्रव्येष्वपि स्वरूपमात्रनिबन्धनतया व्यावृत्तबुद्ध्युपपत्तेर्लक्ष्यविशेषासिद्धिरित्यर्थः ।

सर्वलक्षणसाधारणभङ्गान्तरमाह ।

२६ विशेषस्य सर्वलक्षणसाधारणं दूषणम् ।

अपि च विशेषादिभ्यो विशेषलक्षणादेर्भेदात्कथं तत्र

तत्रैव तैर्विशेषादिव्यवहारः क्रियतां नान्यत्र। सम्बन्धो नियामकइति चेन्न। सम्बन्धस्यापि सम्बन्धान्तरेण नियामकत्वेऽनवस्थापातात्। अन्यथा त्वनियमात्। तदनिरुक्तेश्च।

* अपि चेति * विशेषादिलक्षणन्ततो भिन्नमभिन्नं वा, यद्यभिन्नं तदा व्यवस्थापकत्वानुपपत्तिरात्माश्रयाद्भेदे च विशेषलक्षणेन विशेष एव व्यवहारः क्रियते न द्रव्यादौ द्रव्यलक्षणेनापि द्रव्य एव व्यवहारो नान्यत्रेति व्यवस्था न स्यादित्यर्थः। विशेषलक्षणस्य विशेषेण द्रव्यादिभिश्च भिन्नत्वे विशेषाभावेऽपि विशेषेणैव सम्बन्धात्तद्व्यवहारस्यैव कारणत्वमिति शङ्कते * सम्बन्ध इति * सम्बन्धोपि विशेषव्यवहारं नियमयन् विशेषसम्बद्धो नियमयत्यसम्बद्धो वेति विकल्प्य प्रथमं दूषयति *नेति* द्वितीयं प्रत्याह * अन्यथेति * तदसम्बद्धत्वतद्भिन्नत्वयोर विशेषान्नियामकत्वानुपपत्तिरित्यर्थः। सम्बन्धखण्डनं प्रस्तौति * तदिति * तदनिरुक्तेः-सम्बन्धानिरुक्तेरित्यर्थः।

इति विशेषखण्डनम्।

---

तदनिरुक्तिमेव व्यनक्ति।

२७ सम्बन्धखण्डनम्।

तथाहि कः सम्बन्धशब्दार्थः? समवायादय इति चेत्।

सत्यं किन्तु केन निमित्तेनेति हि प्रश्नवाक्यतात्पर्यं प्रतिस्वं व्यावृत्तेन संयोगत्वादिनाऽन्येन वा । आद्येऽनुगतव्यवहारानुपपत्तिप्रसङ्गः अस्ति चासाविन्द्रियार्थसन्निकर्षोत्पन्नादिप्रत्यक्षं नित्यप्राप्तिः समवाय इत्यादि । नद्वितीयः तस्यैकस्यासम्भवात् ।

* तथाहीति * सम्बन्धशब्दार्थं शङ्कते * समवायादीति * सम्बन्धशब्दप्रवृत्तिनिमित्तं पृच्छाम इत्याह * सत्यमिति * प्रश्नवाक्यस्य तात्पर्यं दर्शयितुं प्रश्नस्वरूपं दर्शयति * प्रतीति * स्वं स्वं प्रति व्यावृत्तं संयोगत्वसमवायत्वादि तेन सम्बन्धशब्दवाच्यत्वं संयोगादेरुतान्येनानुगतेनेत्यर्थः । प्रथममाक्षिपति *आद्य इति*संयोगत्वादेर्व्यावृत्तस्य प्रत्येकं मिलितस्य वाऽनुगतव्यवहारहेतुत्वानुपपत्तेर्व्यवहारानुगतिर्नस्यादित्यर्थः । माभूत्तर्ह्यनुगतिर्व्यवहारस्येत्यत आह *अस्तीति*षोढा सन्निकर्ष इन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्षं नित्यसन्निकर्षः समवाय इत्यादौ सर्वत्र विद्यत इत्यर्थः । द्वितीयमपवदति * नेति * संयोगादौ सर्वत्रानुगतैकरूपासम्भवादित्यर्थः ।

संयोगसमवाययोरतिप्रसक्तिनिवारकत्वं साधारणं रूपमिति शङ्कते ।

२८ नियामकत्वस्य सम्बन्धत्वखण्डनम् ।

नियामकत्वं तदिति चेन्न । स्वभावस्यापि भवता नियामकत्वाङ्गीकारात् । तथाविधः सोऽपि सम्बन्ध एव-

ति चेन्न । त्वया सर्वस्वभावनियन्तृताया अवश्याभ्युपगन्तव्यत्वेन नियामकनिरुक्तिलभ्यसत्त्वादधिकांशासामर्थ्यापत्तेः । नियम्यस्य च स्वस्यानतिप्रसङ्गेन नियामकत्वत्राचोयुक्त्यनुपपत्तेः अतिप्रसक्तत्वेच तस्यैव नियामकत्त्वादतिप्रसक्तेन नियमायोगात् भूत्त्वा नियमकरणे च प्रागनियतत्त्वापत्तेः एवमन्येनापि जन्यनियमे, अन्यदपि हि यदि पूर्वं घटादिरूपेणानियतमेव घटादि करोति तदा पटाद्यपि तथा कुर्यात् ।

* नियामकत्वमिति * अन्यत्र सद्व्यवहारनियामकसत्तायाः स्वात्मनि सद्व्यवहारः स्वभावादित्यङ्गीकारादतिव्याप्तिरिति दूषयति *नेति* नियामकस्वभावोऽपि सम्बन्ध एव ततो नातिव्याप्तिरिति शङ्कते * तथाविध इति * परिहरति * नेति * स्वभावादेवैवमितिवदता त्वया सर्वभावस्वभावानां नियन्तृत्वमेष्टव्यं स्वभावत्वाविशेषादेवञ्च नियन्तृत्वं नियम्यापेक्षमिति तदपेक्षायां न स्वयमेव नियम्यन्तथा च स्वनियतिक्रियां प्रति स्वस्य नियामकत्वेन प्राक्सत्वं वाच्यं तच्च नियामकनिरुक्तिलभ्यं तथाच नियम्यनिरुक्तिलभ्यं नियतोत्तरसत्वमशक्यदर्शनं स्वयमेव स्वापेक्षया पूर्वमुत्तरं चेति व्याघातान्न चान्यस्य नियम्यत्वं नियमनमूलसम्बन्धस्याव्याप्यनिरुक्तेरित्यर्थः । नियम्यनियामकयोरभेदपक्षेऽनतिप्रसक्तं नियम्यतेऽतिप्रसक्तं वेति विकल्प्य प्रथमं दूषयति *नि-

यम्यस्येति* अतिप्रसक्तिनिषेधकत्वं नियामकत्वं तदेव निषिद्धे कः प्रतिषेध इति न्यायेनानतिप्रसक्तनियामकत्वमनुपपन्नमित्यर्थः। द्वितीयं दूषयति *अतीति* नियामकत्ववाचोयुक्त्यनुपपत्तेरित्यनुषङ्गः। तत्र हेतुमाह *अतीति* स्वयमनतिप्रसक्तोऽन्यातिप्रसक्तिं वारयति स्वयमव्यवस्थितस्य कथं व्यवस्थापकत्वमित्यर्थः। नियम्याकारस्य कार्यत्वात्तद्भिन्नश्चेन्नियामकः सोऽपि कार्य इत्युक्तं स्यादेवंच स उत्पद्य नियमयति उतानुत्पद्येति विकल्प्य प्रथमं दूषयति *भूत्वेति* भूत्वा नियमनपक्षे नियामकोत्पत्तेः प्राङ्नियम्यरूपमनियतमेव स्यादनियतनियामकत्वे घटमपि पटीकुर्यादित्यर्थः। नियम्यान्नियामकस्य भिन्नत्वान्नायं दोष इत्यत आह *एवमिति* अन्यदपि नियामकं स्वनियमनात्प्राग्घटादिरूपेणानियतं तथा नियमयति किंवा नियतमात्रे पटमपि घटीकुर्यान्नियतानियमनस्य वैयर्थ्यात् द्वितीयोपि नानवद्य इत्यर्थः।

कार्यं तु घटाद्यात्मना सदा नियतमेव तस्य तु कालविशेषसम्बन्धोऽनियतस्तस्मिन्नियामकस्य व्यापारो न घटादित्व इति शङ्कते।

२९ कारणस्य कालयोगं प्रतिनियामकत्वमितिशङ्कानिरासः।

न घटादित्वे नियन्तृत्वमन्यस्य किन्तु घटादेःकालविशेषयोग इति चेन्न। यदि नासौ घटादिकालविशेषयोगिता नियतमिष्यते तदा पटादिकालविशेषयोगमपि तथा कुर्य्यात्। तस्मात्—

यदि कुर्यादसत्कालानियतं नियतं परः ।
तत्स्यादतिप्रसक्तत्वमन्यथा चानियन्तृतेति ॥४॥

* नेति * तत्रापि वाच्यमसौ कालविशेषयोगो-नियतोऽनियतो वेति, न प्रथमो वैयर्थ्यात् द्वितीये चातिप्रसक्तिरिति दूषयति * नेति * अनियताऽसौ कालविशेषयोगिता यदीष्यते तदा पटादिकालविशेषयोगमपि घटादिगतं कुर्यादविशेषादित्यर्थः। उक्तार्थे श्लोकं रचयति * तस्मादिति * परोऽन्यो हेतुरसत्कार्यं कालानियतं नसत्कालनियतं च कुर्याद्यदि तर्हि स्यादतिप्रसक्तत्वं पटमपि घटं कुर्यात्पटकालयोगिनमपि घटं कुर्यादन्यथा कार्यस्य पूर्वमेव सत्वे कालनियतत्वे च कारणस्यानियामकत्वं तस्मात्कारणाधीनः कार्यलाभ इत्ययुक्तमित्यर्थः ।

खण्डनान्तरमाह ।

३० खण्डनान्तरम् ।

कार्य्यकारणयोः कालभेदान्नियम्यानियामकत्वोपगमे उत्तरोत्तरेण पूर्वपूर्वनियमः किन्नस्यादित्यत्रिनिगम्यत्वापत्तिः ।

प्राचोत्तरस्य नियमे प्राच एव न तेन किम् ।
अनाद्यनन्तयोर्नैवं विनिगन्ता प्रवाहयोरिति ॥५॥

भूत्वा च करणे व्याघातात् । सम्बन्धिनश्चाधारत्वात् सम्बन्धस्याधेयत्वात् तस्यैव तदाधारत्वानुप-

पत्तेः । नहि सुशिक्षितोऽपि नटबटुः स्वस्कन्धमारुह्य नृत्यति । नाप्यन्यस्यासौ सम्बन्धस्त्वयैव तथाऽनभ्युपगमात् । स्वभावादेवायमीदृश इति हि स्वभाववादः तत्र परस्य नियमनाभावात् कथं परः सम्बन्धी सङ्गच्छते ।

*कार्येति* कार्यकारणयोरेककालत्वे नियतप्राक्सत्त्वलक्षणकारणत्वायोगात्कालभेदोऽभ्युपेयस्तथाच पूर्वः पूर्व एव उत्तरोत्तरस्य नियामक इति कस्मादुत्तरोत्तरेण पूर्वपूर्वस्य नियम्यत्वमेव स्याद्भिन्नकालत्वाविशेषात्प्रमाणाभावस्योभयत्र तुल्यत्वादित्यनिश्चयादसिद्धिरित्यर्थः। उक्तमर्थं श्लोकेनाह*प्राचेति*प्राचा पूर्वेण कारणेनोत्तरस्य नियमः क्रियते चेदुत्तरेण कार्येण च कारणस्यैव नियम इति कुतो नाभ्युपेयं कालभेदेपि यद्यदपेक्षया पूर्वभावि तत्तस्य नियामकमित्यत आह *अनादीति* कार्यकारणप्रवाहयोराद्यन्तरहितत्वेन कालभेदाभावेन पूर्वोत्तरत्वेनापि नियम्यनियामकभावे निश्चायकानुपपत्तिरित्यर्थः । अनुत्पद्य नियामकत्वपक्षं दूषयति * अभूत्वेति * क्रियां प्रति कारणत्वेन सत्वाङ्गीकारादभूत्वेत्युक्तत्वेनासत्वाङ्गीकारादेकस्मिन् धर्मिणि सत्वासत्वसमुच्चयाद्व्याघात इत्यर्थः । स्वभाव एव सर्व इति पक्षे सम्बन्धिं स्वयमेव उतान्यादिति विकल्प्य प्रथमं दूषयति *सम्बन्धीति*सम्बन्धाश्रयः सम्बन्धीत्येतदस्तु सम्बन्धोपि तादृग्रूप एव किं नेत्यत आह * सम्बन्धेति * सम्बन्धिसम्बन्धयोराधाराधेयभावेपि तयोरेकत्वं किं न स्यादित्यत आह *तस्येति*आश्रयाश्र-

यिभावस्य भेदगर्भत्वादन्यथा स्ववृत्त्यापातादित्यर्थः। उक्तमर्थं दृष्टान्तेन स्पष्टयति *नहीति* अन्यदेव सम्बन्धीति द्वितीयमपवदति * नापीति * कुत इत्यत आह *त्वयेति* अनभ्युपगममेव दर्शयितुं स्वभाववादस्वरूपं दर्शयति * स्वेति * स्वभाववादस्य स्वव्यतिरिक्तकारणनैरपेक्ष्यस्य कारणमात्रनैरपेक्ष्यस्य वा स्वीकारान्न सम्बन्धि कारणान्तरमस्तीत्यर्थः। किं च स्वभावः स्वनियामकतया सम्बन्धश्चेत्यतः परस्य नियमनासम्भवात् स्वनियमनेनैव सर्वस्योपक्षयात्कथं पर इति सम्बन्धी घटेतातोऽस्यानेन सम्बन्ध इति व्यवहारोऽपि तव न स्यात्स्वभाववादिन इत्याह * तत्रेति *

खण्डनान्तरं दर्शयितुं स्थलशुद्धिं विधत्ते।

३१ सम्बन्धत्वस्य भावरूपत्वेऽभावरूपत्वेचानुपपत्तिः।

यच्च किञ्चित्सम्बन्धत्वमभिधीयते तत्समवायेऽपि स्वीकार्य्यं, नच समवायाधारत्वं द्रव्यादिषट्कस्य सम्भवति। नचोपाधिभावात् स्यात्। संयोगसमवायासम्भवात्। स्वभावसम्बन्धस्य च निरस्तत्वात्। नचासावभावोऽपि प्रतिषेध्यप्रतियोगिभावभेदाभिधानप्रसङ्गात्। सप्तपदार्थीपरिसमाप्तञ्च जगत् परस्परविरोधेन तल्लक्षणव्यवस्थापनादिति। यदपि नियम्यात् भिन्नं नियामकं तदपि कथं तदेव नियमयति नान्यदिति। तदाधारत्वादितिचेत्।

*यद्येति* सम्बन्धत्वाधिकरणस्यैव सम्बन्धत्वात् समवायस्य सम्बन्धत्वसिद्धये तदधिकरणत्वं स्वीकार्यमितिभावः । स्वीक्रियतां तर्हि समवायेपि तदित्याशङ्क्य तद्भावरूपमभावरूपं वेति विकल्प्य प्रथमं दूषयति * नचेति * भावरूपस्य तस्य द्रव्याद्यनन्तर्भावे पदार्थातिरेकः अन्तर्भावे समवायवृत्तित्वानुपपत्तिः । समवायस्य स्वयं द्रव्याश्रितत्वेन द्रव्यादेस्तदाश्रयत्वाभावादित्यर्थः । नित्यः सम्बन्धः समवाय इति लक्षणोपाधिवत्सम्बन्धिपारतन्त्र्यं नामोपाधिःसम्बन्धत्वं समवायेपि सम्भवति उपाधिर्धर्म्मएव द्रव्यादिभ्योनार्थान्तरामित्याशङ्क्याह * न चेति * कुत इत्यत आह *तदिति* असम्बद्धस्योपाधित्वेऽतिप्रसङ्गादुपाधिसम्बन्धः समवायेऽपि वाच्यो नच संयोगः सम्भवति द्रव्यमात्रवृत्तित्वात्तस्य नापि समवाय एव स्ववृत्तित्वापाताद्भेदेऽनवस्थानादित्यर्थः । संयोगादिसम्बन्धाभावेपि समवायस्य स्वभाव एव सम्बन्धो भविष्यतीत्यत आह * स्वेति * सम्बन्धत्वमभावरूपं इति द्वितीयमाक्षिपति * नचेति * हेतुमाह * प्रतीति * सम्बन्धत्वस्याभावत्वे तत्प्रतियोगी धर्म्मी च भावरूपो वक्तव्यः । नच द्रव्यादिपञ्चकप्रतियोगिकाभावः सम्बन्धत्वं, भूतलादौ तदभावेपि सम्बन्धत्वव्यवहाराभावादतः प्रतिषेधमर्हतीति प्रतिषेध्यो धर्मी तस्य प्रतियोगिनश्चानिरूपणादित्यर्थः । अस्तु तर्हि द्रव्यादिपदार्थषट्कात् व्यतिरिक्तमेव सम्बन्धत्वं तथाभावाच्च को दोष इत्यत आह * सप्तेति *

भावपदार्थाः षडेकोऽभाव इति सप्तपदार्थात्मकं जगत्त्वयोपगम्यत इत्यर्थः । तदेव कुत इत्यत आह * परस्परेति * परस्परविरुद्धयोरेकनिषेधेऽन्यतरविधिध्रौव्यन्यायेनेत्यर्थः । पूर्वं सम्बन्धो नियामक इति शङ्किते सम्बन्धत्वं दुर्निरूपमित्युक्तं भवतु वा संबन्धत्वं सुनिरूपं तथाऽपि नियम्यात् लक्षणात् भिन्नं कथं नियामकं स्यादित्याह * यदिति * नियम्यादन्यस्माच्च भेदाविशेषेपि तदाधारः सम्बन्धः तदेव नियमयति नान्यदिति शङ्कते * तदिति *

इति सम्बन्धखण्डनम् ।

---

किमिदमाधारत्वं यत्रेति प्रत्ययविषयत्वमुत, इहेतिप्रत्ययविषयत्वमुत, समवायित्वमिति विकल्पयन्नाह।

३२ आधारत्वखण्डनम् ।

कः पुनराधारार्थः । यत्र स्थीयते तदिति चेन्न । यत्रेति सप्तम्यर्थस्यापि विवेचनीयत्वात् । इहेति प्रत्ययविषय इति चेन्न । तत्रेति प्रत्ययविषयस्यानाधारत्वप्रसङ्गात् । किञ्च प्रत्ययविशेषावगमो विषयविशेषावगमात् । विषयविशेषावगमश्च प्रत्ययविशेषावगमादिति व्यक्तमन्योन्याश्रयः । समवायीति चेत् । शशे शृङ्गाभावः कुण्डे बदरमित्याद्यव्याप्तेः । गौणस्तत्र प्रयोग इति चेत् । नैतावन्मात्रं प्रत्ययश्च भ्रान्त इत्यपि वक्तव्यमवशिष्यते भवतः । ओमितिचेत् । अथ विपरीतमेव कुतो न-

स्यात् । शशे विषाणं नास्तीति च यदि विशेषाणाभावा-धिकरणत्वप्रतीतिर्भ्रान्ता शृङ्गस्य तर्हि शशोऽधिकरणं स्यात् । भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वेनाभ्युपगमात् ।

* क इति * प्रथमकल्पं शङ्कते * यत्रेति * सप्तमीप्रयोगात्सप्तम्या आधारार्थत्वादाधारस्याव्याप्यनिरूपणादसिद्धिर्लक्षणस्येति परिहरति * नेति * द्वितीयं शङ्कते *इहेति* यत्र घटे शौक्ल्यमित्यत्र घटस्यानाधारत्वप्रसङ्ग इहेति प्रत्ययाविषयत्वादिति परिहरति * नेति * विषयेणाधारेण प्रत्ययनिरूपणात्प्रत्ययेन च विषयनिरूपणादन्योन्याश्रय · इत्याह * किञ्चेति* तृतीयं शङ्कते *समेति* अव्याप्त्या दूषयति * नेति * कुण्डबदरयोः संयोगादभावस्य धर्मिविशेषणत्वात्समवायाभावात्समवायिलक्षणन्तदधिकरणेऽव्याप्तमित्यर्थः । शशादौ सप्तम्यन्तशब्दस्य गौणत्वेनालक्ष्यत्वान्नाव्याप्तिरिति शङ्कते * गौण इति * आधारप्रत्ययस्य तदालम्बनस्य यथार्थत्वे तत्प्रयोगस्य गौणत्वायोगात्प्रत्ययस्यापि भ्रान्तत्वं वक्तव्यं तदपि नोक्तमिति न्यूनत्वमिति परिहरति * नेति * प्रत्ययोपि भ्रान्त· एवेति शङ्कते *अमिति* शशादावाधारप्रत्ययः प्रमा तत्प्रयोगश्च मुख्य एव पटे शौक्ल्यमित्यादौ तत्प्रत्ययो भ्रान्तस्तत्प्रयोगोपि गौण इति विपरीतं किं न स्यान्न्यायसाम्यादिति परिहरति * अथेति * अथशब्दो वाक्यालङ्कारार्थः । शृङ्गाभावं

प्रत्यधिकरणत्वं शशस्यावास्तवं चेत् शृङ्गाधिकरणत्वं तर्हि वस्तु स्याद्भावाभावयोरेकतरविरहे अन्यतरस्वीकारनियमादिति दूषणान्तरमाह * शश इति *

द्विविधं प्रतिबन्धकत्वं कार्योत्पादविरोधित्वं पतननिवारकत्वं चेति तत्र यत्पतनप्रतिबन्धकत्वं तदधिकरणत्वमिति शङ्कते ।

३३ आधारत्वस्य लक्षणान्तरनिरासः ।

पतनप्रतिबन्धकमधिकरणमिति चेन्न । अवयविनं गुणादिकञ्च प्रति तदभावात् । अव्यवहिताधःस्थितमिति चेन्न । गुणाद्यपेक्षया गुणवदादेरधःस्थितत्वे प्रमाणाभावात् । अविशेषेण वाऽवयविगुणादीनामवयवाधारत्वप्रसङ्गात् । ऊर्द्धस्थितस्य संयोगिनः संयोगं प्रति च तदभावात् । सूत्रालम्बितद्रव्यादौ बहुलं व्यभिचारात् ।

* पतनेति * घटादयोऽवयविन आरम्भकावयवाश्रितास्तथापि पतमाना दृश्यन्तेऽतः सहैव पततामवयवानां तदाश्रयत्वं न स्याद्गुणकर्मादीनां पतनक्रियाभावादेव तत्प्रतिबन्धकत्वं द्रव्यस्य नास्तीति गुणाद्याश्रयत्वं द्रव्यस्य न स्यादिति दूषयति * नेति * प्रकारान्तरेणाधिकरणलक्षणं शङ्कते *अव्यवहितेति* घटरूपादीनां भूतलाधिकरणत्वं निवारयत्यव्यवहितेति। उपरिस्थितपटाद्याश्रयत्वमधोविशेषणान्निवारयति।गुणापेक्षया गुणवतो द्रव्यस्य गुणत्वकर्मत्वापेक्षया गुणादेश्चाधः स्थितत्वे प्रमाणाभावःप्रत्युत सहप्रवृत्तित्वात्

गुणादेः सहवृत्तिरेवातो द्रव्यादेर्गुणाद्यधिकरणत्वं न स्यादिति दूषयति * नेति * न केवलमव्याप्तिरतिव्याप्तिरपीत्याह *अविशेषेणेति* अवयविघटाश्रया ये गुणादयस्तान्प्रत्यवयविवदवयवस्याव्यवहिताधःस्थितत्वादधिकरणत्वप्रसङ्गः । नचावयविव्यवहिता इति वाच्यम् । तस्योपरिभावे नीरूपत्वप्रसङ्गादित्यर्थः । अव्याप्त्यन्तरमाह *ऊर्ध्वेति* घटभूतलयोः संयोगे घटस्यानाधारत्वप्रसङ्गस्तस्याधःस्थित्यभावादित्यर्थः । यस्मिन्दण्डादौ द्रव्यं सूत्रेणालम्बते तदालम्बितद्रव्याद्यपि सूत्रादेरूर्द्धत्वात्तदधिकरणं न स्यादिति लक्ष्यव्यभिचारो लक्षणस्य दृश्यत इत्याह * सूत्रेति *

यद्युदीरितरीत्याऽधिकरणपदार्थ एको न लभ्यते तर्ह्यन्य एवास्तु यथैकस्यैवाक्षशब्दस्य विभीतकविदेवनेन्द्रियाण्यनेके ऽर्थास्तद्वदिति शङ्कते ।

३४ अधिकरणशब्दस्य नानार्थत्वेऽपि दोषः ।

यद्येकोऽधिकरणार्थो नोपपद्यते तर्ह्यक्षशब्दार्थवद्भिन्न एवास्त्विति चेत् । आश्रयासिद्ध्यादेर्भेदप्रसङ्गात् । सोऽपि स्वीकार्य्य इति चेन्न । असिद्ध्यादित्रिधापरिगणनस्य व्यवहारतोऽन्यथाभावप्रसङ्गात् । क्वचिदाश्रयस्य समवायित्वात् क्वचिच्चाभावं समवायञ्च हेतुं प्रति तदसम्भवात् । एकस्य च तेषामुपसङ्ग्राहकस्य वक्तुमशक्यत्वात् ।

* यदीति * आश्रयासिद्धेरधिकरणासिद्धेश्चैकत्वेनेष्टाया भेदप्रसङ्गो विशेषणाश्रयपदार्थभेदाद्वि-

शेषणभेदे च दण्डिकुण्डल्यादिविशिष्टभेददर्शनादिति परिहरति * नेति * इष्ट एवायं प्रसङ्गोऽश्वादिवदधिकरणासिध्यादेर्भेदस्वीकारादिति शङ्कते *सोऽपीति* असिद्धो द्वादशविध इत्यसिद्धभेदपरिगणनप्रकारो न्यायशास्त्रसिद्धान्तस्तद्व्यवहाराऽन्यथाभावप्रसङ्गादिति दूषयति * नेति * विधा—प्रकारः। सिद्ध्यभावरूपाया असिद्धेः प्रतियोगिभेदेन भेदं दर्शयितुमधिकरणभेदमाह * क्वचिदिति * विमतं द्रव्यं गुणाश्रयत्वादित्यत्र हेतुं प्रति समवायित्वमाश्रयत्वं शब्दो नित्यः अकृतकत्वादित्यत्र कृतकत्वाभावं प्रति पृथिव्यबादिभ्यो भिद्यते पृथिवीत्वसमवायित्वादित्यत्र समवायहेतुं प्रति चाश्रयत्वं समवायित्वं न सम्भवति अभावसमवाययोः समवायाभावादतो विशेषणविशेष्यभावसम्बन्ध आश्रयार्थस्तत्रेत्यर्थः। सर्वएते भावाः केन चिदुपाधिनैकीकृत्य परिगण्यन्ते तदानुगुण्येन व्यवहार इत्याशङ्क्य न तेष्वनुगतोपसङ्ग्राहकाऽदर्शनादित्याह * एकस्य चेति *

आश्रयार्थभेदेनासिद्धिभेदः स्यादिति यदुक्तं तदस्त्वेवेति शङ्कते।

३५ अधिकरणशब्दस्य नानार्थत्व इष्टापत्ति निरासः।

बहव एवाश्रयशब्दार्थाः आश्रयासिद्ध्यादयोऽपि पृथक्पृथगेवबहवः असिद्धभेदपरिगणनग्रन्थोऽप्यन्यथाकारं बोद्धव्यो बाधदर्शनादिति चेन्न। तथापीह कुण्डे बदरमित्यत्र क आधारार्थ इति वक्तव्यं न तावत्पतनप्रतिबन्धकत्वं

सहैव कुण्डेन पतति बदरे तदसम्भवात् । नापि संयोगित्वं वैपरीत्यस्यापि प्रसङ्गात् । संयोगित्वे सत्यधःस्थितत्वं तत्राधिकरणार्थ इति चेन्न । तस्मिन् सत्यप्यन्यत्र चरणतलमिलितधूलीपटलादावधिकरणप्रतीत्यनुपपत्त्या प्रत्युत चरणतले धूलीत्येव प्रतीत्याऽऽधारत्त्वप्रतीतौ व्यभिचारित्त्वेन प्रकृतेऽपि तथास्वीकाराऽनुपपत्तेः । न सार्वत्रिकोऽयमाधारार्थः किन्तु क्वाचित्को नानारूपाधारत्त्ववादिपक्ष इति चेन्न । भवत्वन्यत्रान्यस्याधारार्थत्त्वं तस्य त्वाधारार्थत्त्वं नोपपद्यतेऽनाधारप्रतीतिविषयेऽपि सत्त्वादित्युक्तेः। आधेयापेक्षया महत्परिमाणत्त्वे सतीति चेन्न। करतलस्थिततूलराश्यादौ तदसम्भवात् अन्यस्य च वक्तुं तत्राधारार्थस्याशक्यत्त्वात् ।

* बहव इति * तर्ह्यसिद्धेयत्तापरिगणनग्रन्थो विरुध्यत इत्यत आह * असिद्धीति * अन्यथाकारमन्यथाकृत्त्वा। सति मुख्यार्थाविरोधेऽनुपचारग्रहणस्य न्याय्यत्त्वादिति हेतुमाह * बाधेति * अक्षादिशब्दानामनन्यथासिद्धशिष्टप्रयोगादगतिका गतिरनेकार्थताऽऽश्रीयते न तथाऽऽश्रयशब्दस्यानेकार्थत्त्वे किञ्चिन्मानमस्ति येन शक्तिगौरवमङ्गीकृत्यापि बह्वर्थत्त्वं स्वीकार्यमिति परिहरति * नेति * किञ्च यद्यनेकार्थत्त्वं तर्ह्येकं प्रसिद्धलौकिकोदाहरणं किं चित् लक्षणेन योजयित्वाऽन्यदप्येवमिति ; वाच्यमन्यथै-

कासिद्ध्याऽनेकार्थत्वासिद्धेरित्यभिप्रेत्याह * तथाऽपीति * पतनप्रतिबन्धकत्वमेव तत्राधारार्थ इत्यत आह * नेति * यत्र कुण्डं बदरं च सहपतति तदव्याप्तिरिति हेतुमाह * सहेति * संयोगित्वं तत्राधारत्वमस्त्वित्यत आह * नापीति * संयोगित्वाविशेषाद्बदरस्यैवाधिकरणत्वं किं न स्यादित्यर्थः। अधःस्थितत्वविशेषितसंयोगित्वमधिकरणत्वं न तद्बदरस्यास्तीति शङ्कते * संयोगीति * एकत्र शाबलेये गोत्वव्यवहारनिदानं यद्गोत्वं तदेवान्यत्रापि दृष्टं तथेहापि संयोगित्वे सत्यधःस्थितत्वं अन्यत्र यादृशव्यवहारप्रयोजकं दृष्टं तादृशस्यैवात्र प्रयोजकत्वं वाच्यमिति परिहरति * नेति * आर्द्रपादे यथा धूलिपटलस्याधःस्थितसंयोगिनोऽपि पादं प्रत्यधिकरणप्रमित्यभावः प्रत्युत पादाश्रितो धूलिपटल इति विपरीतनिश्चयः तत्सामान्यादिहापि तथात्वं स्वीकर्तुं युक्तमित्याशयः। मत्पक्ष आधारत्वस्यानेकार्थत्वादन्यत्रान्य एवाधारोऽस्तु तथा प्रकृते चाऽयमेमाधारो भवति क्वाचित्कस्याधारस्यैवाभिधानादिति शङ्कते * नेति * अनतिप्रसक्तस्यैव प्रयोजकत्वादतिप्रसक्तं न तच्छब्दप्रवृत्तिनिमित्तं स्यादिति परिहरति * नेति * आधेयापेक्षया महत्त्वे संयोगित्वे च सत्यधःस्थितमधिकरणं विवक्षितं बदरस्य कुण्डापेक्षयाऽल्पत्वान्नाधारत्वप्रसङ्ग इति शङ्कते * आधेयेति * अव्याप्त्यैवैतद्दूषयति * नेति * करतले यदा तूलराशिः छत्रं वा तिष्ठति तदा तदपेक्षया

महत्त्वं करस्य नास्तीति तदव्याप्तिरित्यर्थः । तत्राऽन्य एवाधारार्थः प्रतिवस्त्वधिकरणार्थभेदस्वीकारादित्यत आह * अन्यथेति *

संयोगित्वे सत्यधःस्थितत्वमाधारत्वमिति लक्षणमव्याप्त्या निरस्य सम्प्रत्यधःशब्दार्थानिरूपणाद्विशेषणासिद्धं लक्षणमित्याह ।

३६ अधःशब्दार्थानिरूपणाल्लक्षणासिद्धिः।

अधःशब्दार्थस्य च वक्तुमशक्यत्वात् । पतनाभिमुखदिग्स्थितत्वमिति चेन्न । पतनार्थस्य गमनाधिकस्याधःशब्दार्थव्यतिरेकेण निर्वक्तुमशक्यत्वात् । अत एवाधःशब्दार्थस्य दुर्वचत्वमधिगम्याद्वैतवादिना गुरुणा शिष्याय खण्डनमुपाचक्षाणेन भगवता पराशरेणाभिहितम्—"अधः शब्दनिगद्यं किं किञ्चोर्ध्वमभिधीयते" ।

* अध इति * अधःशब्दार्थनिर्वचनं शङ्कते * पतनेति * यन्मुखं पतत्यतति तदभिमुखी या दिक्साऽधःशब्दार्थः तस्यामवस्थितत्वमधःस्थितत्वमित्यर्थः । अधोगमनं हि पतनं ततोऽधःशब्दार्थसिद्धौ पतनसिद्धिः सजातीयगमनान्तरव्यावृत्त्या पतनसिद्धौ तदभिमुखदिग्रूपाधःशब्दार्थसिद्धिरिति इतरेतराश्रय इति परिहरति * नेति * गमनाधिकस्येति गमनविशेषस्येत्यर्थः । अधःशब्दार्थानिर्वक्तव्यत्वं पराशरेणाप्युक्तमित्याह * अतइति * ऋभुणाऽद्वैतवादिना शिष्याय निदाघाय यत्खण्डनमुपदिष्टं तदाचक्षाणे-

नेति सम्बन्धः । वर्त्तनप्रामाण्यसिद्ध्यर्थं प्रणेतृविशेषणं द्रष्टव्यम् ।

प्रकारान्तरेणाधः शब्दार्थं शङ्कते ।

३७ अधःशब्दार्थनिरुक्तिः प्रकारान्तरेण ।

पृथिव्यभिमुखी दिगधःशब्दार्थ इति चेन्न । ऊर्ध्वशब्दार्थस्यापि पृथिव्यभिमुखत्वसम्भवात् । यदपेक्षया पृथिव्यभिमुखी या दिक् तदपेक्षया साऽध इति चेन्न । यदपेक्षयेति किं यमवधीकृत्येति विवक्षितम्, उत यदीयाभिमुख्यव्यवस्थितेति । आद्ये पृथिव्यूर्ध्वस्थितं पदार्थमवधीकृत्य योर्ध्वा दिगिति भवद्भिर्व्यवह्रियते सापि पृथिव्यभिमुखी भवतीति साप्यधः स्यात् । अत एव न द्वितीयोऽपि । यस्यां दिशि क्रियया पृथ्वी सन्निहिता भवति सा दिगध इति चेन्न । कूपादौ मध्यगतस्य तिर्यग्दाल्यमानस्य क्रिया पतनं स्यात् तद्व्याक्रान्ता च तिर्यग्दिगधः स्यात् । पृथिवीमवधीकृत्य यं चान्यं पदार्थं अवधीकृत्य यो मध्य इति देशो व्यवह्रियते स पृथिव्यतिरिक्तदवध्यपेक्षया ऽध इति चेन्न । पृथिव्यामेव तद्व्यवहारापत्तेः । पृथिवीं, पदार्थान्तरञ्चापेक्ष्य मध्यत्वस्य विवक्षितस्याधःशब्दार्थप्रदर्शनमन्तरेण निर्वक्तुमशक्यत्वात् । पृथिव्यपेक्षयोर्ध्वं परापेक्षया चाधः तत्त-

योर्मध्यमित्येवं निरुच्यते मध्यत्वम् अन्यथा तिर्य्यगपि प्रसङ्गात् । तद्यथा-पृथिव्यपेक्षया पूर्वमपरापेक्षया च पश्चिमं तयोर्म्मध्यमुच्यते प्रतीपादिगवस्थितयोः परस्परापेक्षया प्रतीपदिक्सङ्करे मध्यव्यवहारात् ।

* पृथिवीति * पृथिव्युपरिस्थितघटादेरधो या दिक् भवति सा पृथिव्यभिमुख्यधःशब्दार्थ इत्यर्थः । एकैकस्मादूर्ध्वदेशात्परः परः ऊर्द्धदेशो भवतीति कृत्वोर्द्धदेशोऽप्यूर्ध्वदेशान्तरापेक्षया पृथिव्यभिमुखो भवतीत्यतिव्याप्तिरिति दूषयति * नेति * उक्तातिव्याप्तिपरिहाराय विशेषणान्तरं शङ्कते * यदिति * यदुपाधिमपेक्ष्य या दिक् पृथिव्यभिमुखी भवति सा दिक्तदपेक्षयाऽधःशब्दार्थोनचैवमतिव्याप्तिः पूर्वपूर्वदिश उत्तरोत्तरापेक्षयाऽधोरूपत्वस्वीकारादित्यर्थः । दूषणोक्तिविभागप्रज्ञानाय विकल्पयति * नेति * यत्सम्बन्धाभिमुख्यं यदीयाभिमुख्यं तस्मिन्व्यवस्थितत्वं यदपेक्षेत्यर्थः । अपेक्षाबुद्धिजन्यपदार्थे सर्वत्र प्रायेणापेक्ष्यमाणस्यावधित्वदर्शनादिहापि यदपेक्षेति यमवधिं कृत्वेति प्रथमकल्प एवास्त्वित्यत आह * आद्य इति * पृथिव्या उपरि यो घटादिस्तिष्ठति तमपेक्ष्य यापि दिगूर्ध्वमिति भवद्भिः सङ्केत्यते सापि तदुपरितनान्तरापेक्षया पृथिव्यभिमुखी भवतीत्यतिप्रसक्तिरेवेत्यर्थः । प्रथमकल्पोक्तातिव्याप्तिं द्वितीयेऽप्यतिदिशति *अत इति* सूर्यचन्द्रध्रुवादिमण्डलानां पूर्व-

पूर्वापेक्षयोर्ध्वस्थितत्वव्यवहारगोचराणामपि परस्प-राभिमुख्यावस्थितत्वादधस्त्वप्रसङ्ग इत्यर्थः । व्यव-हिताया दिशो व्यवच्छेदार्थं सन्निहितेतिविशेषणं श-ङ्कते *यस्यामिति* क्रियावत्पदार्थं प्रति यस्यां दिशि पृथिवी सन्निहिता भवति सा दिगधः शब्दार्थ इत्य-र्थः । अनिष्टापादनेन दूषयति *नेति* कूपादौ दंडा-ग्रे पाषाणं सूत्रेणावलम्ब्यावस्थाप्यते तदाऽसौ पाषा-णो डोलायमानो भवति तदाश्रिता या तिर्यग्गमनरूपा क्रिया क्रियावन्तं प्रति क्रिया वा पृथिवीसन्नि-धिहेतुत्वात्पतनं स्यादित्यर्थः । एवमनिष्टमुक्त्वा लक्ष-णस्य दूषणमाह *तदिति* तिर्यग्गत्याक्रान्ता या तिर्यक् दिगधः स्यादित्यतिव्याप्तिरितियावत् । पृथिवी-मेकमवधिं स्वीकृत्यापरं चोपरि पतत् पक्षिणमव-धीकृत्य तदुभयापेक्षया यो देशो मध्यो भवति स पृ-थिव्यतिरिक्तावध्यपेक्षतयाऽधः शब्दार्थ इति शङ्कते *पृ-थिवीमिति* भूमौ निखातनिध्यादेः पृथिव्यपेक्षयाऽधः स्थितत्वात्तद्भागस्याधस्त्वमस्ति नच तत्र पृथिव्यतिरि-क्तावध्यपेक्षास्तीत्यव्याप्तिरिति परिहरति *नेति* मध्य-त्वविशेषणासिध्या लक्षणस्यासम्भवमाह *पृथि-वीमिति* उपरि पतत्पक्षिणोऽधः पृथिव्या यदूर्ध्वं त-न्मध्यं वक्तव्यमिति अधस्त्वेन मध्यत्वनिरूपणं म-ध्येन चाधोनिरूपणमितीतरेतराश्रय इत्यर्थः । इतरे-तराश्रयप्रकटनाय मध्यस्वरूपं दर्शयति *पृथिवीति* विपक्षे बाधमभिधत्ते *अन्यथेति* ऊर्ध्वत्वाधस्त्वाभ्यां निरूपणव्यतिरेकेण केवलद्वयापेक्षया मध्यत्वनिरूपणे

सति पृथिवीतरापेक्षया तिर्यग्दिश्यपि सम्भवादति-प्रसङ्ग इत्यर्थः । प्रसङ्गमेव स्पष्टयति * तदिति * उर्द्ध्वं पृथिवीभागावस्थितप्राङ्मुखपुरुषपेक्षया पूर्वं ततः किञ्चित् दूरे वृक्षमूलावष्टब्धपुरुषापेक्षया च पश्चिमं तदेव पुनस्तत्पुरुषद्वयापेक्षया मध्यमुच्यत इत्यर्थः । कुत इत्यत आह * प्रतीपेति * प्रतीपयोर्विरुद्धयो-र्दिशोरवस्थितौ यौ पदार्थौ तयोः परस्परापेक्षया परस्परयोर्दिशोः सङ्करे मध्यव्यवहारदर्शनात्तिर्यगप्यधः स्यादित्यर्थः । यत्रैकस्य पूर्वबुद्धिस्तत्राप्यपरस्य पश्चिमा बुद्धिरिति सङ्कर इत्यर्थः ।

एवमधस्त्वानिरूपणेनाधःस्थितत्वे सति संयोगि-त्वमाधारत्वं न भवति चेदन्य एवाधारार्थो भवत्विति शङ्कते ।

३८ आधारार्थस्यान्यस्यानिरुक्तिः ।

अथान्यः कश्चिदाधारार्थोऽस्तु प्रतीतिसिद्धत्वात्प्रतीते-श्चैवमनन्योपपाद्यत्वात् । मैवम् । तदनित्यं वा स्यात् नित्यं वा । नाद्यः तदभावे आधारप्रतीत्यभावप्रसङ्गात् गोत्वादिनि-त्यत्वन्यायसाम्येऽपि अस्यानित्यत्वे तेषामप्यनित्यत्वापा-ताच्च । नापि द्वितीयः तादृशमप्यनुगतमननुगतं वा स्यात् । द्वितीयेऽनुगताधारप्रतीत्यसम्भवः सङ्केतग्रहाशक्यत्वञ्च । प्रथमे सामान्यवदाश्रयापरित्यागि वा स्यात् तत्त्यागि वा । आद्ये यदेव तदाधारतया प्रतीतं तत्तदाधेयं न स्यात् । द्वि-

तीयेऽपि च यदि नियामकमन्तरेण तदस्त्राश्रयं भजति त्य-
जति च तदा नियमानुपपत्त्या सर्वदा तद्भजनत्यजनोचि-
तप्रत्ययव्यवहारप्रसङ्गः ।

* अथेति * हेतुमाह * प्रतीति * कुण्डाधारं बदरमित्यादिप्रतीतिसिद्धत्वात्तदपलापोऽनुभवविरुद्ध इत्यर्थः । एवंविधप्रतीतिरेव नास्तीत्याशङ्क्य तदपलापोऽप्यनुभवविरुद्धः स्वानुभवसिद्धेरित्याह * प्रतीति * आधारस्य युक्तिबाधितत्वात्तत्प्रतीतेर्भ्रान्तित्वं गतिरिति परिहरति * मैवमिति * युक्तिबाधितत्वं दर्शयितुं विकल्पयति * तद्धीति * आधारपदार्थोऽनित्य इत्याद्यं दूषयति * नेति * एकरूपप्रतीतिगोचरतयाऽऽधारत्वस्यैक्यात्तस्यानित्यत्वेन विनाशे जगति क्वाप्याधारबुद्धिर्न स्यादित्यर्थः । पक्षश्चायमनुपपन्न इत्याह * गोत्वेति * जातिनित्यत्वेऽनुगतप्रत्ययविषयत्वमनौपाधिकं सर्वदा प्रतीयमानत्वं वा न्यायः सोऽत्रापि समानस्तथाप्यनित्यत्वे गोत्वादीनामप्यनित्यत्वप्रसङ्ग इत्यर्थः । नित्यत्वपक्षोऽपि न सम्भवतीत्याह *नापीति* असम्भवं दर्शयितुं विकल्पयति *तादृशमिति* अननुगतपक्षं दूषयति *द्वितीय इति* इह कुण्डे बदरमिह घटे शौक्ल्यमित्यनुवृत्तप्रत्ययव्यवहारौ न भवेतामित्यर्थः । दोषान्तरमाह *सङ्केतेति* व्यक्तीनामानन्त्यव्यभिचाराभ्यामाधारशब्दशक्तिग्रहो न स्यादित्यर्थः । अनुगतं तदिति प्रथमकल्पं दूषयितुं विकल्पयति *प्रथम इति* आधारत्वमाश्रयन्न परित्य-

जति सामान्यवदित्याद्यमनूद्य दूषयति *आद्य इति* देवदत्तस्य य आधारो दृष्टः पीठः स एव कदाचिद् देवदत्तशिरोगततया तदाश्रितो दृश्यते तन्न स्याद्देवदत्तं प्रत्याधारत्वस्य पीठे नित्यं सत्त्वादित्यर्थः । आश्रयपरित्यागीति द्वितीयकल्पेपि तस्याधारत्वस्य आश्रयभजनत्यजनयोर्नियामकान्तरं नास्ति किं स्विदस्तीति विकल्प्य प्रथममतिप्रसङ्गेनापाकरोति *द्वितीय इति*

द्वितीयं शङ्कते ।

३९. द्वितीयकल्पनिरासः ।

अथ तस्याश्रयभजनत्यजनयोर्नियामकोऽस्ति तर्हि स वक्तव्यः । सोऽपि कल्पयिष्यतेऽन्यथाऽऽधारप्रतीत्यनुपपत्तिरिति चेन्न । तत्परिकल्पने यदेव भजने नियामकं स एवाधारार्थोऽस्तु कृतं पूर्वपरिकल्पितेनेति । अस्त्वेवमेवेति चेन्न । तस्याऽपि स्वाश्रयभजनत्यजननियामकस्याऽवश्यवाच्यत्वे तस्यापि चैवं वैयर्थ्यमित्यधिकापरिकल्पने नियमानुपपत्तिः । अधिकपरिकल्पने च पूर्वपूर्ववैयर्थ्यप्रसङ्ग इति गुरुतरं व्यसनमापद्येत । परस्परेण परस्परस्य नियामकत्वमिति चेत् । अन्योन्याश्रयिणावर्थावपि परस्पराकर्षकभावव्यवस्थया सुस्थीकुरु ततो दास्यामस्तत्रोत्तरम् । जात्यादयोऽपि तर्ह्येवमनुपपन्ना इति चेन्नोच्चैर्वक्तव्यं यदि कोऽपि शृणोति तदा महदनिष्टमस्माकं प्रकाशीकृतं स्यात् ।

* अथेति * तादृशनियामकानुपलम्भान्न वक्तुं शक्यते इति परिहरति * तर्हीति * प्रत्यक्षानुपलम्भेऽप्याश्रयत्वानुपपत्तिप्रसूतार्थापत्त्या कल्प्यत इति शङ्कते * सापीति * कल्पितेन नियामकेनावश्यकतया प्रथमप्रतीतिकेनाधारप्रतीतिव्यवहारोपपत्तौ नाधारार्थान्तरं कल्पनीयं वैयर्थ्यादिति परिहरति * तदिति * तर्ह्याधारत्वनियामकं यत्परिकल्पितं तदेवाधारव्यवहारगोचरोऽस्त्विति शङ्कते * अस्त्विति * तदपि नित्यमनित्यं वा द्वितीये तन्नाशेऽधिकरणव्यवहारो न स्यान्नित्यत्वे वाऽऽश्रया ऽपरित्यागे कदाचिदाश्रितस्य पुनस्तदाश्रितत्वानुपपत्तिस्त्यागे च नियामकानङ्गीकारेऽतिप्रसङ्गोनियामकस्वीकारे वैयर्थ्यमिति परिहरति *नेति* उपपादितं सोपहासमुपसंहरति *अधिकेति* पूर्वेण नियामकेनोत्तरस्याश्रयभजननियमोस्तूत्तरेण पूर्वस्याश्रयभजननियम इति कुतो वैयर्थ्यमिति शङ्कते * परस्परेति * अन्योन्याश्रयत्वं तर्हि क्वापि दोषो न स्यादिति परिहरति * अन्योन्येति * पूर्वमुत्तरं नियच्छत्तेनाश्रये नियतं सदुत्तरं नियच्छति उत्तरं च पूर्वं नियच्छत्तेनाश्रये नियतं सत्पूर्वन्नियच्छतीति वाच्यं तथाच परस्पराश्रयिणावर्थावित्येकस्मिन्नाकृष्यमाणे परोप्याकृष्टोभवत्येवमन्यदपीत्यन्योन्याकर्षकभावव्यवस्थिताविति प्राप्तं तच्चेत्परिहर्त्तुं शक्नोषि परिहारान्तरं ब्रूम इत्यर्थः। जातिगुणादीनामाश्रयभजनत्यजने नियामकाभावेऽतिप्रसङ्गान्नियामकस्य वक्तव्यत्वे तेनैव तद्व्यवहारोपपत्तौ जात्याद्यपलापः स्यादिति प्रतिबन्दी-

ग्रहेण शङ्कते * जातीति * सर्वानिर्वचनवादिनं प्रती-
दमनिष्टत्वेन कथमुद्भाव्यत इति सोपहासं परिहरति
* नेति * ।

खण्डनान्तरं दर्शयितुं विकल्पयति ।

४० खण्डनान्तरम् ।

किञ्च यत्तदाधारत्वं तत् साधारमनाधारं वा । अन्त्ये क्व स्वविशिष्टप्रत्ययं कुर्य्यात् विशेषाभावात् । आद्ये तदाधारत्वं वाच्यं । स्वरूपमेव तादृशं तस्य येन स्वयं सत्ता स्वात्मनि सत्ताप्रत्ययकारिणी सत्तान्तरमन्तरेण यथा तथेदमपि विनैवाधारान्तरं आधारप्रत्ययकारीति चेन्न । भ्रान्तित्वप्रसङ्गात् । यथा विना रजतत्वं तत्प्रत्ययो भ्रान्तिस्तथैव स्यात् उपपाद्यश्चायमर्थो भेदखण्डनप्रस्ताव इत्युपरम्यते । विनाऽप्याधाराधेयभावं स्वभावसम्बन्धेन नियामकत्वं भविष्यति यथा विषयविषयिभावेनार्थज्ञानयोरिति चेन्न । स्वभावसम्बन्धस्य निरस्तत्वात् । यमुदाहरसि च विषयविषयिभावं सोऽपि वक्तुं न शक्यते ।

*किञ्चेति* आधारत्वं स्वयमनन्याश्रयमिति विकल्पे दोषमाह * अन्त्यं इति* आधारत्वस्य च क्वाप्यनाश्रितत्वेनाविशेषात्तद्विशिष्टाधारप्रतीतिर्न स्यादित्यर्थः । साधारमिति पक्षे आधारत्वस्याप्याधारान्तरं वाच्यं तद्वदन्यान्यस्वीकारेऽनवस्थाप्रसङ्गात्स्वयमेवेति वाच्यं तथा च स्ववृत्तिरित्यभिप्रेत्याह *आद्य इति* यथा सत्तासं-

सर्गादन्यत्र सद्व्यवहारेपि सत्तान्तरमन्तरेण सत्ता- याः सत्त्वव्यवहारवदाधारत्वान्तरमन्तरेणाप्याधारत्वे तथा प्रत्यय इति शङ्कते * स्वरूपमिति * येन स्वरू- पेणाधारान्तरं विनैव स्वाधारप्रत्ययकारीति सम्ब- न्धः । आधारत्वं साधारमिति प्रत्ययो बदरं साधार- मित्यनेन सरूपो जायते ततोऽर्थवैलक्षण्ये भ्रान्तित्व- मेव स्यादिति परिहरति * नेति * उचितालम्बना- भावे जायमानप्रतीतिर्भ्रान्तिरित्यत्र दृष्टान्तमाह * य- थेति* स्वरूपभेदवादेऽतिरिक्तभेदाभावेपि भिन्नो घट- इति प्रतीतिः प्रमा तद्वदिहापि किं न स्यादित्यत आ- ह * उपपाद्य इति * नियामकं नियम्यादन्यत् भिन्नम- पि तदेव नियच्छति तदाधारत्वादिति न वक्तुं शक्य- माधारार्थानिरूपणादित्युक्तमिदानीं स्वभावसम्बन्ध- खण्डनप्रसङ्गं दर्शयितुं प्रकृतव्याजेन चोद्यमुद्भावयति * विनेति * ज्ञानज्ञेययोः स्वभावातिरिक्तसंयोगादि- संसर्गासत्वेप्ययमेव विषयोऽस्येदमेव विषयीति नियमः स्वभादेवेति दृष्टान्तमाह * यथेति * सम्बन्धस्य सम्बन्ध्याश्रयत्वात्स्वस्य स्वाधारत्वायोगात्स्वभावस- म्बन्धो निरस्त इति परिहरति * नेति * ज्ञानज्ञेय- योर्विषयविषयिभावसम्बन्धो यः स्वभाव उक्तः सो- पि साध्यसम एव निर्वचनाशक्तेरित्याह * यमिति *

तदनिर्वचनीयत्वं प्रकटयितुं विषयविषयिभाव- माक्षिपति पृच्छति वा ।

४१ विषयविषयिभावखण्डनम् ।

तथाहि कः पुन ज्ञानादेर्घटादिना विषयविषयिभावः ।

प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेष इति चेन्न। इच्छादिविषयाव्यापनात्। विषयिण इति चेन्न। तत्त्वस्यैव निरूप्यमाणत्वात्।

*तथाहीति* ज्ञानादेरितीच्छाक्रियादयो गृह्यन्ते। विषयविषयिभावलक्षणं शङ्कते *प्रकाशेति* तदीयत्वं समवायादेरप्यस्तीतितद्व्यावृत्त्यर्थं प्रकाशस्येति विशेषणम्। मात्रशब्दार्थः स्वभावविशेष इत्यनेनोच्यते। विषयविषयिभाव इत्यनुषङ्गः। इच्छाक्रियादेरिष्यमाणादिना विषयविषयिभावोऽस्ति नच प्रकाशस्येतिविशेषणं तत्रैवाव्याप्त्या दूषयति *नेति* तर्हि प्रकाशस्येति विशेषणं परित्यज्य विषयिणः सतस्तदीयतामात्रं विषयविषयिभावलक्षणं ब्रूमोऽव्याप्तिपरिहारायेति शङ्कते *विषयीति* विषयित्वं लक्षणविशेषणं सिद्धं चेल्लक्षणवैयर्थ्यमसिद्धं चेद्विशिष्टलक्षणासिद्धिर्लक्षणविशेषणत्वे स्ववृत्तितेति परिहरति *नेति*

स्वशब्दस्यात्मात्मीयवाचकत्वादत्र स्वस्य भाव इति व्युत्पत्त्याऽऽत्मीय उच्यते किंवा स्वश्चासौ भावश्चेति स्वरूपमुच्यते इति विकल्पयति।

४२ स्वभावशब्दार्थखण्डनम्।

किञ्च स्वभावः स्वधर्मो वा स्वात्मा वा तस्य विवक्षितः। आद्ये ज्ञानत्वादिकं वा साधारणमसौ तत्तद्घटज्ञाननियतो वा कश्चित्। आद्ये साधारण्या न विशेषतस्तदीयतामात्ररूपत्वसम्भवः। द्वितीये तु प्रतिविषयं

व्यावृत्तज्ञानधर्मस्वीकारे वचनभङ्गिभेदेन साकारवादस्वीकारः । किञ्च नाऽसौ धर्म उपधेयान्तराधीनो विषयभूतघटाद्यतिरिक्तोपाधिप्रतीत्यपेक्षाप्रसङ्गात् ।

*किञ्चेति* प्रथमकल्पमुपादाय पुनर्द्वेधा विकल्पयति *आद्य इति* असौ स्वभावो ज्ञानत्वगुणत्वादिकं साधारण इति प्रथमकल्पार्थः । घटतज्ज्ञानयोर्नियतः कश्चित्पटतज्ज्ञानयोर्नियतः कश्चिद्धर्म्म इति द्वितीयकल्पार्थः । प्रथममसम्भवेन पराकरोति *आद्यइति* ज्ञानत्वादेः सर्वज्ञानसाधारण्यात् घटविषयीदं ज्ञानमितिविशेषतस्तदात्मत्वन्न सम्भवत्यन्यथा घटज्ञानस्य तद्विषयित्वप्रसङ्गादित्यर्थः । घटज्ञानस्य घटं प्रत्येव नियतत्वं घटाकारत्वा ऽव्यतिरेकेणान्यस्य दर्शयितुमशक्यत्वेन वचनप्रकारभेदेन ज्ञेयाकारं ज्ञानमिति विज्ञानवाद आश्रितः स्यादिति द्वितीयं दूषयति * द्वितीये त्विति * ज्ञानगतासाधारणधर्मस्य बाह्यार्थनिमितत्वान्न विज्ञानवादप्रसङ्गः इत्याशङ्क्याह * किञ्चेति * ज्ञानगतो यो विषयित्वाख्यो धर्मः स किमौपाधिको जातिरूपो वा यद्यौपाधिकस्तदा घटादिव्यतिरिक्तोपाधिनिमित्त उत घटादिलक्षणोपाधिनिमित्त एव न तावद्व्यतिरिक्तोपाधिनिमित्तत्वं सम्भवतीत्यर्थः। कुत इत्यत आह *विषयेति* घटतज्ज्ञानव्यतिरिक्तोपाधेरपि तत्र प्रतीतिप्रसङ्गात्सत्तामात्रेणातिप्रसञ्जकत्वादित्यर्थः ।

घटादिरेव तज्ज्ञानगतासाधारणधर्मोपाधिरिति

द्वितीयश्चानुपपन्न इत्याह ।

४३ घटादेर्ज्ञानासाधारणधर्मत्वनिरासः ।

नच घटादिरेव तथा । असम्बन्धात् । तथापि तथात्वे चातिप्रसङ्गात् । नापि जातिरूपः क्वचिद्घटमात्रपटमात्रज्ञानगततया पृथग्व्यवस्थितौ सत्यां घटपटविषयैकज्ञाने सहावस्थित्या जातिसङ्करप्रसङ्गात् । प्रतिविषयं ज्ञानभेदनियमे विशिष्टज्ञानानुपपत्तेः एवम्भूतविचित्रजात्यभ्युपगमे प्रत्येकोचितव्यवहारस्याप्यभावप्रसङ्गात् । अथ जातिसङ्करोऽपीष्यते तथापि स एव विशेषो घटज्ञानत्वादिरस्त्विति विषयासिद्धिः ।

* नचेति * तथा–उपाधिरित्यर्थः । हेतुमाह * असम्बन्धेति * ज्ञानगतासाधारणधर्मव्यतिरेकेण घटतज्ज्ञानयोरन्यसम्बन्धानिरूपणादित्यर्थः । असम्बन्ध एव घटादिर्ज्ञानगतासाधारणधर्मनिमित्तं किं न स्यादित्याशङ्क्य यत्किंचिद्यत्किञ्चिज्ज्ञाने तथा स्यादित्याह * तथापीति * जातिरिति द्वितीयं दूषयति *नापीति* अन्योन्यपरिहारेण व्यवस्थितयोः क्वचित्सहस्थिततामाह * क्वचिदिति * कदाचित् घटमात्रज्ञानं जायते तन्निष्ठोयं धर्मः क्वचित्पटमात्रविषयमपि ज्ञानं जायते तदा तन्मात्रनिष्ठोपि यदा पुनर्घटपटद्वयविषयं ज्ञानं जायते तत्र घटनियतत्वादिधर्मद्वयस्य साङ्कर्यप्रसङ्गान्न जातिरूपत्वमित्यर्थः । प्रतिविषयं ज्ञानभेदनियमाद्घटादिद्वयविषयमेकं ज्ञानमेव नास्ति यत्र सहस्थितिः क॰

रूप्येतेत्याशङ्क्याह * प्रतीति * मृगत्वपुरुषत्वजाति-भ्यामन्यैव पुरुषमृगत्वजातिर्यथैवं घटज्ञानत्वपटज्ञान-त्वव्यतिरिक्तैव घटपटज्ञानत्वजातिरिति न साङ्कर्यमि-त्याशङ्क्याह *एवमिति* पुरुषमृगे पुरुषादिप्रातिनियत-व्यवहाराभाववदिहापि घटादिप्रातिनियतजलाहरणा-दिव्यवहारो न स्यात्प्रवृत्तिज्ञानयोरेकगोचरत्वनियमा-दित्यर्थः । येषां पक्षे जातिसङ्करो दोषत्वेनेष्टस्तेषामयं दोषो भवेद्यैस्तु सङ्करो न बाधक इष्यते तेषामयं कथं दोष इतिशङ्कते * अथेति * त्वन्मतेऽपि ज्ञानगतविशेषस्य तत्ज्ञानत्वव्यतिरेकेणान्यस्यानिरूपणात् घटाकारत्व-रूप एव घटज्ञानस्य विशेषस्तेनैव बाह्यार्थप्रयुक्त-व्यवहारोपपत्तेर्ज्ञानव्यतिरिक्तज्ञेयासिद्धिरिति दूषयति * तथापीति *

घटज्ञानं पटज्ञानमिति स्वातिरिक्तसम्बन्धस्याबा-धितानुभवविषयत्वात्सोपि सिध्यतीति शङ्कते ।

४४ प्रतीत्याज्ञानज्ञेययोः सम्बन्धकल्पनानिरासः ।

अथ विषयेणापि सम्बन्धप्रतिभासनात् सोऽपीष्यते । न। तस्यैव सम्बन्धस्य विचार्य्यमाणत्वात् । स एवासाविति चेन्न । तदैक्यात् ज्ञानार्थसाधारणविषयप्रतीत्यापत्तेः । संयोगप्रतिपत्तिवत् विषयित्वं तत्र अर्थे तु विषयत्वमन्य-दिति चेन्न । सैव हि ज्ञातता स्यात् सा च निराकरिष्य-ते । द्वितीये च स्वात्मा घटपटव्यक्तीनामिव घटपटज्ञान-व्यक्तीनां व्यावृत्त इति तच्चद्विषयविषयितागोचरानुगत-

बुद्धिव्यवहारभङ्गप्रसङ्गः।

* अथेति * यौक्तिकबाधात्सम्बन्धावभासस्य भ्रान्तित्वान्न तद्बलेन विषयसिद्धिरिति परिहरति * नेति * सम्बन्धो विषयादभिन्नो भिन्नो वेति विचार्यमाणत्वादद्यापि तदसिद्धिरित्यर्थः। घटज्ञानयोर्यः सम्बन्धो विचार्यते सोयं विषय एव तत्कथं तस्य दुर्निरूपत्वं कथं वा विषयासिद्धिः सम्बन्धस्योभयाधारतया प्रतीतेरिति शङ्कते *स इति* तर्ह्यसौ विषयविषयिभाव एकोऽनेको वेति विकल्प्य प्रथमं दूषयति * नेति * विषयविषयिभावस्यैकत्वात्तस्य च ज्ञानज्ञेयस्वरूपत्वात् ज्ञानज्ञेययोर्द्वयोरपि प्रत्येकं विषयत्वं विषयित्वं च प्रतीयेत संयोगस्यैकत्वे संयोगिद्वयेपि संयुक्तप्रतिभासवदित्यर्थः। द्वितीयं शङ्कते * विषयित्वमिति * अर्थे विषयत्वमेव ज्ञाने विषयित्वं प्रतीयते तथापि द्वयोः सम्बन्धस्योपचारस्तद्द्वयनिरूप्यत्वादित्यर्थः।तद्विषयभावस्य न द्रव्यान्तर्भावः सामान्यादिवृत्तित्वाभावेपि अभावस्यापि विषयत्वादनन्तर्भावोपि सिद्धान्तविरोधीति विषयता ज्ञाततैवेति परिशिष्यते तदनुपपत्तिर्वक्ष्यत इत्याह * सेति * स्वस्य भावः स्वभावइति प्रथमकल्पान्निरस्य स्वमेव भावः स्वभाव इति द्वितीयं दूषयति * द्वितीये चेति * ज्ञानज्ञेयस्वरूपाणां व्यावृत्तत्वाद्घटपटज्ञानादौ सर्वत्र विषयविषयिभावानुगतबुद्धिव्यवहारानुपपत्तिरित्यर्थः।

विषयिताया ज्ञानस्वभावत्वेपि विज्ञानवादिनि-

राकरणन्ते न घटत इत्यभिप्रेत्याह ।

४५ विषयिताया ज्ञानस्वरूपत्वेपि विज्ञानवादानिराकरणम् ।

किञ्च तदीयता ज्ञानस्य स्वभाव इति वचनं विचारमर्हति । तदिति तावद्विषयपरामर्शः सम्बन्धिता छप्रत्ययस्यार्थः तदेतदन्योन्यविशिष्टं उभयं ज्ञानस्य स्वभाव इति ब्रुवाणेन विषयो विज्ञानस्य स्वभाव इत्युक्तं भवतीति साधु विज्ञानवादिनिराकरणप्रकरणोपसंहरणमकारि । सम्बन्धमात्रं ज्ञानस्य स्वभावो न तु विषय इत्याशय इति चेन्न । विशेषानुपादाने सम्बन्धमात्रमिदं सर्वस्यैव स्यात् । यतो न तावन्न कस्यचित्, सम्बन्धस्वरूपतात्यागप्रसङ्गात् । नापि नियतस्य तादात्म्यापत्तेरुक्तत्वात् नियामकासम्भवाच्च । कारणं नियामकमितिचेत् तेन नियामकेन किं भवति । तदीयत्वं तस्य सम्बन्धस्येति चेत् । तदेव तदीयत्वं ज्ञानस्वभावभूतसम्बन्धस्वरूपप्रविष्ट मुत बहिर्भूतं धर्मान्तरम् ।

*किञ्चेति* विचारमेव दर्शयति *तदिति* आयनादिसूत्रेणैव ईयप्रत्ययस्य सम्बन्धार्थछप्रत्ययस्थाने विधानात्तदादेशस्तद्वद्भवतीतिन्यायात् छप्रत्ययस्येत्युक्तम् । ततः किमित्यतआह*तदिति*तद् छप्रत्ययाभ्यां ज्ञानज्ञेययोर्मिलितं रूपमुक्त्वा तस्य ज्ञानात्मत्वविधानेऽर्थोपि ज्ञाने प्रवेशित इति भवच्छास्त्रे यद्विज्ञानवा-

द्वनिराकरणोपसंहारप्रकरणं तद्विरुद्धं स्यादित्यर्थः । तदीयेत्यत्र छप्रत्ययेनापि प्रतीयमानं सम्बन्धमात्रं ज्ञानरूपं न तच्छब्दार्थो विषयोपि तेन न विज्ञानवादप्रसङ्ग उपलक्षणत्वेन विषयस्य बहिर्भावादिति शङ्कते *सम्बन्धेति* सम्बन्धस्य नियमेन सम्बन्धिपारतन्त्र्यात्सम्बन्धिविशेषानुपादाने सर्वस्यैवार्थस्य सम्बन्धो ज्ञानस्वभाव इति ज्ञानस्य सर्वाभेदप्रसङ्गान्न विज्ञानवादापत्तिपरिहार इति दूषयति * नेति * सम्बन्धस्य स्वतन्त्रत्वात् विशेषानुपादानेपि सर्वस्य सम्बन्धितया न ज्ञानाऽभेदापत्तिरित्यत आह *यत इति* सम्बन्धः कस्य चिदपि न भवति स्वतन्त्र एवेति तावन्नेति सम्बन्धस्तत्रहेतुः * सम्बन्धेति * घटादिनियत एव सम्बन्धस्तर्हि घटादिज्ञानस्वभावो भवत्वित्यत आह * नापीति * विषयविशेषेण सम्बन्धस्य नियतत्वमपि न सिध्यति नियामकाभावादित्याह * नेति * प्रतिनियतज्ञानकारणमेव नियामकमतो नियामकाभावोऽसिद्ध इति शङ्कते * कारणमिति * अकिञ्चित्करस्य नियामकत्वायोगात्तज्जन्यातिशयः कश्चित्सम्बन्धो वक्तव्यो नचायं वक्तुं शक्य इति परिहरति * नेति * विषयविशेषनियतत्वं सम्बन्धस्य नियामकेन क्रियते इति शङ्कते * तदीति * नियामकेन यत्तदीयत्वं सम्बन्धस्य भवति तत् ज्ञानस्वरूपे विषयविषयिभावसम्बन्धेऽन्तर्भूतमुतानन्तर्भूतमिति विकल्पयति * तदिति *

प्रथममनूद्यापवदति ।

४६ तदीयत्वस्य विषयविषयिभावेऽन्तर्भावानन्तर्भावनिरासः ।

यदि प्रथमः, तच्छब्दार्थोऽपि तर्हि स्वरूपप्रविष्ट इति विषयज्ञानयोः स एवाभेदप्रसङ्गः । द्वितीये च तस्य धर्मान्तरस्य विषयेणाभेदः, तच्छब्दार्थस्य विषयस्य विशेषणस्य तदीयशब्दार्थे विशिष्टरूपे प्रविष्टस्य स्वीकृतधर्मान्तरस्वभावतया निरुक्तत्वात् ।

* यदीति * तदीयत्वमित्यत्र तच्छब्देनोच्यमानो घटादिविषयोऽपि छप्रत्ययार्थः सम्बन्धिविशेषणतया ज्ञानस्वरूपे प्रविष्ट इति ज्ञानज्ञेययोरभेदप्रसङ्ग इत्यर्थः । तदीयत्वं ज्ञानस्वभावसम्बन्धाद्बहिर्भूतमिति द्वितीयं दूषयति * द्वितीये चेति * तस्य छप्रत्ययेनोच्यमानस्य तदीयत्वाख्यधर्मान्तरस्य स्वविशेषणीभूततच्छब्दार्थविषयेणाभेदः स्यादित्यर्थः । कुत इत्यत आह * तदिति * तच्छब्दार्थस्य घटादेस्तदीयत्वलक्षणविशिष्टरूपे विशेषणतया प्रविष्टस्य स्वघटिततदीयत्वरूपप्रविष्टस्य स्वीकृतधर्मान्तरस्वरूपतया त्वयैव निरुक्तत्वादित्यर्थः ।

ज्ञाने ज्ञेयसम्बन्धस्य सम्बन्धिभ्यां स्वभावसम्बन्धव्यतिरेकेण सम्बन्धान्तरासम्भवेन स्वभावसम्बन्धताङ्गीकारेण ,निरुक्तत्वादित्युक्तनियामकनिमित्तस्य विषयाभेदः स्यात् को दोष इति शङ्कते ।

४७ अभेदेऽपि दोषः ।

अस्तु असौ धर्मो विषयाभिन्न इति चेत् । तथापि

किमसौ स्वीकृतेन स्वभावसम्बन्धेन सम्बद्धो नवा, नचे-त् तद्विज्ञानं न कस्य चित्सम्बन्धि स्यात् । सम्बद्धश्चेत्किं सम्बन्धान्तरेणाऽऽहो स्वभावसम्बन्धेनैवासौ ज्ञानात्मक-सम्बन्धसम्बधीयः । आद्ये तत्राप्येवं प्रसङ्गो यस्या भयेन स्वभावसम्बन्धः स्वीकृतः सा तदवस्थैवानवस्था। द्वितीयश्चेत् ज्ञानात्मकसम्बन्धसम्बन्धीय इत्यत्र विशिष्टस्व-रूपे ज्ञानरूपमपि विशेषणं प्रविष्टमिति पूर्वोक्तन्याये-नाधुनोक्तन्यायेन च ज्ञानस्यैकस्यैव द्वयमपि स्वात्मेति वाग्भङ्गिभेदमात्रेण ज्ञानगोचरयोरभेदस्वीकार इति । एतेनान्यत्रापि स्वभावसम्बन्धः प्रत्याख्यातव्यः ।

* अस्त्विति * विषयाभिन्नधर्मान्तरस्य विष-यविषयिभावसम्बन्धेन सम्बन्धोस्ति न वेति विक-ल्पयति *तथापीति * सबन्धस्य तदीयत्वधर्मेण स-ह सम्बन्धान्तरस्वीकारेऽनवस्थानादसम्बन्ध एवा-स्त्वित्यत आह * नचेदिति * विज्ञानस्यैव विषयवि-षयिभावसम्बन्धात्मत्वस्वीकाराद्विज्ञानमित्युक्ततदीय-त्वधर्मसम्बन्धाद्विज्ञानस्वभावसम्बन्धस्य न विज्ञानं घटादिविषयं स्यादित्यर्थः । प्रथमपक्षमनूद्य पुनर्द्वे-धा विकल्पयति * सम्बन्धश्चेदिति * सम्बन्धीयः स-म्बद्ध इत्यर्थः । सम्बन्धान्तरानङ्गीकारे तद्व्यवहार-स्य निरालम्बनत्वापातात्प्रथमकल्प एवास्त्वित्यत आह * आद्य इति * तत्रापि तदीयान्तरत्वस्य स्वी-

कर्त्तव्यतया सैवानवस्था स्यादस्या भयेन पूर्वं स्वभाव-सम्बन्धस्वीकार इत्यर्थः । स्वभावसम्बन्धेन तदीयत्वं धर्मान्तरं स्वभावसम्बन्धेनैव सम्बद्धमिति द्वितीयक-ल्पमनूद्यापवदति *द्वितीय इति* ज्ञानात्मकसम्बन्धेन स्वभावसम्बन्धीत्यत्र विशिष्टरूपे ज्ञानमपि विशेषण-तया प्रविष्टं स्यादित्यर्थः । ज्ञानस्य विशेषणतया विशिष्टरूपे प्रवेशस्वीकारमात्रेण कथं ज्ञानज्ञेया-भेदप्रसक्तिरित्यत आह * इति पूर्वेति * तदेतद-न्योन्यविशिष्टमुभयं ज्ञानस्वभाव इति पूर्वोक्तन्याय-स्तच्छब्दार्थस्य तदीयत्वविशिष्टे विशेषणतया प्रवेश इत्येवंरूपः अधुनोक्तन्यायः *वाग्भङ्गिभेदेति * धर्मा-न्तरमपि तत्स्वभाव इति वचनेनेत्यर्थः । समवाया-दावपि स्वभावसम्बन्धस्तेनैव न्यायेन निराकरणीय इत्याह * एतेनेति *

विषयविषयिभावलक्षणान्तरं समाशङ्क्य निराचष्टे।

४८ विषयविषयिभावलक्षणान्तरनिरासः ।

ज्ञानीयफलाधारत्वं विषयत्वं तद्वत्त्वं च विषयि-त्वमित्यपि दुष्टम्। तथाहि— ज्ञानीयं फलं ज्ञातता वा व्य-वहारो वा स्यात् । आद्येऽतीतानागतधीभ्रमाद्यर्थाव्या-प्तिः। न च तत्रैव फलजनने किं नियामकमिति प्रयोजकम-नुगतं शक्यनिर्वचनं, तथात्वे वा तदेव विषयत्वमस्तु । व्यवहारश्च यदि कराकर्षणादिः स न सार्वत्रिकः नान्त-रीयकश्चान्यत्रापीत्यतिव्यापकं, यदीच्छादि स्तदाधारत्व-

भात्मन इति घटाद्यव्याप्तिः तद्विषयत्त्वं च तद्विषयत्व-मेवापेक्षते । यश्चोपेक्षां नाम व्यवहारं नानुमनुते कथं नोपेक्षाप्रेक्षामुपेक्षते । हानादिव्यवहारज्ञानानामेव च कथं न निर्विषयत्त्वं प्रसज्यते । अथ सर्वत्र हानादिव्य-वहारोपगमः तदा व्यवहारज्ञानयोरनुपरम एव स्यात् ।

*ज्ञानीयेति* ज्ञानजन्यं फलं ज्ञानीयं प्राप्तिफलवत् भ्रामव्यवच्छेदार्थं विशेषणं तद्वत्त्वमिति।तज्जनकत्वमि-ति यावत् । दुष्टत्वं प्रकटयितुं विकल्पयति *तथाहीति* आद्यमव्याप्त्या दूषयति * आद्य इति* अभूद्वृष्टिर्भवि-ष्यति वृष्टिरिदं रजतं स्थाणुर्वा पुरुषो वेत्यादिज्ञानकाले विशिष्टाभावादेव न तदाश्रितं स्फुरणफलञ्जायते न ह्यस्ति सम्भवोऽप्रत्युत्पन्नो धर्मी धर्मश्च प्रत्युत्पन्न इति तेन तद्विषयविषयिभावाव्याप्तिरित्यर्थः । दूषणान्तरमाह * न चेति * बहुसन्निधौ जायमानज्ञानेन तत्रैव फ-लजनने किं नियामकमिति वीक्षायान्न तावत्संयोगज-त्वं नियामकं चक्षुरादेरपि रूपादिज्ञानेन ज्ञाततादर्श-नान्नापि तद्विशेषितत्वमतीतादेरसतो विशेषकत्वायो-गान्नापि तदाकारत्वं विज्ञानवादप्रसङ्गादजडस्य ज-डाकारत्वायोगाच्चातो नियामकाभावादसिद्धिर्लक्षण-स्येत्यर्थः । कुठारजन्यक्रियाया कुठारविषये फलजन-कत्ववत् ज्ञानमपि स्वकरणविषये फलञ्जनयतीति क-रणद्वारकसम्बन्धो नियामक इत्यत आह * तथास्त्व इति* उपजीव्यत्वाल्लाघवात्तदेव विषयविषयिभावल-क्षणमास्तामित्यर्थः । यदि ज्ञानफलं व्यवहारस्तर्ह्यसा-

वुपादानादिरूप उतेच्छारूप इति विकल्प्य प्रथमं दूषयति *व्यवहार इति* आत्माकाशादौ कराकर्षणादेरभावेनाव्याप्तिस्तथा घटज्ञानेन घटादाने तन्निष्ठरूपादेरपरिहार्यतयाऽऽदानं भवतीत्यतिव्याप्तिरित्यर्थः॥द्वितीयेऽसिद्धिमाह *यदीति* इच्छोपेक्षादि ज्ञानफलं तदाधारत्वं नच घटादेरात्मगुणस्यात्मसमवायादित्यसिद्धिरित्यर्थः। इच्छाद्याधारत्वन्न विषयत्वं किं तु तद्विषयत्वमेव तच्च घटपटादेरप्यस्तीति नाव्याप्तिरित्यत आह * तदिति * विषयत्वस्याद्याप्यसिद्धतया तत्सिद्धौ तत्सिद्धिरित्यात्माश्रय इत्यर्थः । अव्याप्त्यन्तरमाह * यश्चेति * उपेक्षाया इच्छाभावमात्रतया व्यवहारत्वं नास्तीति चिरंतनतार्किकरीतिः तन्मते तृणादिविषयोपेक्षाजनकप्रेक्षां कथन्नोपेक्षेत उपेक्षेतैवेति तृणाद्यविषयत्वापत्तिरित्यर्थः । हानादिव्यवहारे हानाद्यन्तरन्नास्त्युताऽस्तीति विकल्प्य प्रथमे तत्रैवाव्याप्तिरित्याह * हानादीति * हानादिरपि हानाद्यन्तरवान् ज्ञेयत्वादिति द्वितीयं शङ्कते * अथेति * तत्तद्व्यवहारासिद्ध्यर्थं तत्तज्ज्ञानं तत्तद्विषयसिद्ध्यर्थं तत्तद्व्यवहारान्तरं स्वीकार्यमित्यनवस्था क्वचिदुपरमे तत्रैवाव्याप्तिरिति परिहरति * तदिति *

यत्सम्बद्धो यो व्यवहारस्तदनुकूलस्वभावज्ञानं विषयि अर्थश्च स विषय इति मतान्तरन्तत्राप्युक्तं खण्डन मतिदिशति ।

४९. अन्यत्र दूषणातिदेशः ।

एतेन तत्सम्बन्धत्वं यदुच्यते यत्प्रतिबद्धव्यवहा-

रानुकूलस्वभावं यद्विज्ञानं तत्तस्य विषयः तद्वत्त्वं विषयित्त्वमिति, तदपि प्रागुक्तयुक्तिं नातिवर्तते ।

*एतेनेति* तत्सम्बद्धत्वं च यदुच्यते तदपि प्रागुक्तयुक्तिं नातिवर्त्तेत इति सम्बन्धः । तत्सम्बन्धप्रकारमेव दर्शयति * यदित्यादिना * स्वभावशब्दार्थव्यवहारशब्दार्थविकल्पदूषणेनैव निरस्तमित्याशयः ।

शालिकनाथेनोक्तं विषयलक्षणमनुवदति ।

५० शालिकनाथीयविषयलक्षणनिरासः ।

अथोच्यते य एवार्थो यस्यां संविदि भासते तद्वेद्यः स पृथक् नेति वेद्यावेद्यस्य लक्षणमिति । तदपि नविघ्नः। यस्यां संविदीति किं संविदधिकरणं अथ तद्विषयः अथ सम्बन्धिमात्रम् । नाद्यः घटादेस्तदधिकरणत्त्वानुपगमेनाऽव्यापनात् यथातथा निर्वचनीयज्ञानत्वाद्यातिव्याप्तेश्च । द्वितीयश्चाद्याप्यनिरूपितः कथं निरूपकः स्यात् वैपरीत्यापाताच्च । तृतीयश्चातिव्यापकः कारणादेरपि तत्सम्बन्धित्त्वात् ज्ञानान्तरेणावभासमानत्त्वात् । तयैव संविदा भासमानत्त्वमिति चेन्न । भासमानत्त्वस्यैव निरूप्यमाणत्त्वात् तन्निरूप्यत्त्वात्तद्वत्त्वस्य । यस्यां संविदि प्रकाशमानायां यः प्रकाशत एवेति चेन्न। प्रकाशमानताया एव निरूप्यमाणत्वात् । सामान्यतो विषयत्त्वे सिद्धे विशेषतो विषयाभिधानमिति चेन्न । सर्वथा विशे-

षानुपपत्तिद्वारा सामान्यानुपपत्तौ तद्विषयप्रमात्त्वस्या-
पि सन्दिग्धत्त्वात् ।

* अथेति * योऽर्थो यस्यां संविदि भासते सोर्थ-स्तद्वेद्यस्तस्याः संविदो विषयः पृथक्वेति पृथगन्योऽनव भासमानो न विषय इति भासमानत्वमभासमानत्वं च विषयाविषयलक्षणमित्यादि यदुच्यत इत्यर्थः। भासमानत्वं भानकर्तृत्वं चेत् घटाद्यव्याप्तिर्भावकर्मत्वं चेदनुमेयाऽव्याप्तिस्तद्विषयत्वं चेदत्रापि तदसिद्धिरित्यभिप्रेत्य दूषयति *तदिति* यस्यामिति सप्तम्या अधिकरणमर्थ उत विषयो यद्वा सम्बन्धिमात्रमिति त्रिधा विकल्पयति * यस्यामिति * भूतलाद्यधिकरणघटादीनां ज्ञानानाश्रितानां अविषयत्त्वापत्तिरिति प्रथमं निराकरोति * नाद्य इति * शुक्लो घट इति वदत्र घटोविदित इति सामानाधिकरण्यप्रत्ययात्संवेदननिष्ठत्वं घटादेरप्युपचारत इत्यत आह * यथेति * घटज्ञाननिष्ठत्वं ज्ञानत्वगुणत्वादेरस्तीति तं प्रति विषयत्वापत्तिरित्यर्थः । विषयसप्तमीति द्वितीयं दूषयति *द्वितीय इति* तद्विषयज्ञाने योऽर्थो भाति तस्य लक्षणमुक्तं स्यादेवंच सति विषयपदार्थानिरुक्तौ न तेन लक्षणनिरूपणमात्माश्रयादिप्रसङ्गादित्यर्थः। अनिष्टान्तरमाह * वैपरीत्येति * यत्प्रातिपदिकोपरि सप्तमी भवति तया तदर्थस्यैव विषयत्वप्रतिपादनात् ज्ञानस्य विषयत्वं घटादेर्विषयित्वमपि वैपरीत्यमित्यर्थः। सम्बन्धिमात्रं सप्तम्यर्थ इति तृतीयं दूषयति * तृतीये-

ति * ज्ञानकारणानां तत्सम्बन्धितया तद्विषयत्वप्रसङ्ग इति यावत्। ज्ञानसम्बन्धित्वे सति भासमानत्वं विषयत्वं तत्कथमभासमानचक्षुरादेर्विषयत्वप्रसक्तिरित्यत आह * ज्ञानेति * तत्ज्ञानभास्यत्वं तद्विषयलक्षणन्न भास्यत्वमात्रमतो न चक्षुरादिष्वाप्तिरिति शङ्कते * तयेति * तच्छब्दस्य सामान्यविशेषार्थत्वानुपपत्तिमभिप्रेत्य परिहरति * नेति * भासमानत्वस्यैवाव्याप्यसिद्धत्वाद्भासमानत्वसिद्धौ तद्वत्वस्य भासमानसम्बन्धित्वं संविदि सिद्ध्येदेवं च संवित्सम्बन्धसिद्धौ भासमानत्वसिद्धिस्तत्सिद्धौ च संवित्सम्बन्धित्वसिद्धिरिति परस्पराश्रय इत्यर्थः। शङ्कते * यस्यामिति * सप्तम्या अधिकरणत्वं विषयत्वं वा तत्सम्बन्धित्वं वा नोच्यते किन्तु यस्यां प्रकाशमानायां सत्यामिति सतिसप्तमीयमित्यर्थः। समूहालम्बनज्ञाने कारणानामपि ज्ञानेन सह भासमानत्वमस्तीति तद्व्युदासाय भाननियमग्रहणं। प्रकाशमानत्वविशेषणासिद्ध्या लक्षणासिद्धिरेवेति परिहरति * नेति * प्रकाशविषयता हि प्रकाशमानता विषयस्याव्याप्यनिरूपणात्प्रकाशमानत्वासिद्धिरित्यभिप्रायः। सामान्यतस्तावद्विषयत्वं सिद्धमिदं च विशेषणतो विषयत्वाभिधानमतः सामान्यतः सिद्धं विषयत्वमुपजीव्य विशेषतो विषयत्वाभिधानं स्यादिति शङ्कते * सामान्येति * सामान्यस्य येन केन चिद्विशेषेण व्याप्तत्वात् विशेषमात्रासिद्धौ निष्कृष्टसामान्यप्रसिद्धिरप्रमैवेति परि-

हरति * नेति *

ज्ञाने य आकारो नास्ति तमाकारमर्पयितुं समर्थो यो हेतुः स विषय इति सुगतमतं शङ्कते ।

५१ सौगतविषयलक्षणनिरासः ।

ज्ञानाकारार्पणक्षमो हेतुरेव विषय इति चेन्न । आकार एव केनार्पित इति विनिगन्तुमशक्यत्वात् । न ह्याकारस्ततो ज्ञानस्वरूपादन्यः तत्र च तथोत्पन्नानि कारणानि प्रत्येकमेव समर्थानीति कथं तेषु विशेषं विनिगमयिष्यसि । यद्यपि सकलसमर्थहेत्वनुविधानमस्ति तथापि स्फुटन्तावच्छटस्यानुविधानमिति तदेव तदाकारप्रयोजकमिष्यते इति चेन्न । समस्तकारणान्तरानुविधानवच्छटानुविधानस्य प्रामाणिकत्वाविशेषेण किं स्फुटत्वास्फुटत्वाभ्यां स्यात् । स्फुटानुविधानमादायैव विषयनिरुक्तिं कुर्म्म इति चेन्न । सर्वहेत्वनुविधानस्य न्यायतः स्फुटत्वात् । दृश्यमानमनुविधानं यस्येति चेन्न । दत्तोत्तरत्वात् । दृश्यमानतैव च विषयताऽनिर्वचनान्न शक्योपदर्शना ।

* ज्ञानेति * चक्षुरादिव्युदासायाकारसमर्पकत्वविशेषणम् । परिहरति * नेति * ज्ञानाकारो ज्ञानस्वरूपं उत धर्म आद्ये ज्ञानजनकमात्रस्यैव तदर्पकत्वेनातिव्याप्तिर्द्वितीये तस्य व्यावृत्तौ लक्षणाव्याप्तिरनुगतत्वे तस्य भावरूपत्वे सिद्धान्तविरोधोऽभावरूपत्वे तज्जनकत्वमेव न कारणस्येत्यासिद्धिरित्यर्थः । स्वामि-

प्रायमेव प्रकटयति * न हीति * अस्तु ततः किमि- त्यत आह * तत्र चेति * तथोत्पन्नानि मिलितानीति यावत्। चक्षुराद्यन्वयव्यतिरेकत्वेन सर्वहेतुसापेक्षत्वं यद्यप्यस्ति घटज्ञानस्य तथापि स्फुटमसङ्कीर्णमसाधारण्येनान्वयव्यतिरेकवत्वं घटस्य तत्रास्ति तेन घटाकारज्ञाने घटस्यैव क्षमत्वमिति विनिगम्यते इति शङ्कते *यद्यीति* घटज्ञानमिति घटेन विशेषितत्वं स्फुटत्वमिति यावत्। कारणभावेऽन्वयव्यतिरेकवत्वस्यैव प्रयोजकत्वादाकारसमर्पको हेतुर्विषय इति लक्षणं कारणान्तरेष्वप्यस्ति स्फुटत्वमप्रयोजकमिति परिहरति *नेति* स्फुटानुविधानत्वे सत्याकारसमर्पको हेतुर्विषय इति लक्षणं ब्रूमोऽतो न हेत्वन्तरव्याप्तिस्तत्र स्फुटानुविधानत्वाभावादिति शङ्कते *स्फुटेति* स्फुटमात्रं विवक्षितमुत प्रत्यक्षानुविधानमिति विकल्प्य प्रथमं दूषयति * नेति * चक्षुरादिषु सत्स्वपि घटाभावापराधेन घटज्ञानं न जायत इति केवलव्यतिरेकात् घटानुविधानस्य स्पष्टत्ववत् सत्यपि घटे चक्षुराद्येकैकाभावेपि घटज्ञानं न भवतीति व्यतिरेकस्य तुल्यतयाऽनुविधानं स्पष्टमेवेत्यतिव्याप्तिरित्यर्थः। प्रामाणिकत्वमात्रं नानुविधानस्पष्टत्वं किन्तु प्रत्यक्षतो दृश्यमानत्वं तच्च न चक्षुरादावस्तीति द्वितीयं शङ्कते *दृश्येति* आलोकाद्यनेककारणसन्निधौ जायमानं ज्ञानं प्रति दृश्यमानस्य कस्याकारसमर्पकत्वमिति निश्चेतुमशक्यमित्युक्तमपि परिहरति *नेति* दर्शनविषयता हि दृश्यमानता विषयत्वानिरुक्तौ तदपि निर्वक्तुमशक्यमिति दोषा-

न्तरमाह * दृश्येति *

ज्ञानकर्मत्वं विषयत्वं केचित् ब्रुवते तन्निराकरोति।

५२ केषांचिद्विषयलक्षणनिरासः।

ज्ञानकर्म्मत्वमित्यपि न। ज्ञानेन कर्म्मणः सम्बन्धस्य निर्वक्तव्यत्वात्। तन्निरुक्तिभङ्गश्चेश्वराभिसन्धौ ज्ञाततावादे द्रष्टव्यः।

*ज्ञानेति* गमनकर्मग्रामादिव्यवच्छेदार्थं विशेषणम्। कुत इत्यत आह *ज्ञानेनेति* ज्ञानेनार्थस्य सम्बन्धोऽस्ति नवा, नचेत्सर्वः सर्वस्य कर्म स्यादस्ति चेत्तन्निर्वचनं कार्यं तदशक्यमित्यर्थः। कथं सम्बन्धो निर्वक्तुमशक्य इत्यत आह * तदिति * ज्ञानतत्कर्मणोर्न्न तावत् संयोगो ज्ञानस्याद्रव्यतयाऽसंयोगान्नापि समवायः ज्ञानस्यात्मगुणस्य घटादौ तदयोगात्तादात्म्यं तु विरुद्धयोर्दूरोत्सारितमेव नच शक्तिलक्षणः सम्बन्धस्तस्य द्रव्यादिव्यतिरेकाव्यतिरेकयोरनुपपत्तेर्न्निरूप्यनिरूपकभावोऽपि मूलसम्बन्धाभावेऽतिप्रसङ्गी, विषयभावस्त्वद्याप्यसिद्धो जन्यजनकभावोऽपि न सम्बन्ध ईश्वरज्ञानस्याविषयत्वप्रसङ्गादिति तदनिर्वचनं प्रकरणान्तरे न्यरूपमित्यर्थः।

लक्षणान्तरं शङ्कते।

५३ विषयत्वस्य लक्षणान्तरनिरासः।

विना सम्बन्धान्तरं यद्विशेषणज्ञानं स विषयः तेन विना सम्बन्धान्तरं ज्ञानविशेष्यं विषयः विशेष्यं चेदं

यद्विशिष्टनामकं तत्त्वान्तरं यद्गतं धर्मं गृह्णातीति । अत्रोच्यते । यद्गतं धर्मं गृह्णातीत्येतावन्मात्रमेव विवक्षितं गृह्णातीत्येवेति वा, आद्ये दण्डस्यापि विशेष्यत्वापातः तद्गतस्यापि सत्त्वादेर्धर्मस्य ग्रहणात् । नापरः भवति हि व्यभिचारिणो धूमस्याविच्छिन्नमूलकत्वादि विशेषणं तद्विशिष्टं च तत्वान्तरम् । नच विशेष्यस्य धर्मं व्यभिचारितां गृह्णाति ।

* विनेति * मूलसम्बन्धमनपेक्ष्य यस्य विशेषणं ज्ञानं स विषय इत्यर्थः । अहं ज्ञानीति समवायसम्बन्धादात्मविशेषणं ज्ञानमिति तन्निवृत्त्यर्थं विनेतिविशेषणम् । ज्ञाननिष्ठो धर्मः कथंविषयलक्षणमपक्षधर्मत्वादित्यत आह * तेनेति * ज्ञातो घट इति ज्ञानेन विशेष्यो यः स विषय इति यावत् । संमवायविशेष्यघटव्यावृत्त्यर्थं ज्ञानेतिविशेषणम् । किन्तद्विशेष्यमित्याकाङ्क्षायामाह *विशेष्येति* विशिष्टनामकन्तत्वान्तरं यद्गतं धर्मं गृह्णाति तद्विशेष्यं यथा दण्डी देवदत्तत्वं दण्डीदेवदत्त इति सामानाधिकरण्यादतोविशेष्यो देवदत्तस्तथा ज्ञातो घट इति विशिष्टं घटत्वं गृह्णातीति घटो विशेष्य इत्यर्थः । विशेष्यानिरुक्तौ लक्षणानिरुक्तिं मन्वानः परिहरति * नेति * तदुपपादनाय विकल्पयति *तादिति*किञ्चिद्धर्मग्राहकत्वमुत सर्वधर्मग्राहकत्वमिति विकल्पार्थः । प्रथमकल्पेऽतिव्याप्तिरित्याह *आद्य इति* सत्वज्ञेयत्वादिधर्मस्य दण्डधर्मस्य दण्डनिष्ठस्या-

पि दण्डिना ग्रहणादिति हेतुमाह * तदिति * द्विती-योपि नानवद्य इत्याह * नेति * कुत इत्यत आह *भवतीति* धूममात्रस्य गोपालघटिकादिषु वर्तमान-स्याग्निव्यभिचारिणोऽविच्छिन्नमूलत्व बहुलत्वादि वि-शेषणं भवति विशेष्यधूममात्रस्य सर्वत्रैक्यादित्यर्थः। यद्यपि धूममात्रस्याविच्छिन्नमूलत्वादिविशिष्टविशे-षणं तथापि विशेष्यातिरिक्तं विशिष्टं न तत्रास्ति ततो नाव्याप्तिरित्यत आह * तदिति * तत्गतधर्म-मात्रग्राहित्वे धूममात्रव्यभिचारित्वधर्मस्यापि ग्राह-कत्वेन व्यभिचारित्वं स्यादतो यद्गतधर्मं गृह्णात्येव विशिष्टं स विशेष्य इति लक्षणं धूमाव्यापकमित्यर्थः।

अच्छिन्नमूलत्वादि न धूममात्रस्य विशेषणं किन्त्व-विरतगत्यूर्द्ध्वत्वविशिष्टस्यैवेति नाव्यापकतेति शङ्कते।

५४ विशेषणं विशिष्टस्यैव न धूममात्रस्येतिशङ्कानिरासः।

अथोर्ध्वाविरतगतिविशिष्टस्याविच्छिन्नमूलता विशेष-णं नच तथाभूतस्य व्यभिचारिता धर्म इत्युच्यते। मैवम्। प्रथमविशिष्टः किं व्यभिचारी नवा, आद्ये स एव दोषः द्वितीये विशेषणान्तरान्तर्भाववैयर्थ्यं प्रथमविशि-ष्ट एव च तद्दोषावसरः। अथ यद्धर्मविशिष्टस्य तद्विशेषणं तद्धर्मं गृह्णाति न सर्वं नच व्यभिचा-रिताविशिष्टस्य तानि विशेषणानीति चेन्न। तर्हि धू-ममात्रं न व्यभिचारि। ततश्च व्यभिचारिताविशिष्टस्यैव तस्य तानि तथा भवतु व्यभिचारिता तद्विशेषणं

परं सा न विशेष्यकोटिरिति चेन्न । अद्यापि विशेष्याज्ञानात् ।

* अथेति * अस्तु तथापि कथमव्याप्तिपरिहार इत्यत आह * नचेति * यस्य च तद्विशेषणं तस्य व्यभिचारित्वमेव नास्तीति नोक्तदोष इत्यर्थः । विकल्पासहत्वेन दूषयति * मैवमिति * अविरतोर्द्धगतिविशेषणविशिष्टो योधूमस्तत्र व्यभिचारित्वमस्ति नवेति विकल्पार्थः । किम्वाऽत इत्यत आह * आद्य इति * व्यभिचारित्वधर्माग्रहणाविशेषाल्लक्षणस्य धूमाव्यापकतैव दोष इति यावत् । द्वितीयं प्रत्याह * द्वितीयेति * अविरतोर्द्धगतिविशिष्टे धूमेऽविच्छिन्नमूलत्वादिविशेषणान्तरस्य यदन्तर्भावस्तत्किमर्थं व्यभिचारनिवारकत्वाद्विशेषणस्य प्रथमविशिष्टस्यैव वह्न्यव्यभिचारित्वादतोऽविरतोर्द्धगतिविशिष्टोऽविच्छिन्नमूलश्च धूमो वह्निव्याप्त इति व्याप्तिग्रहणोपयोगिविशेषणान्तरं न स्यादित्याशयः । माभूत्तर्हि विशेषणान्तरं को दोष इत्यत आह * प्रथमेति * धूममात्रस्योर्द्धाविरतगत्या विशेष्यत्वात्तत्र च व्यभिचारित्वाख्यधर्मस्य विद्यमानत्वाद्विशिष्टेन च तदग्रहणादव्याप्तिर्दोष इत्यर्थः । यदूगतं धर्मं गृह्णात्येवेत्यस्याभिप्रायान्तरं शङ्कते * अथेति * व्यभिचारित्वधर्मविशिष्टस्य न विशेष्यत्वं किन्तु धूमत्ववतस्तच्च गृह्णात्येवेति नोक्तदोष इत्यर्थः *तानीति* अविरतगत्यविच्छिन्नमूलत्वादीनीतियावत् । यस्य धूममात्रस्य त-

द्विशेषणं तद्व्यभिचारि किन्न भवति भवत्येवान्यथा वि-
शेषणवैयर्थ्यादिति परिहरति * तदिति * अस्तु ततः
किं तत्राह * ततश्चेति * ततो व्यभिचारिताविशिष्टस्यैव तान्यूर्द्धगमनादीनि तथा— विशेषणानीति विशेषणान्तरविशिष्टस्यापि व्यभिचारित्वप्रसङ्ग इत्यर्थः। व्यभिचारिता विशेष्यसम्बन्धिन्येव केवलं न विशेष्यकोटिनिविष्टेति शङ्कते*भवत्विति*अद्यापि विशेष्यस्यानिर्णीतत्वेन नेदं सुवचमित्याह * नेति *

भङ्गातरम्भणाति।

५५ दोषान्तरोद्घाटनम्।

किञ्च तद्विशेषणमिति तत्सम्बन्धिमात्रं वा विशेषणतया वा सम्बन्धि। आद्येऽतिप्रसङ्गः। द्वितीये तु तथैवान्योन्याश्रयादि। किञ्च विशेष्यत्वलक्षणो यस्तद्गतो धर्म्मस्तं गृह्णाति न वा, आद्ये ऽतिव्याप्तिः द्वितीये गृह्णात्येवेति नियमोऽसिद्धः।

*किञ्चेति*तस्य विशेषणमिति षष्ठ्यर्थः सम्बन्धमात्रं विशेषणतया वा सम्बन्ध इत्यर्थः। यदाकदाचित्सम्बन्धत्वमुपलक्षणस्यापीत्यतिव्याप्तिरित्याह *आद्य इति* द्वितीयमपवदति *द्वितीति *तथैवेति * विशेषणान्तरस्वीकारेऽनवस्था भेदानङ्गीकारे स्वाश्रय इत्यर्थः। एवं विशेष्यलक्षणस्य दुर्निरूपत्वाभिधानेन विषयलक्षणासिद्धिमुक्त्वा दोषान्तरं दातुं विकल्पयति *किञ्चेति* विशेष्यत्वाक्रान्तोविशिष्टो भवति वा न-

वेति विकल्पार्थः। आद्ये गृह्णाति चेद्विशेष्येपि विशिष्टे विशेष्यत्वस्य गमनादतिव्याप्तिर्लक्षणस्येत्याह *आद्य- इति * विशेष्यगतसर्वधर्मग्राहकत्वनियमासिद्ध्या ल- क्षणासिद्धिरिति द्वितीयं दूषयति * द्वीति *

विना सम्बन्धान्तरं ज्ञानविशेष्यो विषय इति लक्षणस्यातिव्याप्त्यन्तरमाह ।

५६ पूर्वोक्तलक्षणेऽतिव्याप्त्यन्तरकथनम् ।

किञ्च मत्समवायो ज्ञानस्येत्यत्र भवति मत्समवाय- स्य ज्ञानं विशेषणं सम्बन्धान्तरमन्तरेणैव, नच विषयः । नच गुणगुण्यादिविशेषणविशेष्यभावे यः सम्बन्धान्त- रमन्तरेणेत्युक्त्या व्यवच्छेद्यतां नीतः स एवायं समवाय इति कथं न व्यवच्छेद्यतां प्रतिपत्स्यते, यतोऽत्र तस्यैव विशेषणविशेष्यभावत्वादन्तरस्यासिद्धिरिति । तस्मात् स- म्बन्धमन्तरेण ज्ञानं विशेषणं यस्येत्युक्तं तत्र ज्ञानं सम्ब- न्धमनपेक्ष्य स्वभावत एव यथाऽर्थस्य विशेषणं तथा समवा- यस्यापीति न कश्चिद्विशेष इति साधूक्तं मत्समवायो ज्ञानस्येत्यत्र ज्ञानविषयता समवायस्य स्यादिति । ज्ञानाभावे च प्रसङ्गात् । नच तत्र स एव स- मवायः सम्बन्धः अत्रापि विशेषणविशेष्यभावस्यैव स- म्बन्धत्वात् । नासौ सम्बन्धिनोऽन्यस्तादृशश्च व्य- वच्छेद्य इति चेन्न । समवायेऽपितुल्यत्त्वात् । सं-

योगसमवायौ व्यवच्छिद्येत इति चेन्न । ज्ञानाभावे तथाऽपि प्रसङ्गात् । न तत्र ज्ञानं विशेषणं किन्तूपलक्षणमिति चेन्न । अतीतानागतयोरविषयत्वापत्तेः । भावे चिन्तेयमिति चेन्न । अभावस्याविषयत्वापातात् । ज्ञानादन्यत् ज्ञानीयञ्च यत्कारणादि तत्रापि प्रसङ्गादिति किं विस्तरेण । नच ज्ञानाकारतायां गोचरस्य नास्त्येव ज्ञानगोचरयोर्भेदः । प्रतीतिविरोधात् । भेदमानिच्छता च स प्रतिषेद्धुमप्यनर्ह इति ।

* किञ्चेति * मत्समवायो ज्ञानस्येत्यत्र ज्ञानस्यात्मनि समवायं प्रति मूलसम्बन्धान्तरमन्तरेणैव ज्ञानं विशेषणं भवति तस्यापि विषयत्वप्रसङ्ग इत्यर्थः । तस्यापि विषयत्वादेव तत्र लक्षणगमनान्नातिव्याप्तिरित्यत आह * नचेति * ज्ञानान्तरविषयत्वेऽपि तज्ज्ञानाविषयत्वन्नेत्यर्थः । गुणगुणिनोः क्रियाकारकयोर्वा विशेषणविशेष्यभावे मूलभूतो यः सम्बन्धः समवायः स एवायं सम्बन्धः सम्बन्धान्तरमन्तरेणेति विशेषणोक्त्या व्यवच्छिन्न इति कथं तत्र लक्षणगमनमित्याशङ्क्याह *नचेति* कुतो न वाच्यमित्यत आह *यत इति * विशेषणविशेष्यभावादतिरिक्तः सम्बन्धः सम्बन्धान्तरमुच्यते मत्समवायो ज्ञानस्येत्यत्र समवायस्य विशेष्यत्वादन्तरशब्दवाच्यत्वाभावान्न व्यवच्छेद्यत्वमन्यथा घटज्ञानमित्यत्रापि घटज्ञानयोः विशेषणविशेष्यसम्बन्धभावान्न घटविषयत्वं स्यादित्यर्थः ।

उक्तमर्थं सङ्क्षिप्य दर्शयति * तथाचेति * ज्ञातो घट इत्यर्थेन सह ज्ञानं सम्बन्धान्तरमनपेक्ष्य स्वभावसम्बन्धेनैव विशेषणमिष्यते यथा तद्वन्मतःसमवायो ज्ञानस्येत्यत्रापि सम्बन्धान्तरमन्तरेणैव ज्ञानं समवायविशेषणमिति समवायार्थयोर्न्न विशेष इत्यर्थः। विना सम्बन्धं यद्विशेषणं ज्ञानमिति लक्षणस्यातिप्रसङ्गान्तरमाह * ज्ञानेति * ज्ञानस्याभाव इत्यत्र ज्ञानं स्वाभावविशेषणं भवतीत्यर्थः। सम्बन्धान्तरशब्दव्यवच्छेद्यो विशेषणविशेष्यभावातिरिक्तसमवायो ज्ञानाभावेऽस्तीति कथमतिव्याप्तिरित्यत आह *नच तत्रेति* (समवायाभावे हेतुमाह *अत्रेति* भावाभावयोर्विशेषणविशेष्यभावातिरिक्तान्तरशब्दावाच्यः सम्बन्ध इत्यर्थः। अर्थसमवाय)योः साम्यात्समवायाविषयत्वेर्थस्याप्यविषयत्वं स्यादित्यभिप्रेत्य साम्यमुक्तं तत्र वैषम्यं शङ्कते * नासाविति * विशेषणाविशेष्यभावस्य सम्बन्धिनोऽन्यत्वञ्चास्ति सम्बन्धिनोन्यश्च व्यवच्छिद्यते नातोऽतिव्याप्तिरित्यर्थः। एवमसम्भवपरिहारे नातिव्याप्तिपरिहारो ज्ञानसमवाययोर्व्यवच्छेद्यरूपाभावादिति परिहरति * नेति * संयोगसमवायातिरिक्तो विना सम्बन्धान्तरं ज्ञानविशेष्यो विषय इति लक्षणाभिप्रायं शङ्कते * संयोगेति * क्वचिद्विशेषणविशेष्ययोः संयोगोप्यस्तीति संयोगेतिग्रहणं नतु ज्ञानविशेष्ये तत्सम्बन्धेनेति द्रष्टव्यम्। संयोगादिज्ञानस्यैवं निर्विषयत्वप्रसङ्गाभेत्याह *

() एतदन्तर्गतो ग्रन्थः सो० पु० नास्ति।

नेति * अङ्गीकृत्यापि दूषयति * ज्ञानेति * ज्ञानाभावः संयोगाद्यतिरिक्तत्वे सति स्वभावेनैव ज्ञानविशेष्य इति तत्रातिव्याप्तिरित्यर्थः । एककालीनस्यैव विशेषणत्वनियमात् ज्ञानस्य च स्वाभावेनापृथक्समयत्वाभावादविशेषणत्वेन विशेषणोत्तस्यैव तदभावव्यवच्छेद इति शङ्कते * नेति * कथं तर्हि ज्ञानस्य स्वाभावव्यावर्त्तकत्वमित्यत आह * किन्त्विति * असतोविशेषणत्वाभाववद्विशेष्यत्वस्यानुपपत्तेरभूद्वृष्टिर्भविष्यति वृष्टिरित्यद्यर्थज्ञानानां विशेष्यस्य विषयत्वं नस्यादिति दूषयति * नेति * न विषयमात्रलक्षणमिदं किन्तु भावविषयस्यातो नाव्याप्तिरिति शङ्कते *. भाव इति * विषयमात्रासिद्धौ तद्विशेषासिद्धेर्विषयमात्रलक्षणमूह्यन्तथाचातिव्याप्तिस्तदवस्थेति दूषयति * नेति * संयोगाद्यतिरिक्तत्वे सति विना सम्बन्धान्तरं यत् ज्ञानविशेष्यमिति लक्षणं ज्ञानकारणचक्षुरादौ तत्फले चास्तीत्यतिव्याप्त्यन्तरमाह * ज्ञानादिति * किञ्च सुगतसमये ज्ञानाकारो ज्ञेयमभ्युपेयते तयोर्ज्ञानज्ञेययोर्भेद उताभेद आद्ये तदाकारत्वं न स्यात्सन्तानान्तरवत् । द्वितीये भेदप्रतीतिविरोध इत्यभिप्रेत्याह *न चेति* एवं ज्ञानतद्गोचरयोर्भेदं खण्डयतो भेदमात्रमनिष्टमुत तयोरेव, नाद्योऽप्रमितप्रतियोगिप्रतिषेधासम्भवात् । द्वितीये चाद्वैतविरोध इत्याभिप्रेत्याह * भेदमिति *

इति सम्बन्धाधारत्वाधःशब्दार्थविषयविषयिभावानां खण्डनम् ।

भेदप्रतीतिमात्रेण तन्निषेधोपपत्तावपि प्रमितप्रतियोगिकत्वमेव निषेधस्येति यदि कश्चिदभिनिविशते तेन भेदस्वरूपं वक्तव्यमित्याह ।

५७ भेदखण्डनारम्भः ।

वक्तव्यस्तर्हि कोसौ भेदो नाम ? सहि स्वरूपं वा स्यात् इतरेतराभावो वा धर्मान्तरं वा, नाद्यः भिन्नेऽभिन्नभ्रमानुपपत्तिप्रसङ्गात् । भ्रान्त्याऽपि धर्मिस्वरूपावगाहनात् अन्यथा कस्याभेदं सा भ्रान्तिरुल्लिखेत् ।

*वक्तव्य इति* धर्मान्तरमिति *पृथक्त्वं वैधर्म्यं चेत्यर्थः । लाघवात्स्वरूपभेदवाद एवास्त्वित्यत आह *नाद्य इति* भेदाग्रहमूलातादात्म्यभ्रान्तिस्वरूपस्यैव भेदत्वे धर्मिस्वरूपप्रतीतौ भेदोपि प्रतीत इति दूरस्थवनस्पत्यादावभेदभ्रमो न स्यादित्यर्थः । भ्रान्तिरभेदमेवावगाहते न धर्मिस्वरूपमतो भ्रमोपपत्तिरित्यत आह *भ्रान्त्येति* भ्रान्तेरुभयविषयत्वकल्पने गौरवात्तादात्म्याख्यधर्मविषयत्वमेवास्त्वित्यत आह * अन्यथेति * अयमभिन्न इति न भासेताभेद इत्येव भासेतेत्यर्थः ।

भिन्नेष्वभेदप्रकाश इति नोच्यते किन्तु ये भिन्नास्तेष्वनारब्धावयवित्वमारोप्यते न चारोपानुपपत्तिरारब्धावयव्यपेक्षया भेदग्रहस्य विशेषग्रहरूपतया विरोधित्वाभावादिति शङ्कते ।

५८ स्वरूपभेदखण्डनम् ।

ननु निःसम्बन्धित्वेन व्यवस्थिते तरुदारुप्रभृतिषु

नानाधारोऽवयव्यन्य एवाऽऽरोप्यते येषु त्वारोप्यते तेऽभेदे नैव भान्ति किन्त्वनारब्धावयविषु तेष्वारब्धावयवितया विभ्रम्यते । मैवम् । तेषामनुदाहरणीयत्वात् । अतस्मिन् स एवायमिति प्रत्यभिज्ञाभासार्थानां दृष्टान्तत्वेनेष्टत्वात् तत्रापि धर्मान्तरारोपाभ्युपगमे तादात्म्याभावस्य संसर्गाभावप्रवेशापत्तेः । नचैवमप्येष्टव्यमेव तथापि स्वरूपभेदग्रहे तत्राभेदस्य धर्मस्याप्यशक्यारोपत्वात् ।

*नन्विति*निरन्तरावस्थिते तर्वादावनेकाधारस्ततोऽन्य एवावयव्यारोप्यत इति यावत् । प्रासरूचितया तार्विस्युक्तम् । अभेद इति विषयसप्तमी । अनेकेष्वेकस्मिन्नवयविन्यारोप्यमाणे ऽनेकेषु कुसुमेष्वारोप्यमाणसूत्रे यथा न भ्रान्तिस्तद्वदत्रापि न स्यादित्यत आह *किन्त्विति* तत्रानेकेषु संयोगितया सूत्रस्य प्रतीतेरभ्रान्तिविषयत्वमिह त्वनेकेषु वनस्पतिष्ववयव्यन्तरं संयोगितया न प्रतीयतेऽतोनारब्धावयविष्वारब्धावयवित्वभ्रम इत्यर्थः । अवयव्यापारोपो नोदाह्रियतेमया ऽतस्तु खण्डनमिदमिति परिहरति *मैवमिति* किं तर्ह्युदाहरणीकृतमित्याह*अतस्मिन्निति* यत्र भिन्नयोर्भ्रमैक्ययोः स एवायमिति प्रत्यभिज्ञाभ्रमो जायते तदेवोदाहरणीयमित्यर्थः । आदिशब्देनाभेदसंशयो गृह्यते अतस्मिंस्तद्बुद्धिर्यत्र तत्रापि नैक्याध्यासः किन्तूभयनिष्ठतादात्म्याख्यधर्मान्तरमारोप्यतेऽतोधिष्ठानस्वरूपप्रतीतावपि विरोधित्वाभावाद्धर्मान्तरारोपो भवेदित्यत आह

* तत्रेति * तर्हि घटः पटो न भवतीत्यत्रापि घटस्य पटत्वं धर्मान्तरमारोप्य निषिध्यते इति वक्तुं शक्यत्वात्तादात्म्याभावस्य संसर्गाभावैक्यापत्तिरित्यर्थः । तत्रापि बाधकप्रत्ययेन संसर्गाभाव एवावेद्यत इत्यत आह * न चेति * संसर्गाभावतादात्म्याभावयोरभेदाङ्गीकारेऽपसिद्धान्त इत्यर्थः । अङ्गीकृत्यापि दूषयति * तथापीति * तयोर्भेदाङ्गीकारे भेदाभेदयोर्विरोधात्स्वरूपभेदग्रहे भेदारोपो न स्यात् घटपटयोरिवेत्यर्थः ।

इदानीमन्योन्याभावो भेद इति पक्षं दूषयति ।

५९ अन्योन्याभावखण्डनम् ।

नापि द्वितीयः प्रतीतावन्योन्याश्रयप्रसङ्गात् । प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिः अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्च तद्ग्रहणकारणमतः केतरेतराश्रय इति चेत् । नैवम् । एवं हि सति कुम्भः पटो न भवतीत्यत्र यथैव तस्याभावस्य प्रतियोगितया पटो निषिध्यते तथा कुम्भोऽपीति सोऽपि कुम्भात्मतया निषिद्धः प्रसज्ज्येत ।

*नापीति* धर्मित्वंप्रतियोगित्वव्यवस्थाप्रतीतावन्योन्याभावः प्रत्येतुं शक्यते नेत्येवतदप्रतीतेरन्योन्याभावप्रतीतौ च व्यवस्था प्रत्येतव्या न स्वरूपमात्राश्रया व्यवस्था तस्यावधित्वे तथैव समानत्वादधिकरणे च तथैवेति परस्पराश्रयप्रसङ्गः प्रतीतावित्यर्थः । विनैवान्योन्या-

भावप्रतीतिं धर्म्यादिप्रतीतिसम्भवान्नेतरेतराश्रय इति शङ्कते * प्रतीति * प्रतियोगिप्रतीतिः प्रतियोगित्व-धर्ममनुल्लिखन्ती धर्मिप्रतीतिरपि धर्मित्वाकारमनुल्लिखन्त्येव भेदप्रतीतिकारणमतो नेतरेतराश्रय इत्याशयः। ज्ञाततामात्रेण प्रतियोगितया निषेध्यत्वस्वीकारे कुम्भः पटो भवतीत्यत्र ज्ञानमात्रं पटस्य प्रतियोगितया निषेध्यत्ववत् कुम्भस्यापि स्वरूपेण ज्ञानतया प्रतियोगित्वसम्भवान्निषिद्धत्वं प्रसज्येतेति दूषयति * नैवमिति *

इदानीं भेदवादी स्वमतमुपपादयति ।

६० भेदवादिशङ्का ।

वस्तुतोऽन्योन्याभावस्य कुम्भप्रतियोगित्वेऽपि कुम्भस्यापटत्वनिरूपणकाले कुम्भस्य प्रतियोगिता नापेक्ष्यते किन्त्वाश्रयतैवेति कुम्भाप्रतिक्षेपः । पटस्य तु प्रतियोगितैवापेक्ष्यते नत्वाश्रयतेति कुम्भवत् पटस्यापि न सङ्ग्रहापत्तिः। यद्यप्यन्योन्याभावस्योभयप्रतियोगिता तथाप्यन्या कुम्भाश्रयता अन्या पटाश्रयता अन्या कुम्भप्रतियोगिता अन्या पटप्रतियोगिता तेनान्योन्याभावस्योभयप्रतियोगिकत्वे चोभयाश्रियतत्वे च नोभयोरपि सङ्ग्रहप्रतिक्षेपविरोधापत्तिः। नापि च प्रतियोगित्वस्यानुयोगिनो भेदोपजीवनेऽन्योन्याश्रयोऽनुपजीवने च स्वस्मादपि भेदग्रहापत्तिः प्रसज्येत । यतः स्म-

र्थमाणस्य प्रतियोगिता अनुभूयमानस्य चाश्रयतेत्ये तावन्मात्र एवोक्ते स्वस्मादपि भेदग्रहानापत्तिः । नचैवं स एवायमित्यत्रापि भेदग्रहप्रसङ्गः, वास्तवतरसत्त्वास-त्त्वाभ्यां विशेषात् ।

* वस्तुत * इत्यारभ्य विशेषादित्यन्तेन ग्रन्थेन । कुम्भः पटो न भवतीति प्रतिषेधावसरे कुम्भस्य प्रति-योगितायां अविवक्षितत्वान्न निषेधप्रसङ्ग इत्यर्थः । कु-म्भपटाश्रयान्योन्याभावाभेदात् पटवत् कुम्भप्रतियोगि-त्वमप्यन्योन्याभावस्येत्यत उक्तं *अन्योन्याभावस्य कुम्भ प्रतियोगिकत्वेपीति* तर्ह्यनिषिध्यमानकुम्भेन सह भिन्न-त्वेनागृहीतत्वात्पटस्यापि निषेधो न स्यादित्यत आह * पटस्येति * पटस्यासत्त्वनिरूपणावसरे पटस्य प्र-तियोगित्वेनापेक्ष्यमाणत्वादाश्रयत्वेन चानपेक्षितत्वान्न कुम्भवत्सङ्ग्रह इत्यर्थः । अन्योन्याभावस्योभयाश्रय-त्वादुभयप्रतियोगित्वाच्चाश्रयप्रतियोगिभेदाभावादुभ-यनिषेधसङ्ग्रहौ विरुद्धावेकदा स्यातामित्यत आह * य-द्यपीति* याऽपीत्यर्थः । उभयोरपि प्रतियोगित्वाधिकर-णत्वस्वरूपसाधारण्येपि घटेन विशेषिता पटेन विशे-षिता वाऽऽश्रयता प्रतियोगिता च भिन्नैवेति नोक्तदोष इत्यर्थः । यद्यपीति पाठे ततोपीत्यत्र तथापीत्यर्थः । ते-नेत्यादिना फलितनिगमनम् । प्रतियोगी प्रति-योगित्वसिद्ध्यर्थमनुयोगिनः सकाशाद्भेदमुपजीवति नवा, उपजीवति चेदन्योन्याश्रयत्वं नोपजीवति चे-त्तर्हि स्वाभिन्नात्प्रतियोगिनो भिन्नत्ववत्स्वस्मादपि स्व-

स्य भेदः स्यादित्यत आह *नापीति* कुत इत्यत आह *यत इति* धर्मिग्रहणं प्रतियोगिस्मरणं च भेदज्ञानसामग्री प्रतियोगिता च स्मर्यमाणता अनुभूयमानता च धर्मिता तेन स्मरणादिना नियमोपपत्तेर्नेतरेतराश्रयादिप्रसङ्ग इत्यर्थः । सोऽयं देवदत्त इत्यत्रायमंशस्य गृह्यमाणतया धर्मित्वात्स इत्यंशस्य स्मर्यमाणतया प्रतियोगित्वात्तत्रापि भेदः प्रकाशेतेत्यत आह *न चेति* किमत्र नियामकमित्यत आह * वास्तवेति * भेदसत्तासहितप्रतियोगिस्मरणादि भेदग्रहणकारणं तच्चैकत्वान्नात्र तथेति नियम इत्यर्थः ।

एवं काणादहार्दं विशदयित्वा सिद्धान्तमुपक्रमते ।

६१ भेदवादिमताभिप्रायखण्डनम् ।

मैवम् । तथाहि किमधिकरणप्रतीतिरधिकरणतया प्रतीतिः उत वस्तुगत्याऽधिकरणस्य स्वरूपेण विवक्षिता । आद्ये किमीयाऽधिकरणतया घटादेः प्रतीतिस्तस्य कारणं स्यात् । न तावदन्योन्याभावाधिकरणतया दण्डाद्यप्रतीतौ दण्डाधिकरणताया इव तदप्रतीतौ तदधिकरणतायाः प्रत्येतुं पूर्वमशक्यत्वात् विशिष्टप्रतीत्या विशेषणस्यावश्योल्लेख्यत्वात् विशिष्टस्य च विशेषणघटितमूर्तित्वात् । नापि यस्य कस्यचिदधिकरणतया प्रतीतिस्तत्कारणं यत्र भिन्नेऽभेदभ्रमस्तत्र धर्मिणः सत्त्वाद्याधारतया प्रतीतावपि तदनुत्पत्तेः ।

* नैवमिति * भेदप्रतीतिकारणतयेष्यमाणाधिकरणप्रतीतिरधिकरणत्वाकारमुल्लिखत्युत,वस्तुतोऽधिकरणस्वरूपमुल्लिखतीति विकल्पार्थः। प्रथमकल्पेपि घटादौ किमन्योन्याभावमपेक्ष्याधिकरणतया प्रतीतिर्भेदप्रतीतिकारणमुत यत्किञ्चिदपेक्षयेति विकल्पयन्नाह * आद्य इति * किमीया-किंसम्बन्धिनीतियावत्। अन्योन्याभावलक्षणभेदस्य प्रतीयमानत्वात्तदधिकरणत्वाच्च घटादेरन्योन्याभावापेक्षयाऽधिकरणत्वमित्याद्यमपवदति *नतावदिति* दण्डप्रतीतिव्यतिरेकेण देवदत्तस्य तदधिकरणत्वप्रतीतिव्यतिरेकवदन्योन्याभावाप्रतीतौ तद्विशिष्टाधिकरणत्वमपि घटादिनिष्ठं न निष्टङ्कनामियादित्यर्थः। अन्याप्रतीतौ किमन्यन्न प्रतीयतेतथाच किञ्चित्कदाचित्प्रतीतमिति सर्वज्ञं जगदापन्नमित्यत आह * विशिष्टेति * विशिष्टविशेषणयोरन्यत्वेपि विशेषणप्रतीतिजन्या विशिष्टप्रतीतिरित्येके। विशेषणविशेष्ययोरेकप्रतीतिविषयत्वमेवेत्येपरे। सर्वथा विशिष्टप्रतीत्या विशेषणप्रतीतिरपेक्षितेत्यर्थः। यथोपलक्षणं व्यावर्तकमपि अनियतप्राक्प्रतीतिकं व्यावर्त्यप्रतीतिव्यवहारजनकं तथा विशेषणमपि किन्न स्याद्व्यावर्त्तकत्वाऽविशेषादित्यत आह * विशिष्टेति * कदाचित्ज्ञाततामात्रेणाऽसतोऽप्युपलक्षणत्वाद्विशेषणस्य तु कार्यान्वयित्वेनैव व्यावर्त्तकत्वमन्यथा विशेषणोपलक्षणोपाधीनां भेदो न भवेदित्यर्थः। यत्किञ्चिदपेक्षयाऽधिकरणत्वप्रतीतिर्भेदप्रतीतिकारणमिति द्वितीय एव मपवदति * नापीति * कु-

तो न कारणमित्यत आह * यत्रेति * भिन्नयोर्देवद त्तयज्ञदत्तयोः स एवायमित्यभेदभ्रमो यदा जायते तदा देवदत्तस्य सत्वद्रव्यत्वाधिकरणतया प्रतीतेर्भेदग्रहस्यैव सम्भवात्तदनुत्पत्तिरभेदग्रहासम्भव इत्यर्थः।

न कारणमात्रात्कार्यनिष्पत्तिरपितु कारणपौष्कल्यादिह च नाधिकरणप्रतीतिरेव भेदप्रतीतिसामग्री प्रतियोगिस्मृत्यादिसाहिताया एव भेदप्रत्याकत्वादिह च तदभावाद्भेदाग्रह इति शङ्कते ।

६२ प्रतियोगिस्मृत्यादिसाहिताधिकरणप्रतीतेर्भेदग्रहहेतुत्वनिरासः ।

न तन्मात्रात्तदुत्पत्तिः अपि तु प्रतियोगिस्मृतिसहितात् सा च तदा नास्तीति तदनुत्पत्तिरिति चेन्न । प्रतियोगिस्मृतिरपि किं प्रतियोगितया स्मृतिः उत वस्तुगत्या प्रतियोगिनः स्वरूपेणेति विकल्प्यत्वात् । आद्ये किमन्योन्याभावप्रतियोगितया यस्य कस्यचित् प्रतियोगितया वा । नाद्यः अन्योन्याभावाप्रतीतौ तदनुपपत्तेः पूर्ववत् । नापि द्वितीयः तस्य वस्तुगत्या भिन्नस्याभिन्नतया भ्रमविषयीकृतस्य स्वदेशेतरदेशादावसत्त्वेन प्रतीयमानत्वे स्वाभावप्रतियोगितया प्रतीतावन्योन्याभावप्रतीत्यनुपपत्तेः ।

* न तदिति * प्रतियोगित्वाकारमुल्लिखन्ती प्रतियोगित्वस्मृतिर्भेदप्रतीतिहेतुरुत वस्तुतः प्रतियोगिनः सतः स्वरूपेण तथेति पूर्ववद्विकल्पयन्परिहरति

*नेति* प्रथमकल्पेऽपि किमन्योन्याभावप्रतियोगित्वप्रतीतिस्तत्प्रतीतिकारणं किंस्विद्यत्किञ्चिदपेक्षप्रतियोगित्वप्रतीतिरित्यपि विकल्पनीयमित्याह *आद्य इति* अन्योन्याभावाप्रतीतौ तद्विशिष्टाधिकरणत्वाप्रतीतिवद्विशेषणान्योन्याभावाप्रतीतौ तद्विशिष्टप्रतियोगित्वस्मृतिरनुपपन्नेति प्रथमं पराचष्टे *नाद्य इति* यत्किञ्चिदपेक्षप्रतियोगित्वस्मृतिः कारणमिति द्वितीयं दूषयति * नापीति * कुत इत्यत आह * वस्त्विति * देवदत्तयज्ञदत्तौ वस्तुगत्या भिन्नौ तथाप्यभिन्नतया भ्रमविषयौ भवतः प्रतियोगित्वस्मृतेश्च देशेतरदेशादावविद्यमानत्वेन स्वाभावप्रतियोगितया प्रतीतिरस्ति यत्किञ्चिदपेक्षयाऽऽश्रयत्वप्रतीतिरपि ततः कारणपौष्कल्यात् भेदप्रतीतिरेव स्यान्न चासौ जायत इत्यर्थः।

स्वदेशेतरदेशादौ विद्यमानाभावप्रतियोगित्वप्रतीतिरनुभूतित्वान्न स्मृतिः स्मृतिश्च भेदज्ञानकारणमतो नोक्तोदोष इति शङ्कते ।

६३ स्मृतित्वस्य भेदप्रतीतौ प्रयोजकत्वानिरासः ।

प्रतियोग्यनुभूतिः सा न स्मृतिरिति चेन्न। स्मृतित्वस्याप्रयोजकत्वात् । अन्यथाऽनुभूयमानयोरन्योन्याभावाप्रतीतिप्रसङ्गात्। अत्रान्तराले स्मृतिकल्पनया नान्योन्यात्मानाविमावित्यनुभवबाधितया प्रयोजकत्वेऽपि वा स्मृतित्वस्य योऽसौ तत्र नासीत् सोऽयमिति स्मर्यमाणाभावप्रतियोगिकत्वेऽपि वस्तुगत्या भिन्नस्याभि-

न्नतया भ्रमेणोल्लिख्यमानस्यान्योन्याभावप्रतीत्यनुदयात् । दोषाभावोऽपि हेतुः स भ्रमोदाहरणे नास्तीति चेन्न । पूर्वदृष्टे स्मृतिमतो वस्तुगत्याऽन्यस्यैवानन्तरदृष्टस्य पूर्वदृष्टात् भिन्नमभिन्नं वेत्यनिरूपितस्यापि सम्भवेन तत्रेतरेतराभावबुद्ध्यापत्तेः । बुध्यत एवेति चेन्न । पश्चात्तत्संशयदर्शनात् । विशेषधीरपि तत्र हेतुरिति चेन्न । विशेषत्वस्यान्योन्याभावानिरूपणं विना दुर्निरूपत्वात् । एतेन वस्तुगत्या प्रतियोगिनः स्वरूपेण स्मृतिः सहकारिणीत्येतदपि व्युदस्तम् । वस्तुगत्याऽधिकरणस्य स्वरूपेण प्रतीतिः सहकारिणीत्यपि, भिन्नस्याभिन्नतया वृक्षादेः प्रतीयमानस्योन्यान्याभाववत्तया ग्रहणप्रसङ्गात् ।

*प्रतीति*योगिप्रतियोगिप्रतीतौ स्मृतित्वाभावेन भेदज्ञानाभावाभावेन व्यतिरेकाभावात् स्मृतित्वमप्रयोजकमिति परिहरति * नेति * न केवलं व्यतिरेकाभावोऽन्वयोपि नास्तीति विपक्षबाधकव्याजेनाह *अन्यथेति* इमौ घटपटौ भिन्नावित्यत्रोभयोरपि गृह्यमाणत्वाद्भेदग्रहो न स्यादित्यर्थः। पुरोदेशेऽनुभूयमानान्योन्याभावप्रतीतावपि इतरान्योन्याभावप्रतीतिवदन्योन्याभावप्रतीत्योर्मध्ये प्रतियोगिस्मृतिः कल्प्यते भेदप्रतीतिसिद्धत्वादित्यत आह * अत्रेति * अन्तरा स्मृतित्वकल्पनया स्मृतित्वस्य प्रयोजकत्वं न कल्प्यमिति शेषः। इमौ नान्योन्यात्मानाविव्यननुभवादूबाधि-

ततयेति हेतूपन्यासः । बाधिताया अपि कल्पनाया बलात्स्मृतित्वस्य प्रयोजकत्वस्वीकारे दोषमाह*प्रयोजकत्वेपीति*योसौ गृहे नासीत् देवदत्तः सोऽयमिति इदृशप्रत्यभिज्ञाभ्रमस्थले स्मर्यमाणाभावप्रतियोगित्वेन स्मर्यमाणत्वं प्रतियोगिनोस्ति ततोधर्म्यनुभवः प्रतियोगिस्मृतिश्चेत्येतस्य भेदप्रतीतिप्रयोजकत्वे तत्र भेदप्रत्यय एव स्यान्न चोत्पद्यते ततोऽप्रयोजकमित्यर्थः। प्रतियोगिस्मृतिसहितधर्मिग्रहणं दोषाभावसहकृतं भेदप्रतीतिप्रयोजकन्न तन्मात्रमिति नोक्तदोष इतिशङ्कते *दोषेति * दोषाभावे सत्यपि भेदाग्रहान्न तत्प्रयोजकत्वमिति परिहरति * नेति * इदमाकूतं दोषाभावस्य किमिति सहकारित्वं कल्पनीयं । सति दोषे तददर्शनादिति चेन्न।तस्मिन्सत्यपि निद्रादोषेऽन्योन्याभावप्रतीतिदर्शनात्।प्रमात्वादितिचेन्न।तस्याद्याप्यसिद्धत्वादतो न दोषाभावस्य सहकारित्वं तथापि भवच्छ्रद्धानुरोधेनोदाहरणान्तरमभिधीयते यदा पूर्वदृष्टघटादि स्मरति पश्यति च घटान्तरं स्वरूपेण पूर्वदृष्टाच्च भेदमभेदं वा नावधारयति तत्राप्यन्योन्याभावग्रहप्रसङ्गो भ्रमाभावेन दोषाभावात्प्रतियोगिस्मरणादिभावाच्चेति। कारणसद्भावात्कार्यमपि विद्यते इति शङ्कते *बुध्यत इति* पूर्वदृष्टोऽयमन्योवेति पुनः संशयदर्शनान्नान्योभावो बुध्यत इति परिहरति * नेति * विशेषज्ञानेन दोषाभावेन प्रतियोगिस्मृत्या च सहिता धर्मिप्रतीतिरियमन्योन्याभावज्ञानकारणं तदभावादत्र नान्योन्याभावज्ञानं स्यादिति शङ्कते *विशेषेति*

अन्योन्याभावस्य भेदत्वाद्भेदज्ञाननिरूपणीयत्वाद्वि-शेषस्य नान्योन्याभावज्ञानात्पूर्वं विशेषसिद्धिरिति परिहरति * नेति * भ्रमस्थलेऽनध्यवसायस्थले चा-न्योन्याभावप्रतीतिप्रसङ्गाभिधानेन परिशिष्टकल्पा-न्तरमपि निरस्तमित्याह * एतेनेति * वस्तुगत्या प्र-तियोगिनः स्वरूपेण स्मृतिर्वस्तुगत्याऽधिकरणस्य स्वरू-पेण प्रतीतिश्च भेदकारणमिति द्वितीयकल्पोपि नि-रस्त इत्यर्थः। परामृष्टमेव स्वयं स्पष्टयति *भिन्नस्येति*

वैधर्म्यं भेद इति तृतीयं पक्षमाक्षिपति ।

६४ तृतीयकल्पनिरासः ।

नापि तृतीयः अभावस्य निर्धर्मकतापक्षे तस्य वि-श्वाभिन्नत्वप्रसक्तौ विश्वस्याप्यभावरूपत्वेन निर्धर्मकतया धर्मलक्षणान्योन्याभावविरहिण ऐकरूप्यापत्तेः अभावे धर्माभावात् । स्वरूपमेव भेद इति चेत् । योऽसौ भे-दस्तस्य स्वात्मा स किं कस्मादपि भेद उतनिष्प्रतियो-गिक एव न तावन्निष्प्रतियोगिक एव प्रमाणाभावेना-सत्त्वप्रसङ्गात् । योऽसौ भेदव्यवहारोऽस्ति स कस्मा-दपि न तु नीलव्यवहारवत् निष्प्रतियोगिकः स च नि-ष्प्रतियोगिको नोपपद्यते निष्प्रतियोगिकोऽपि वा यद्ययं सप्रतियोगिकव्यवहारं करोति प्रतियोगिनियमो न स्यादि-ति स्वस्मादपि भेदव्यवहारं कुर्य्यात् । स्वस्माद्भेदः कथं स-म्भवतीति चेत् तत् किं भिन्नाद्भेदः नन्वेवमनवस्था स्यात् ।

* नापीति * अभावो निर्द्धर्मकः सधर्मको वा निर्द्धर्मकत्वपक्षे घटे घटत्वस्य विशेषरूपवैधर्म्यस्य सत्ववदभावे धर्मान्तरलक्षणभेदाभावाद्विश्वाभिन्नत्वं स्यात्ततश्च विश्वस्याभावरूपतया निर्द्धर्मकस्य धर्मलक्षणभेदहीनतयैकरूपापत्तिरित्यर्थः । भावपदार्थानां वैधर्म्यं भेदो नाभावस्याभावे तु स्वरूपमेव भेदः अतो नाभावस्य विश्वात्मकत्वप्रसङ्ग इति शङ्कते *अभाव इति* प्रयोगिसापेक्षत्वात् भेदस्य निष्प्रतियोगिवस्तुस्वरूपत्वासम्भवं वक्तुं भेदः सप्रतियोगिको निष्प्रतियोगिको वेति विकल्पयति * योऽसाविति * अन्त्यं कल्पं बुद्धिस्थत्वादादौ दूषयति *न तावदिति* हेतुमाह * प्रमाणेति * असम्भवमुपपादयति* य इति * प्रमाणेन यदस्ति तत् मेयमिति वदता भेदे प्रमाणं वाच्यं न च निष्प्रतियोगिभेदमुल्लिखत् ज्ञानं जायते तथा यथा नीलज्ञानमित्यर्थः' । वस्तुतो निष्प्रतियोगिकोपि सत्प्रतियोगिभेदव्यवहारं करोतीत्यत आह * स चेति * ज्ञानव्यवहारयोरैकरूप्यादित्यर्थः । उक्तमर्थं व्यतिरेकदण्डेन द्रढयति * निष्प्रतीति * बह्वर्थसंनिधावेतद्व्यवहारे किं नियामकमिति वीक्षायां तन्मूलज्ञानं नियामकं वाच्यमिह तु प्रतियोगिनोऽभावादेव' तज्ज्ञानाभावोऽतः प्रतियोगिविशेषघटितभेदव्यवहारे नियामकाभावेन सर्वस्य प्रतियोगित्वापत्तौ तद्वृन्दान्तर्भूतस्वात्मनोपि प्रतियोगित्वप्रसङ्ग इत्यर्थः । धर्मित्वप्रतियोगित्वयोर्भेदैकार्थसमवायिनोरेकत्रासम्भवात्स्वनिष्ठभेदानुपपत्तिरेक-

त्वानेकत्वयोर्विरोधादिति शङ्कते * स्वस्मादिति * अभिन्ने भेदो न सम्भवतीत्युक्त्या भिन्ने भेद इत्युक्तं स्यात्तत् किमभ्युपेयत इति पृच्छति *तदिति* ओमिति चेत् तत्राह *नन्विति* ननु प्रसिद्धौ। स्वेन भिन्ने स्ववृत्तावात्माश्रयाद्भेदान्तरेण भिन्न इति वाच्यमेवमनवस्था स्यादित्याशयः।

सप्रतियोगिस्वरूपं भेद इति पक्षमाक्षिपति।

### ६५ सप्रतियोगिस्वरूपभेदखण्डनम्।

नापि प्रथमः वक्तव्यं हि तद्यस्मादसौ भेदः, न तावत् सर्वस्मात्, स्वात्मनोऽपि भेदप्रसङ्गात्। नापि घटादेः, घटादिना सह तस्यावध्यवधिमद्भावो योऽसौ स ह्यर्थान्तरं वा स्यात् स्वरूपमेव वा। आद्ये तस्यापि भेदावधित्वेन तत्राप्येवमनुयोगे यद्येतदेवोत्तरमनवस्था स्यात्। अथ तत्र स्वरूपमेव, तर्हि प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धन इति प्रथमत एव स्वरूपं वाच्यं तदपि न, तथा हि—यदि घटादिभिः सार्द्धमवध्यवधिमद्भावसम्बन्धोऽस्य स्वरूपं प्रतियोगिना सार्द्धं तद्यभावस्वरूपस्यास्य निषेध्यनिषेधभावलक्षणः सम्बन्धः स्वरूपं न स्यात्। स्वरूपस्यैकत्वात्। अनयोश्च सम्बन्धयोर्भिन्नत्वात्। न हि यदेव प्रतियोगिनः सकाशाद्भिन्नत्वं तदेव तन्निषेधत्वमिति सम्भवति ततो व्यतिरिक्तत्वस्यानिषेध्य-

साधारणत्वात्। निषेध्यनिषेधभावस्य नियतत्वस्वपेक्षत्वादिति। एवं कार्यकारणभावादौ स्वभावसम्बन्धान्तरेऽपि वाच्यमूहनीयश्चाऽन्यत्रापि स्वरूपभेदे दोष एषः ।

*नापीति* हेतुमाह *वक्तव्यामिति* प्रतियोग्यनिरूपणात सप्रतियोगिस्वरूपं भेद इत्यपि न सम्भवतीति भावः। किं सर्वमेव प्रतियोगि घटादि वेति विकल्प्य प्रथमं दूषयति * नेति * सर्वान्तर्भूततया भेदाश्रयस्यापि प्रतियोगित्वप्रसङ्गेनैकाभावप्रसङ्ग इति यावत्। द्वितीयमपवदति * नापीति * तदुपपादनाय सप्रतियोगित्वस्वरूपं दर्शयति *घटेति* घटादिरवधिस्तद्व्येतरदित्येवं रूपं इत्यर्थः। स्वरूपविशेषाभिधानेन किमनिष्टमुक्तं भवतीत्यतो विकल्पयति *सहीति* अवध्यवधिमद्भावोऽर्थान्तरमभावादिति प्रथमपक्षं दूषयति * आद्य इति * अभावाप्रतियोगी अवधिमानवध्यवधिमद्भावः एवं चावध्यादिभावस्याभावेन योसाववध्यादिभावः स तस्मादर्थान्तरं स्वरूपं वेति विकल्पे यद्यर्थान्तरमुच्यते तत्र तत्राप्येवमित्यनवस्थाप्रसक्तिरित्याशयः। द्वितीयमपवदत्यनूद्याथेत्यादिना। प्राथमिकावध्यवधिमद्भावस्य स्वरूपमेवास्त्वित्यत आह *तादिति *तदुपपादयति * तथाहीति * घटादिना सार्द्धमभावस्याप्यवध्यवधिमद्भावलक्षणसम्बन्धो योऽसौ सम्बन्धस्य द्विनिष्ठत्वाद्धर्मिप्रतियोगिस्वरूपं चेत्प्रतियोगिना घटादिना सहाभावस्य निषेध्यनिषेधलक्षणो यः सम्बन्धोऽसावभावस्य स्व-

रूपन्न स्यादभावस्यैकरूप्यादेकं द्विरूपमिति विरोधादित्यर्थः। एकस्योभयस्वरूपत्वासम्भवान्निषेध्यनिषेधभावसम्बन्धोऽभावरूपो न स्यादित्युक्तं तदेवोपपादयति * नहीति * प्रतियोगिनः सकाशाद्भिन्नत्वं प्रतियोगिनिषेधत्वं चैकन्न भवतीति विलक्षणाकारप्रतीतिविषयत्वमेव। कुत इत्यत आह * तत इति * घटादन्यः पट इत्यत्र निषेध्यनिषेधभावं विनापि व्यतिरिक्तत्वस्येष्टत्वादित्यर्थः। निषेध्यनिषेधभावस्तु नैवमित्याह * निषेध्येति * प्रतियोग्यभावमात्रापेक्षोऽसौ तेन न्यूनाधिकवृत्त्योरेकत्वासम्भव इत्यर्थः। एतदत्रोक्तं निषेध्यनिषेधभावस्य स्वरूपत्वासम्भवे निषेधात्मत्वमभावस्य न स्यादिति भावाद्वैतप्रसङ्ग इति। उक्तन्यायं प्रसारयति*एवमिति*मृद्घटादेः कार्यकारणभावसम्बन्धः स्वभावः चेद्विशेषणविशेष्यभावसम्बन्धः स्वभावो न स्यात्स्वरूपस्यैकरूप्यादनयोश्च सम्बन्धयोर्भिन्नत्वादकार्यकार्यकारणसाधारण्याद्विशेषणविशेष्यभावस्येत्यर्थः। अभावस्य स्वरूपभेद इवान्यत्रापि स्वरूपदपक्षे यो दोष उक्तः सोऽयं द्रष्टव्य इत्याह * ऊहनीय इति * भिन्नेऽभिन्नप्रमानुत्पत्तिप्रसङ्गाद्भ्रान्त्यापि स्वरूपावगाहनादित्यादिश्चाभिन्नेऽभावोनाभेदभ्रम इति च न वाच्यं धर्मिमात्रमभाव इति केषांचिद्भ्रमदर्शनादित्याशयः।

खण्डनान्तरावतरणाय विकल्पयति।

६६ धर्मान्तरभेदखण्डनान्तरम्।

किञ्च धर्मान्तरं भेद इति ब्रुवतः कोऽभिसन्धिः

किं घटत्वादय एव भेद उत भेदो नामान्य एवैकः कश्चिद्धर्मः । आद्ये घटत्वादीनां स प्रतियोगिकत्वप्रसङ्गः भेदस्य सप्रतियोगिकत्वात् । न च घटत्वादयस्तथा पटाद्यनपेक्षतयैव प्रतीतेः ।

*किं चेति* घटत्वादय एव भेद इति पक्षे भेदस्य सप्रतियोगितया भेदत्वेन निरूप्यमानघटत्वादीनामपि सप्रतियोगित्वप्रसङ्ग इत्याह *आद्य इति* सापेक्षतया पितृत्वादिवत् सन्तु घटत्वादयोपि सत्प्रतियोगिका इत्याशङ्क्य नैवमनुभवविरोधादित्याह *न चेति* देवदत्तस्य स्वरूपेण प्रतीतावनन्यापेक्षत्वेपि प्रतियोगिसापेक्षतया पितृत्वव्यवहारं जनयति यथा तद्वत् घटत्वादीनां स्वरूपप्रतीतावनन्यापेक्षत्वेपि व्यवहारजनकत्वं प्रतियोगिसापेक्षतयेति शङ्कते ।

६७ घटत्वादीनां पटाद्यपेक्षया भेदव्यवहारजनकत्वानिरसनम् ।

यदा पटाद्यपेक्षया प्रतीयन्ते तदा भेदव्यवहारं कुर्वन्तीति चेन्न । प्रतीतौ कस्य पटाद्यपेक्षेति वाच्यम् । किं घटत्वादेरुत धर्मस्य कस्य चित् । आद्ये पटापेक्षामन्तरेण घटत्वप्रतीत्यनुपपत्तिप्रसङ्गः । नहि यदन्तरेण यदुत्पद्यते तत्तत्कारणकं नाम ? वन्ह्यावित्वावान्तरजातिभेदे कारणभेदस्य चरितार्थयितुमशक्यत्वात् । साक्षात्कारित्वादिना सह परापरभावानुपपत्तेः । जात्योः परापरत्वसङ्करमिच्छतामपि मते पञ्चम्याऽवधिभावः प्रतिपाद्य

मानः केन सममन्वियात् । घटत्वस्यात्रधिघटितत्वे त-थैव परं प्रतीत्यापत्तेः । तद्धर्मस्य तथात्वमिति चेन्न । तथा हि न द्वितीयः स एव सापेक्षप्रतिपत्तिर्भेदो न तु घटत्वादिः । घटत्वादेश्च स भेदः स्यात् तद्धर्मकत्वा-त् । घटादेस्तु भेदपर्य्यनुयोगे तदभिधानमसङ्गतम् । कथ-ञ्च भिन्नैरनुगतव्यवहारः स्यात् । तथापि तथा सति वा किन्न तैरेव तदादिव्यवहारोऽपि स्यात् ।

* यदेति * विकल्पासहत्वान्नैवमिति परिहरति * नेति * पटाद्यपेक्षा घटप्रतीतिकारणमिति प्रथमकल्पे दोषमाह *आद्य इति * केवलव्यतिरेकावसेयत्वात्का-रणभावस्य व्यतिरेकश्च तन्मात्राभावे कार्याभावस्तस्य दुर्लभत्वात्पटाद्यनपेक्षा घटत्वप्रतीताविति हेतुमाह * नहीति*अरणिसूर्यकान्ततृणादीनामन्योन्यव्यभिचारि-णामपि सकाशात् वन्हिजन्माङ्गीकारे तत्तदवान्तरजा-तीयं प्रति एकैकस्य कारणत्ववत्प्रकृते केवलव्यति-रेकाभावान्न स्यादेव कारणता जातिभेदाभावादित्यर्थः। कुतो घटत्वप्रतीतेरवान्तरजातिभेदो नेष्यते तत्राह * साक्षादिति * साचात्कारित्वं प्रमात्वं च घटत्वप्रतीतौ तावज्जातिरस्ति यश्चापरो जातिभेदस्सप्रतियोगिकप्र-तीतित्वन्नाम कल्प्यते सा यदि साक्षात्वाद्यपेच्चया न परस्तदा स्मरणादौ सप्रतियोगिघटत्वप्रतीतिर्न स्यात्पर-जात्यभावेऽपरजातिसमवायायोगाद्यदि परस्तदा निष्प्र-तियोगिघटत्वप्रतीतौ साचात्त्वादि नस्याद परजातिमत

एवापरजातिमत्वनियमादतः परस्परव्यभिचारात्सा-त्तात्वादिना कल्प्यमानजातिविशेषस्य परापरभावो नोपपद्यते परापरभावशून्ययोश्च जात्योर्घटत्वप्रतीतौ समवाये वैशेषिकानिष्टजातिसङ्करप्रसङ्ग इत्यर्थः । येतु जातिसङ्करमिच्छन्ति तन्मते दोषमाह *जात्योरिति* पटात् घटो भिन्न इत्यत्र पञ्चम्या अवधिभावः प्रतिपाद्यते न स तावत्प्रतीतिमात्रेण संबध्यते विषयविशेषकृतत्वात्प्रतीतिगतविशेषस्यातः केन संबध्यत इति वाच्यं किं घटत्वादिनोत तद्धर्मेणेति यावत् । घटत्वादिसम्बन्ध्यवधिभाव इति प्रथमे दोषमाह *घट इति* कदाचिदपि घटत्वादेः प्रतियोग्यपेक्षाव्यतिरेकेण प्रतिपत्तिर्न स्यात्तस्यावधिघटितस्वभावादित्यर्थः । घटत्वादिनिष्ठधर्मस्यावधिघटितत्वमिति द्वितीयं शङ्कते *तदिति* तथा प्रतीत्यभावात्परिहरति *नेति* एतेन प्रसङ्गागतेन द्वितीयकल्प एव निरस्यत इत्याह *न द्वितीय इति कुत इत्यत आह * स इति * धर्मस्यावधिघटितत्वे स एव सापेक्षप्रतिपत्तिको भेदः स्यान्न त्वदिष्टो घटत्वादिभेदः सिध्येदित्यर्थः । स धर्मलक्षणो भेदो घटत्वादिधर्मत्वात् घटत्वादेरेव धर्मः स्यादित्याह* घटत्वेति * तथापि किमनिष्टमित्यत आह *घटादेरिति* घटादेः को भेद इति पर्यनुयोगे घटत्वादिधर्मस्य घटादिभेदतयाऽभिधानादसाङ्गत्यमतन्निष्ठत्वादित्यर्थः । तर्हि घटादेर्भेदवत्त्वसिद्धये घटत्वादय एव भेदा इष्यन्त इत्यत आह*कथमिति* घटत्वपटत्वादिभिरन्योन्यव्यभिचारात्सर्वत्रानुगतभेदव्यवहारो न सिध्येदित्यर्थः । अन-

नुगतानामेव स्वरूपवैचित्र्याच्छक्तिवैचित्र्याद्वाऽनुगतबुद्धिव्यवहारहेतुता स्यादित्याशङ्क्य व्यावृत्तत्वेऽप्यनुगतव्यवहारजनकत्वे तत्तत्पदार्थस्वभावभेदादेवानुगतबुद्ध्यादिसम्भवेन सामान्यापलापः स्यादित्यभिप्रेत्याह * तथापीति *

किं घटत्वादय एव भेद उत भेदो नामान्य एवैकः कश्चिद्धर्म इति विकल्प्य प्रथमे दोषमुक्त्वा द्वितीयमपवदति ।

६८ द्वितीयकल्पनिरासः ।

नापि द्वितीयः अनभ्युपगमात् । सप्तपदार्थानामनन्तर्भावप्रसङ्गात् स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेश्च । ईदृशाञ्चोपाध्यालीढवैचित्र्याणां जात्या समर्थने सर्वोपाध्युपधानानां जात्यैव समर्थनं स्यात् ।

*नापीति* अभावस्य सधर्मत्वकल्पोऽपि तन्त्रेण निराक्रियत इति द्रष्टव्यमभावगतधर्मस्य घटत्वाद्यतिरिक्तभेदस्य वाऽनभ्युपगमादित्यर्थः । अनभ्युपगमे युक्तिमाह * सप्तेति * तस्य द्रव्याद्यन्तर्भावे सामान्यादेरभिन्नत्वप्रसङ्गात्सामान्यान्तर्भावश्च न सम्भवति घटाद्यतिरेकाङ्गीकाराद्विशेषान्तर्भावे नित्यव्यतिरिक्तानामभिन्नत्वप्रसङ्गः समवायान्तर्भावे भावाभावयोरभेदप्रसङ्गोऽभावे समवायाभावादभावान्तर्भावोऽप्यत एव न इतरेतराभावभेदपक्षानङ्गीकारात्सप्तपदार्थानन्तर्भाव आपाद्यते स च वैशेषिकसमयप्रतिकूल इत्यर्थः । अपिच योऽसौ भेद इष्यते स स्वा-

त्मनि वर्त्तते न वा न चे द्भेदस्य कुतोपि भेदहीनतया विश्वात्मतायां सत्यां विश्वमपि निर्भेद्यभेदाभिन्नतया भेदहीनं स्याद्यदि वर्त्तते स्वयमेव चेदात्माश्रयो भेदान्तराभ्युपगमेऽन्योन्याश्रयः स्यादित्यभिप्रेत्याह * स्वेति * घटत्वादिव्यतिरिक्तो भेदाख्यो जातिविशेषः कश्चित् द्रव्यादिषु भविष्यति किमिति सप्तपदार्थ्यामनन्तर्भाव इत्यत आह *ईदृशां चेति* अन्यापेक्षप्रतिपत्तीनां द्रव्यादिभेदानां प्रतियोग्याद्युपाध्यधीनवैचित्र्याणां जातिरूपेण समर्थने सर्वेषां दण्डित्वपाचकत्वादीनामपि जात्यैव समर्थनं ते स्यादत औपाधिकपदार्थः कोपि न स्यादित्यर्थः। उपधानमुपबृंहणम्। उपाधिव्यावृत्तधर्माणामिति यावत्।

घटत्वादिजातिरेव भेद इति मतं निराकृतमपि दूषणान्तरं वक्तुं पुनः शङ्कते।

६९ घटत्वादिरेवभेदइत्यस्य खण्डनान्तरम्।

ननु घटत्वादय एव भेदा घटत्वादिज्ञानाविशेषेऽपि च प्रतियोगिज्ञानसहकारिवशाद्विचित्रव्यवहारोपपत्तिरिति चेन्न। व्यवहारसत्यत्वार्थं वास्तवानुगतविशेषस्यावश्यं स्वीकर्त्तव्यत्वे तथैव पर्य्यनुयोगानुवृत्तेः। अनन्तभेदपरम्पराभ्युपगमे च तत्क्रमज्ञेयतायां प्रतीत्यपर्य्यवसानात्। तद्युगपज्ज्ञेयतायामत्यन्तसदृशतया कस्यचिदन्यभेदस्यान्यदीयतयापि ग्रहणसम्भवादिना सर्वत्र

१ मनन्तत्वेति का० मु० पु० पा०।

प्रामाण्यानाश्वासप्रसङ्गात् । सर्वप्रतीतिनियमानङ्गीकारे चाप्रतीतसत्त्वे प्रमाणाभावात् । जिज्ञासायां तस्य तस्यापि ज्ञेयत्वे तद्बुद्धीनां भेदबुद्धित्वात्तदर्थेष्वनुगतत्वस्याप्यनुपपत्त्या तेष्वेकजात्याद्यभ्युपगमे तद्भेदेऽपि तदङ्गीकारे परस्पराश्रयाश्रयिभावप्रसङ्गात् । एवं सत्तादीनामानन्त्यस्वीकारे द्रष्टव्यम् ।

*नन्विति* घटत्वादीनामेव भेदत्वे घटत्वादिज्ञानं यदा यदोदेति तदातदा टत्वादिज्ञानाविशेषाद्भेदव्यवहारः स्यादित्यत आह *घटत्वेति* प्रतियोगिज्ञानसहितघटत्वादिज्ञानं भेदव्यवहारसामग्री न तन्निरपेक्षमिति नियम इत्यर्थः । परिहरति *नेति* घट इति यो व्यवहारो यश्च घटो भिन्नः पटादितिव्यवहारस्तयोरुभयोः सत्यत्वसिद्ध्यर्थं व्यवह्रियमाणपदार्थगतः कश्चिदतिशय एष्टव्योऽन्यथाऽन्यतरव्यवहारस्य मिथ्यात्वप्रसङ्गादेवञ्च स एवातिशयो भेदः स्यान्नतु घटत्वादिः स च कुतश्चिद्भिन्नो न वाऽऽद्येऽनवस्था द्वितीये सर्वाभेदापत्तिरिति पर्यनुयोगानिवृत्तिरित्याशयः । एवं भेदस्य भेदान्तराभिन्नत्वे तत्सत्तानवस्थामुक्त्वा तज्ज्ञप्त्यनवस्थामिदानीमाह *अनन्तेति* भेदाः क्रमेण ज्ञेया उत युगपदाद्ये भेदज्ञानप्रवाहाविच्छित्तिरतश्च स्वापमोक्षाद्यसम्भव इति भावः । द्वितीयम्प्रत्याह * तदिति * तेषां भेदानामत्यन्तसदृशतयाऽस्यायं भेद इति निर्णेतुमशक्यतयाऽन्यदीयस्यापि भेदस्यान्य-

दीयतया ग्रहणव्यवहारसम्भवेन सर्वभेदग्रहेष्वतस्मिंस्तद्बुद्धित्वसम्भावनया प्रामाण्यनिश्चयो न स्यादित्यर्थः । भेदाकारस्य धर्मिणः प्रतियोगिनश्चैक्यात्सदृशत्वामिति यावत् । न सर्वभेदस्य प्रतीतिनियमोऽङ्गीक्रियत एकभेदज्ञानमात्रेण घटादेर्भिन्नत्वप्रतीतिसम्भवादतो न क्रमज्ञेयत्वादिविकल्पावसर इत्यत आह * सर्वेति * यन्न कदाचिदुपलभ्यते तदसदनन्तो भेदस्तु न नियमेन नोपलभ्यते किन्तु यदा यद्विषया जिज्ञासा तदा स भेदः प्रतीयते नान्य इति नियमाङ्गीकारादित्याशङ्क्याह *जिज्ञासायामिति* जात्यादीत्यत्रादिशब्देनोपाधिरुच्यते तस्योपाधिरूपस्य जातिरूपस्य वाऽनुगतभेदव्यवहारनिर्वाहार्थतयेष्टस्य स्वाश्रयाद्भिन्नमेवेति भेदाश्रयरूपं वक्तव्यमेवं च स्वाश्रिते भेदे स्वयं वर्त्तत इति परस्पराश्रय इत्याशयः । उक्तमन्यत्राप्यतिदिशति*एवमिति*सत्तायाः समवायस्य चैकत्वे सत्ता सती तयोः समवाय इति व्यवहारो न स्यात्तद्भेदे युगपत्क्रमज्ञेयत्वादिविकल्पदूषणमित्यर्थः ।

अन्योन्याश्रयप्रसङ्गादपि धर्मभेदपक्षोऽनुपपन्न इत्याह ।

७० धर्मभेदेऽन्योन्याश्रयकथनम् ।

किञ्च घटत्वादेर्भेदत्वेऽवधिभूतपटत्वादिसापेक्षप्रतिपत्तिकतायां घटत्ववत् पटत्वस्याऽपि भेदरूपस्य भेदावधिप्रतिपत्तिसापेक्षतयाऽवधेश्च घटत्वादित्वेन घटत्वादिप्रतीत्यपेक्षायामन्योन्याश्रयत्वप्रसङ्गः । भेदस्वरूपत्वे घटत्वादेरवध्यपेक्षा न तु स्वरूपमात्रप्रतिपत्तौ

स्वरूपमात्रेण चावधित्वं तत्कृत एवमिति चेन्न। भेदरूपता यदि तस्य स्वात्मैव तदा स्वरूपमात्रप्रतिपत्तौ नावध्यपेक्षेति शून्यं वचनम्। अथ धर्मान्तरं तदा स एव भेदोऽस्तु कृतं तद्वत्तया घटत्वादेर्भेदरूपतेति प्रक्रियाकल्पनया। अस्तु स एव धर्मान्तरं भेद इति चेन्न। दूष्यत्वात्। अथाऽपि स्वरूपादित्रयमिदं भेद इति कथं सङ्गच्छते तद्व्यवहारस्यैकाकारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकारप्रतीतेरपि कथमेकनिमित्तत्वसिद्धौ प्रामाण्यं व्यभिचारात्। सामान्यविशेषैरेव परसामान्यबुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्तेः।

* किञ्चेति * घटत्वपटत्वयोरन्योन्यप्रतियोगिकत्वात्प्रतीतावितरेतराश्रय इति यावत्। अन्योन्याश्रयपरिहारं शङ्कते *भेदरूपेति* यदा घटत्वादिर्भेदरूपो भवति तदा पटाद्यपेक्षा यदा स्वरूपेणावधीरितभेदाकारं घटत्वादि प्रतीयते तदा न प्रतियोग्यपेक्षा प्रतियोगित्वं च स्वरूपमात्रेण प्रतिपन्नतया नतु भिन्नतया तत्कृत इतरेतराश्रय इत्यर्थः। भेदरूपत्वे घटत्वादेरवध्यपेक्षेति ब्रुवता भेदरूपत्वं घटत्वादेः स्वरूपं विवक्षित मुत तद्धर्म इति विकल्प्य प्रथमं प्रत्याह * नेति * शून्यवचनं निरर्थकवचनमित्यर्थः। यदि द्वितीय स्तत्राह * अथेति * तत् धर्मान्तर-

१ स्वावधिप्रतीत्यपेक्षेति का० मु० पु० पा०।

मेव भेदो भवतु प्राप्ताप्राप्तविवेकित्वाद्यर्थं घटत्वादेस्तद्वत्तया भेदत्वकल्पनमित्यर्थः । धर्मान्तरस्य भेदत्वमापादितमङ्गीकृत्य प्रत्यवतिष्ठते * अस्त्विति * सप्तपदार्थान्तर्भावानन्तर्भावेन परस्पराश्रयभावेन च खण्डनीयं तदित्याह * नेति * स्वरूपान्योन्याभाववैधर्म्याणामन्यतमद्यथासम्भवं भेदत्वमिति मतं दूषयति*अथेति*यद्वा घटत्वादौ तद्धर्मान्तरं भेदस्तद्धर्मान्तरेऽभावे च स्वरूपं घटादौ घटत्वादीतियथासम्भवमित्याशङ्क्याह *अथेति*स्वरूपादित्रितयेऽनुगतभेदबुद्धिव्यवहारनिदानैकाकारादर्शनान्न तत्त्रितयं भेद इत्यर्थः। कथं च न सङ्गच्छते व्यावृत्तत्रितयस्वरूपालम्बनत्वात्तद्बुद्ध्यादेरित्यत आह *तदिति* अनुगतव्यवहारस्य विभिन्ननिमित्तत्वाङ्गीकारे गवादेर्व्यवहारस्य तथा सम्भवाद्गोत्वादिजातिकल्पना निष्प्रमाणिका स्यादित्यर्थः । भङ्गान्तरं भणति * सामान्येति * खण्डादिविशेषैरेव गोत्वादिव्यवहारोपपत्तौ गोत्वाद्यकल्पनवद्गोत्वघटत्वादिभिरेव द्रव्यव्यवहारोपपत्तौ न द्रव्यत्वकल्पना तथा द्रव्यत्वगुणत्वकर्मत्वैरेव सद्व्यवहारोपपत्तौ सत्ताकल्पनं न स्यादित्यर्थः ।

योवा को वा भेदोऽङ्गीक्रियते तास्मिन् भेदान्तरमस्ति न वेति विकल्पयति ।

७१ भेदे भेदान्तरसत्त्वेऽसत्त्वे च दूषणम् ।

किञ्च भेदे भेदान्तरमस्ति न वा, आद्येऽनवस्था द्वितीये तदभाव एव स्यात् धर्मिण्येव तत्प्रवेशात् । भे-

दस्वभावत्वात् स्वात्मन्यपि स्वयमेव तद्व्यवहारमयं करोति सत्त्वेव सद्व्यवहारमिति चेन्न । यदि स्वस्मादभिन्नः स्वभेद इति च स्वस्मादित्यत्रंधेयावधिभावस्वरूपः स्वयं भेदोऽन्यस्माच्च स्वस्य तदाऽस्य भेदस्य स्वात्मप्रतियोगिकत्वेन स्वाश्रयत्वेन चाङ्गीकारे स्वस्मादपि स्वयं भिन्नः किं नाङ्गीक्रियते विरोधाभावात् । स्वीक्रियेताप्येवं यदि तथा प्रतीतिर्व्यवहारो वा स्यादिति चेन्न । अस्त्यपि शब्दाभासादेस्तथा प्रतीतिराभासशब्दव्यवहारश्च । सत्यौ प्रतीतिव्यवहारौ स्वीकारकारणं न च तौ स्वात्मन एव स्वस्माद्भेदविषयौ स्त इति चेन्न । स्वात्मा स्वस्यैवाधिकरणमवधिश्चेत्यपि तर्हि न सत्या प्रतीतिः सम्भवति न वा व्यवहारस्तत्कथमित्थमङ्गीकुरुषे ।

*किञ्चेति* प्रथममपवदति*आद्य इति*न तावद्भेद इत्येव बुद्धिरुदेति किन्त्वयमस्माद्भिन्न इति विशेषणाविष्यभावेन, विशिष्टबुद्धिर्दण्डादौ भेदग्रहणपूर्विका दृष्टा दूरस्थतरुगिर्यादेः स्वरूपेण दर्शने विशिष्टबुद्ध्यनुदयादतो विशिष्टप्रतिभासात्प्रागेव भेदान्तरङ्गाह्यं तदपि तथेत्यनवस्थेत्यर्थः।द्वितीयमपवदति *द्वितीयेति* तदभावो भेदाभावस्तस्य धर्मिणो भेदविकलतया तन्मात्रत्वादित्यर्थः । भेदः स्वसंसर्गादन्यत्र भेदव्यवहारं कुर्वन् स्वात्मन्यपि तद्व्यवहारं करोति इदमेव काणादाः स्व-

१ यदि स्वस्मादपि स्वयं भिन्नो न स भेद इति स्वस्मादिति का० मु० पु० पा० ।

परनिर्वाहकत्वं निगदन्तीति शङ्कते * भेदेति * भेदस्वभावत्वादिति वदतः कोऽभिसन्धिः किं भेदस्य भेदः स्वस्मादभिन्न[1] इति किं वा भेदान्तरमन्तरेण भिन्नत्वमिति[2], यद्यात्यस्तत्राह * नेति * किमुक्तं स्यादित्यत आह *स्वस्मादिति * पञ्चम्यन्तशब्दाभिधेयोवधिभावोऽवधित्वं यस्य तत् स्वरूपः स्वयमन्यस्माच्च धर्मिणः सकाशात्स्वस्य भेदः स्वयमिति पूर्वेण सम्बन्धः। अत्र दूषणमाह * तदिति * अस्य भेदस्य भेदाभिन्नस्य स्वात्मैव प्रतिगी चाऽश्रयश्चेत्यङ्गीकारे परस्मादिव स्वस्मादपि भेदस्वीकारे विरोधाभावात् स्वीकार्यः स इत्यर्थः । न विरोधाभावमात्रेण स्वीकारः किंत्वनन्यथासिद्धप्रतीतिव्यवहाराभ्यां तयोरत्रासत्वेन कल्पकाभावान्नैवमिति शङ्कते * स्वीति * प्रतीतिव्यवहारमात्रात् स्वीकार उत सत्याभ्यामिति विकल्प्य प्रथमं प्रत्याह * नेति * प्रतिवाद्युच्चरितात् स्वस्मात्स्वयं भिन्न इति शब्दाभासात्प्रतीत्याभासस्तद्व्यवहाराभासश्च विद्यत इत्यर्थः। आदिशब्देनानुप्रेक्षादिकारणान्तरग्रहः।द्वितीयं शङ्कते *सत्याविति*तवाप्येतत् तुल्यमिति परिहरति * नेति * स्वयमेव स्वस्याधिकरणमवधिश्चेति सत्ययोः प्रतीतिव्यवहारयोरसत्वान्न तथात्वं स्वीकुर्वित्यर्थः ।

भेदस्वभावत्वादिति स्वभेदः स्वस्मादभिन्न इति प्रथमकल्पे निरस्ते भेदान्तरमन्तरेण भिन्नत्वमिति द्वि-

१ दभेद इति पु० पा० ।
२ भेदत्वमिति पु० पा० ।

तीयमवलम्बते ।

७२ द्वितीयकल्पनिराकरणम् ।

ननु न वयं स्वात्मा स्वाधिकरणं स्वावधिर्वेत्यभ्युपगच्छामः किन्तु धर्मान्तरे तत्प्रतियोगिके तदाधारे वा स्वीकृते यौ बुद्धिव्यवहारावुपपद्येते तावनवस्थाभयाद्धर्मान्तरमन्तरेणैव स्वभावाद्भेदः करोतीति ब्रूम इति चेत् । तर्ह्यन्यत्र यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता स्यात् । यस्य च स्वभावस्य बलेनेदृशी सा जायते स दोषः स्यात् यथा सत्यरजते रजतप्रतीती रजतत्वादुत्पन्ना ऽन्यत्र विना रजतत्वं जायमाना भ्रान्ता सा भवति । यस्य च सामर्थ्यात् सा तादृशी जायते स दोष इत्युच्यते । तत्र रजतत्त्वं नास्ति अत्र धर्मिरूपोऽपि भेद एव सन्नवलम्बनमिति चेत् । मैवम् । भिन्नप्रतीतिर्विशिष्टविषया भेदतदाश्रयरूपोभयवस्तुविषयाऽन्यत्र यादृशी सत्याऽङ्गीकृता ततो मात्रयाऽप्यन्यूनार्थाया इह जायमानाया यदि द्वयं विषयं नाङ्गीकुरुषे तदा शक्रेणापि भ्रान्तत्वं दुर्वारम् । अथाङ्गीकुरुषे तदाऽनवस्थाप्रसङ्गः । अथ तदुभयविषयव्यतिरेकेणैव साऽत्र सत्याऽन्यत्र तर्हि इतोऽन्यादृशाविषया मिथ्या स्या दित्यलं पल्लवेन ।

*न वयमिति* तर्हि वस्तुशून्यत्वेन बाधितविषय-

स्वादसौ प्रतीतिर्भ्रान्तिः स्यादिति परिहरति * तर्ही- ति * भ्रान्तिः कारणदोषव्याप्ता दोषरहितकारणज- न्यत्वान्नेयं भ्रान्तिरित्यत आह * यस्येति * येन स्व- भावविशेषेणेदृशी प्रतीतिरुत्पद्यते स स्वभावविशेषो दोषः स्यादित्यर्थः । अन्यत्र निश्चितविषयाभावेप्य- न्यत्र जायमानप्रतीतिर्भ्रान्तेत्यत्र दृष्टान्तमाह * य- थेति * स्वभावविशेषासामर्थ्यात्तज्जनकत्वे तस्य दो- षत्वं स्यादित्यत्रापि दृष्टान्तमाह * यस्येति * दृष्टान्तं विघटयन्परः शङ्कते *तत्रेति* शुक्तौ रजतत्वं धर्मिस्वरू- पाभिन्नं भिन्नं वा नास्तीति तत्र तज्ज्ञानं भ्रान्तिरिह तु धर्मिस्वरूपस्य भेदस्य सत्वात्तदालम्बनज्ञानं कथं भ्रा- न्तिरित्यर्थः । घटात्पटो भिन्न इत्यत्र विशिष्टभेदबु- द्धिर्धर्मिभेदोभयगोचरा स्वीकृता तद्भेदो भिन्न इत्यपि बुद्धिरुभयगोचराङ्गीक्रियते नाङ्गीक्रियते वेति विकल्प्य प्रथमे भ्रान्तित्वं वज्रलेपायितमिति परिहरति * मैव- मिति* द्वितीयेपि प्रागुक्तानवस्थेत्याह *अथेति* उक्त- मर्थं विपर्ययबाधाभिधानेन द्रढयति * अथेति * प्रती- तेरैकरूप्ये सति विषयवैरूप्यमन्यतरमिथ्यात्वमानये- देवेत्यर्थः ।

एवं भेदस्य स्वनिर्वाहकत्वं खण्डयित्वा सत्तेवेत्यु- क्तमुदाहरणं दूषयति ।

७३ उदाहरणविघटनम् ।

यत्तु सत्तेवेत्युक्तं तत् कटकगत्रोदाहरणमनुहरति यतः सत्ताप्यमुना दूषणेनास्माभिः खण्डनीया ।

*यस्त्विति* कटकं राजधानी तत्र नानाजनसङ्कीर्णे वणिक्पथमध्ये नीयमानो दुष्टोगौरेकामिषलुब्धो यत्र धावँस्तत्र ताडितोऽन्यत्र प्रविशंस्तत्रापि ताड्यते तथेदमपीत्यर्थः।

यत्तूदयनेन बौद्धाधिकारे भेदसमर्थनं कृतं तदनुवदति दूषणाय।

७४ उदयनमतानुवादः।

यत्पुनरभिधीयते किमेतैर्भेदखण्डनवादिभिरभिहितं भवति किं भेदज्ञानमेव नास्ति, सदपि नित्यमनित्यं, अनित्यमपि वा निर्हेतुकं, सहेतुकमपि वा निर्विषयं, सविषयमपि वा बाध्यमानविषयम्। तत्र प्रथमः सर्वतोविरोधादनुत्तरः। द्वितीयः सुषुप्त्यवस्थानुरोधादुपेक्षणीयः। तृतीयोऽपि विरोधाद्धेयः। चतुर्थस्तु भेदोल्लेखादेव त्याज्यः। पञ्चमश्चिन्त्यते किमेतेष्वन्यतमो विषयः तदन्यो वा। द्वितीये किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्यते एवं हि चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः। अथान्यतमात्मा, तत्रापि यदि धर्मान्तरमेवेति तत्त्वं तदाऽनवस्थाभिया तदधिकः प्रवाहस्त्यज्यतां तस्य कुतस्त्यागः, नह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति किन्तु प्रवाहं परिहारयति गन्धे गन्धान्तरवत्। अथेतरेतराभावमेव भेदज्ञानमालम्बते तदाऽपि कात्माश्रयः तेन

हि भेदज्ञानमेव न स्यात्। अस्ति च तत्ततो हेत्वन्तरमाक्षिपेत् न तु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्तेत।

* यत्पुनरिति * नायं खण्डनन्यायो भेदापबाधनायालमित्यभिसन्धिः। तदेव प्रतिपादयितुं विकल्पयति * किमित्यादिना * एकैकपरित्यागेन कल्पान्तरस्वीकारे तत्र वक्ष्यमाणदूषणं द्रष्टव्यम्। विकल्पक्रमेण दूषयति * तत्रेति * तत्र लोकानुभवविरोधात्तदनङ्गीकुर्वतोऽप्रमितप्रतियोगिकनिषेधविरोधादङ्गीकारे सुतरां तद्विरोधात्प्रथमः स्वरूपमेव न लभते कुतस्तत्रोत्तराभिधानमित्यर्थः। सामग्र्यनिरूपणाद्भेदज्ञानं सदपि नित्यमित्यङ्गीकारे सर्वज्ञानोपरमरूपसुषुप्तिविरोधात् द्वितीयोऽपि हेय इत्याह *द्वितीय इति* कादाचित्कसतो निर्हेतुत्वे नियामकाभावात् स्यादेव वा नस्यादेव वेति तृतीयं दूषयति *तृतीय इति* निर्विषयत्वं प्रतीतिविरुद्धं इत्याह *चतुर्थ इति* बाध्यार्थत्वं विचारमन्तरेण दुरवधारणमिति तत् विचार्यमित्याह *पञ्चेति* विचारमेव दर्शयति *किमिति* भेदज्ञानस्य स्वरूपान्योन्याभाववैधर्म्येष्वन्यतमो विषय उत तेभ्योऽन्य इति विकल्पार्थः। द्वितीयमपवदति *द्वीति* प्रागुक्ताभिरनुपपत्तिभिःस्वरूपादिभेदविषयाभि स्त्रिविधएव भेदोबाध्यः प्रकारान्तरस्य तु व्याधिकरणत्वान्न ताभिर्बाधसम्भव इति भावः। विपर्यये बाधमभिधत्ते *एवमिति* स्वरूपादिभेदानां बाध्यत्वे ततोऽन्यभेदस्यापि बाध्यत्वस्वीकारे चोरापराधेन निरपराधमाण्डव्यमहामुनिनिग्रहः स्मर्यते।

"तस्करस्यापराधेन शूलमारोपितो यति"

रिति तत्साम्यं स्यादित्यर्थः । बाध्यभेदविषयस्य ज्ञानस्य स्वरूपादिभेदेषु मध्येऽन्यतमो विषय इति द्वितीयं शङ्कते * अथेति * व्युत्क्रमेण प्रागुक्तदोषानुद्धरति * तत्रापीति * तत्त्वमिति धर्मान्तरं भेद इति पक्षपरामर्षक इति यावत् । अत्र दूषणमाह * तदेति * तस्मिन्पक्षेऽनवस्थैव दोष उच्यते सा च द्वितीयतृतीयादिभेदप्रवाहस्वीकारं परिहारयति न पुराद्यमपि भेदं इत्यर्थः । कुत इत्यत आह * नहीति * अनवस्थायाः प्रतिभासमानाकारापन्हवे सामर्थ्याभावादिति यावत् । दृष्टान्तेनैतत्स्फुटयति * गन्धेति * यदङ्गीकारनिमित्ता साऽनवस्था तमेव द्वितीयादिभेदं स्वदोषत्वसिद्ध्यर्थं निवर्तयति द्वितीयादिगन्धवदित्यर्थः । अन्योन्याभावो भेदस्तद्विषयं च भेदज्ञानमिति पक्षान्तरमाह * अथेति * अन्योन्याभावं प्रत्यधिकरणतया प्रतियोगितया च ज्ञायमानमन्योन्याभावज्ञानस्य कारणं चेत्तर्ह्यन्योन्याभावज्ञानसिद्धौ तत्सिद्धिरित्यात्माश्रय उच्यते न सोपीत्याह *तत्रापीति* अन्योन्याभावविशेषिताधिकरणज्ञानस्य तद्धेतुत्वे स दोषः स्याद्धेत्वन्तराङ्गीकारे तु नात्माश्रयःतच्चावश्यवाच्यमन्यथा भेदज्ञानमेव न स्यादिति हेतुमाह *तेनेति* मम इष्टमेवेदमित्यत आह * अस्तीति * फलितमाह *तत इति* दृश्यमानकार्यानुसारेण कारणं कल्प्यं न तु कारणादृष्ट्या दृष्टकार्यस्वरूपमपलपनीयमित्यर्थः ।

औपनिषदानां मतमाशङ्कते ।

७५ वेदान्तिमतनिरसनम्।

अविद्यावशादिति चेत् किञ्चातः न ह्यविद्येत्येवात्माश्रयनिवृत्तिः तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः। अथात्माश्रयादिदोषोपहततया तन्न तस्यैव कारणं ततो यतः कुतश्चित्तस्य जन्म तच्च दुर्निरूपमतोऽविद्येत्युच्यते इति विचारार्थः? नास्ति तर्हि विवादः। न च तदपि दुर्निरूपं, प्रतियोगित्वेन प्रतीतावधिकरणस्वभावत्वेनाधिकरणप्रतीतिः अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात्।

* अविद्येति * दृश्यमानकार्यस्य कारणतया हेत्वन्तरं न कल्प्यमात्माश्रयत्वेपि तस्याविद्यावशादुपपत्तेरनुपपन्नविधानपटीयसीत्वात्तस्या इत्यर्थः। नाविद्याऽनुपपन्नं विधातुमुत्सहतेऽन्यथा मुक्तानपि बध्नीयादतो माविद्याङ्गीकारेण किञ्चित्प्रयोजनमिति परिहरति * किञ्चेति * दुर्घटत्वमविद्याया भूषणमिति स्वीकारादविद्यात्वमेवात्माश्रयादिदोषं परिहरतीत्यत आह * नहीति * कुत इत्यत आह * तथासतीति * अविद्यास्वीकार इत्यात्माश्रयपरिहारश्चेत् घटादीनामपि कुलालादिनिरपेणां स्वत एवोत्पत्तेर्मृदाद्युपादानं मुधा स्यादित्यर्थः। मायावादिनोऽभिसन्धिमुद्धाटयति * अथेति * प्राक्कालावच्छिन्नसत् कारणमुत्तरकालावच्छिन्न सत्कार्यं तवैकस्य न सम्भवति स्वासिद्धौ स्वसिद्धिरि-

त्यात्माश्रयप्रसङ्गादित्यर्थः। स्वव्यतिरेकिकारणादेव कस्मादपि कार्यं जायत इत्याह *तत इति* तर्ह्यात्माश्रयपरिहारेण सिद्धं भेदज्ञानमित्यत आह * तच्चेति * भिन्नत्वादिप्रकारैः सदादिप्रकारैश्च दुर्निरूपमित्यर्थः। तर्ह्यविद्याकार्यत्वपक्षक्षतिरित्यत आह * अत इति * न्यायविचारासहत्वस्याविद्यालक्षणत्वात्तदेवाविद्येत्यर्थः। अन्योन्याभावज्ञानस्य सहेतुकत्वे नास्ति विवादस्तदन्योन्याभावज्ञानं कार्यमेव स्वानुरूपं कारणं कल्पयतीति त्वया मया च स्वीकारादिति परिहरति * नास्तीति* तच्च दुर्निरूपमिति यदुक्तं तत्राह *न चेति* तदुपपादयति *प्रतीति*घटस्य प्रतियोगित्वप्रतीतिमपेक्ष्य पटस्य प्रतियोगित्वप्रतीतिरितरेतराभावज्ञानकारणं चेत्स्वांश्रयादिदोषः स्याद्यदा तु प्रतियोगित्वनिरपेक्षाधिकरणत्वप्रतीतिस्तन्निरपेक्षा च प्रतियोगिस्मृतिर्भेदज्ञानकारणमङ्गीक्रियते तदाऽऽत्माश्रयाद्यभावात्सुनिरूपणमेव कारणान्तरमित्यर्थः।

स्वरूपादिमध्ये भेदज्ञानं स्वरूपमवलम्बत इति मतं शङ्कते।

७७ स्वरूपस्य भेदज्ञानविषयत्वनिरासः।

अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वं, तथापि सह प्रयोग एवानुपपन्नः परिह्रीयतां भेदेन तु किमपराद्धम्। सोऽपि दृश्यते इति चेत् सत्यं, नैमित्तिकस्तु स्यात् न स्वरूपतः नहि घटमानय पटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते व्याख्यायान्तु मूढप्र-

बोधनार्थे घटः कुम्भ इति वत् सह प्रयोगेऽपि न दोषः।

* अथेति * तत्र मण्डनोदीरितं दोषं परिहरति * तथापीति * घटव्यतिरिक्तभेदानङ्गीकारे घटो भिन्न इति सह प्रयोगो न स्यात्पर्यायाणां हस्तकरादिशब्दानां सहप्रयोगानुपलम्भाद्व्यर्थत्वाच्चेति सहप्रयोग एवान्याय्यो न पुनर्भेद इत्यर्थः। प्रतीयते यत्तदभ्युपगम्यत इति नियमवशात्तत्परित्याग इति शङ्कते * सोपीति * घटो भिन्नः पटो भिन्न इति सह प्रयोगो दृश्यत इत्यर्थः। दर्शनस्य गत्यन्तरं दर्शयन्परिहरति * सत्यमिति * शुकः कीर इतिवत्संज्ञासंज्ञिसम्बन्धप्रतिपत्तिनिमित्तं पर्यायपदान्तरोपादानं इति नैमित्तिक इत्यर्थः। शुक्लो घट इति सहप्रयोगे भिन्नार्थत्वादिहापि भिन्नार्थत्वमुत पिकः कोकिल इत्यादिवदभिन्नार्थत्वमिति सन्देहे किमत्र विनिगमकमित्यत आह * नहीति * घटादिव्यतिरेकेण शौक्ल्यादिवद्भेददर्शनव्यवहाराभाव एव नियामक इत्यर्थः। पर्यायत्वेऽपि प्रसिद्धपदान्तरेण सहप्रयोगः सम्बन्धबोधनार्थमविरुद्धो व्याख्यातॄणामिति सदृष्टान्तमाह * व्याख्येति *

यद्यप्यनेकप्रकारेण वेदान्तिभिरुक्तो न्यायः सर्वथा भेदबाधक्षमो न भवति तथाप्यनेकभेदकल्पनायां गौरवादेको भेदशब्दार्थो वक्तव्यः कोऽसाविति पृच्छति।

७८ भेदशब्दार्थनिरूपणम्।

तथापि कः परमार्थः? यथायथं त्रयमपि, घटस्य हि घटाद्यात्मना प्रतीतिः अपटाद्यात्मना च प्रतीतिस्ततो

वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम् । तत्राभावस्य प्रथममात्रं, अभावान्तरधर्मान्तराभावात् । सामान्यादिषु त्रिषु द्वयं धर्मान्तराभावात् । द्रव्यादित्रिषु त्रयं त्रयस्यापि सम्भवात् । भवति हि पटोऽयं न घटः तन्तुमयश्चेति, गन्धोऽयं न रूपं सुरभिश्चेति, गतिरियं नोत्क्षेपणं तितिर्य्यक् चेति । लक्षणन्तु स्वरूपभेदस्य ताद्रूप्येणाप्रतीतौ प्रतीतिः, इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः, वैधर्म्यस्य तु विरोधः सचैकधर्म समावेश इत्येषा दिगिति ।

*तथाऽपीति क्वचित्त्रयं* क्वचित् द्वयं क्वचिदेकमिति यथायथं यथायोगं त्रयमपि तत्त्वमित्याह *यथेति* यथासम्भवत्वमेव त्रितयस्य घटादावनुभवेन दर्शयति *घटस्येति । घटाद्यात्मनेति स्वरूपभेदोऽपटाद्यात्मनेत्यन्योन्याभावभेदो वैशिष्ट्येतिवैधर्म्यभेद उक्तः । घटादीति मृत्कार्यत्वादिग्रहः । क्व पुनरेकमात्रमित्यत आह *तत्रेति* अभावस्य स्वरूपमात्रं भेदोऽन्योन्याभावगुणजात्याद्यभावादित्यर्थः। विभागान्तरमाह *सामान्येति* सामान्यविशेषसमवायेषु स्वरूपेतरेतराभावद्वयं भेदो गुणजात्यादिधर्माभावादितियावत् । द्रव्यगुणकर्मसु स्वरूपेतरेतराभाववैधर्म्यत्रितयमपि भेद इत्याह *द्रव्येति* सम्भवमेवाह *भवतीति* पट इति स्वरूपभेदः न घट इतीतरेतराभावस्तन्तुमयश्चेति वैधर्म्यम्। गुणेषूदाहरति *गन्ध इति* तत्रापि क्रमेण त्रितयं

द्रष्टव्यम्। कर्मण्युदाहरणमाह *गतिरिति* उत्क्षेपण-मिति नियतोर्ध्वदेशक्षेपणमुच्यते तिर्यगितिविष्वग्गमनमुच्यते। अथस्य लक्षणत इतरेतरवैलक्षण्यं कथयति *लक्षणमिति* ताद्रूप्येणात्मनाऽप्रतीतौ प्रतीतिः प्रतीतिरिति प्रतीतिविषयत्वं विवक्षितन्ताद्रूप्येणेति विशेषणं वैधर्म्येतरेतराभावव्यावृत्त्यर्थं तयोस्तादात्म्यरूपप्रतियोगिप्रतीतिसापेक्षत्वादितिद्रष्टव्यम्। प्रतियोग्यैक्याप्रतीतौ स्वरूपेण प्रतीतेः स्वरूपभेदलक्षणत्वात्स्वरूपाभेदग्रहेऽपि स्वभेदारोपो न स्यादित्युक्तं परिहृतं द्रष्टव्यम्। इतरेतराभावलक्षणमाह *इतरेति* प्रत्ययशब्देन प्रतीयत इति प्रत्येतव्यमुच्यते स्वप्रतियोगिसमानाधिकरणोऽभावोऽबाधितोऽन्योन्याभाव इत्यर्थः। नीलमुत्पलमिति विधिसामानाधिकरण्यव्यावृत्त्यर्थं निषेधग्रहणम्। संसर्गाभावव्यावृत्त्यर्थं स्वप्रतियोगिग्रहणम्। एकस्मिन्नारोपितभेदे सोऽयन्न भवतीति भ्रान्तिव्यावृत्त्यर्थमबाधितेति। वैधर्म्यं विरोधेन विरुद्धस्य विवक्षितत्वादित्यर्थः। असङ्करो भेद इति सामान्यलक्षणं द्रष्टव्यमित्याह * दिगिति *

यत्पुनरुक्तं भेदज्ञानस्य बाध्यविषयत्वं वदता कीदृशो भेदोऽभिमत इति यदुक्तं तदयुक्तं पराभिमतभेदानुवादेन तस्य बाध्यतामात्राभिधानादित्यभिप्रेत्य सिद्धान्तयति।

७९ उदयनमतखण्डनारम्भः।

अत्रोच्यते तथा हि यत्तावत् पृष्टं किमेतेष्वन्यतमात्माऽस्य विषयः तदन्यो वेति तन्निर्वचनवादिनि शोभते

नास्मासु, प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्भावानन्तर्भावाभ्यां वा सदसत्त्वाभ्यां वा अन्येनापि धर्मेण येन केनाचिन्निरुच्यमानोऽन्वयेन च व्यतिरेकेण वा बाध्यतामिति तेन सर्वेणानिर्वचनीय इति ब्रूमः। एतच्च न केवलं भेदस्यापि तर्हि जगत एव, अनिर्वचनीयत्वादश्चायं यथा तथोदितं प्राक्।

* अत्रोच्यत इति * कुतो न शोभत इत्यत आह * प्रतिभासेति * प्रतिभासमानत्वात्तुच्छविलक्षणोऽप्ययं भेदः स्वरूपान्योन्याभाववैधर्म्येष्वन्तर्भूतत्वानन्तर्भूतत्वाभ्यां सत्वासत्वाभ्यां वा अन्येनापि सावयवत्वादिरूपेण तथा येन येन कार्यत्वप्रमेयत्वादिना निरूप्यते तेन सर्वेणापि त्वन्वये कार्यत्वादिभावे व्यतिरेके कार्यत्वाद्यभावरूपे च बाधमेति न्यायासहिष्णुत्वात्तेन सर्वेणाप्यनिर्वचनीय इत्यर्थः। भेदधर्मिणः सत्यत्वात्तदाश्रितो भेदः किं न सत्यस्तत्राह * एतदिति * अपरोक्षतया भासमानस्य प्रपञ्चस्यानिर्वचनीयत्वं कथमित्यत आह * अनिर्वचनीयेति * बाध्यत्वान्न सदपि, नासद्भवितुमर्हति तथासति लौकिकपरीक्षकाणां प्रतिभासभेदव्यवहारविशेषव्याघातापत्तेरित्युक्तं सप्तशत्यामित्यर्थः।

उक्तं चोद्यान्तरमनुवदति।

८० चोद्यान्तरमनूद्यनिराकरणम्।

यदप्युक्तमथान्यतमत्वादि गन्धे गन्धान्तरत्वादित्यन्तम्।

---

१ असंलग्नमिव।

तदपि न साधु। यथा युक्त्यैकस्वीकारस्तथैव प्रवाहस्वीकारस्य दुर्वारत्वात् । तत्र यदि प्रवाहस्वीकारे तस्या असाधकत्वं स्वीक्रियते एकस्वीकारेऽपि स्यात् अविशिष्टलक्षणत्वात् । अत एव प्रतिभासमानत्वादेकस्वीकार इत्यप्ययुक्तम्। एकप्रतिभासिकाया युक्तेः सर्वसाधारण्यात्। नहि प्रत्यक्षादेव जायमानः प्रतिभासः प्रमाणं नानुमानादेरित्यत्र युक्तिरभ्युपगमो वा, नचानवस्थाप्रसञ्जिका युक्तिरनुमानादेरन्या नाम, तर्कस्यापि व्याप्तिमूलत्वं सर्वश्चानुमानच्छायामापद्य दुषणमपि प्रवर्तत इति भवतैव व्युत्पादनात् अतोऽनवस्थाप्रसञ्जिकाया युक्तेर्दोषो वा वक्तव्यः त्यक्तव्यो वा स्वपक्षः ।

* यदिति * दूषयति * तदिति * हेतुमाह * * यथेति * घटो भिन्न इति व्यवहारानुपपत्त्या यथा घटस्य भेदस्त्वयाऽङ्गीक्रियते तथा भेदो भिन्न इति व्यवहारानुपपत्त्या द्वितीयोपि स्वीकार्य इत्यर्थः । ननु भेदो भिन्न इति प्रत्ययः परेण बलादापाद्यते न प्रसिद्धो लौकिकानां घटो भिन्न इति प्रत्ययस्य लोकसिद्धत्वादेको भेदः स्वीक्रियत इत्यस्ति विशेष इत्यत आह *अत इति* परामृष्टहेतुं स्पष्टयति * एकेति * प्रतिभासमात्रेण स्वीकारे देहात्मभावस्वीकारप्रसङ्गादवश्यं वास्तवभेदवादिना युक्तिरनुसरणीया तस्या एकरूपत्वात्प्रवाहः स्वीकार्य इत्यर्थः । युक्तिसहकृतप्रत्य-

च्चादाद्यो भेदो भासते द्वितीयादिस्तु भेदप्रवाहो न तथेति विशेष इत्यत आह * नहीति * तर्कोपेतप्रत्यक्षजनितज्ञानमेव प्रमाणं तदनुगृहीतलिङ्गजन्यज्ञानं प्रमाणं नेत्यत्र न कश्चिन्न्यायः तत्स्वीकारोवा तथेत्यर्थः। अनुमानं च भेदो भेदवान् भिन्नइतिप्रतीयमानत्वात् घटवत् भेदो भिन्न इति प्रत्ययो विशेषणप्रतिभासपूर्वको विशिष्टप्रत्ययत्वाद्दण्डीति प्रत्ययवदित्यादिरूपं द्रष्टव्यम्। भेदप्रवाहस्यानुमानिकत्वमेव नास्ति तत्प्रतीतेर्यौक्तिकत्वादित्यत आह * नचेति * कथं प्रसङ्गकस्यानुमानत्वमित्यत आह * तर्कस्येति * यद्ययं भेदाधिकरणं न स्यात्तथा न प्रतीयेतेत्यस्य प्रसङ्गस्य प्रतीयते चायं तस्माद्भेदाधिकरणमित्यनुमाने पर्यवसायित्वमवश्यं वक्तव्यमित्यर्थः। व्याप्तिमूलत्वेपि सपक्षसत्वाद्यनपेक्षत्वान्नानुमानत्वमित्यत आह * सर्वमिति * अनुमानछायामापाद्यमानस्तमर्थं साधयति तच्छाया च व्याप्तिमूलत्वं तर्कस्यानुमानस्य च साधारण्यं तथा तर्के मूलशैथिल्यदोषस्यानुमानेऽसिद्धे च तुल्यत्वमिति भवत्स्वीकार इति यावत्। एवमाद्यभेदेन द्वितीयादिभेदस्य साम्यमुक्त्वा फलितमाह * अत इति *

अबाधितयुक्तिबलादेको भेदः स्वीक्रियते न प्रवाह इति शङ्कते।

८१ प्रवाहवदेकस्वीकारेऽपि दोषः।

प्रवाहस्वीकारवदेकस्वीकारे नानवस्थेति चेत् तत्किमनवस्थाभावविशिष्टायास्तस्याः युक्तेः साधकत्वं

मन्यसे एवं तर्हि द्वितीयमात्रस्वीकारे नानवस्थेति द्वितीयस्वीकारप्रसङ्गः। ओमिति चेत् परार्द्धपर्य्यन्तं प्रवाहस्वीकारं को वारयिता । नैतावन्मात्रेण तुष्यति भवान् परार्द्धादप्यधिकमेकादिकं किं नाभ्युपगम्यत इत्यपि भवता वक्तव्यमेव तथा च सैवानवस्थेति चेत् सत्यं तस्यास्तु भयात् कीदृशमभ्युपगम्यतामिति निपुणं मन्त्रयामहे । द्व्यादिकं परित्यज्यतामिति चेत् एकस्मिन्नाम कीदृशोऽनुग्रहः येनानवस्थाप्रवाहनिवेशाविशेषेऽपि द्व्यादिकमुपेक्षितमेकन्तु रक्षितम् । द्वितीयमादायानवस्थेति चेत् द्वितीयेऽपि यदि भवतोऽनुग्रहः स्यात् तृतीयमादायानवस्थेत्यभिधाय सोऽपि रक्षितः स्यात् तावेतौ भवतोरागद्वेषौ निःश्रेयसाय यतमानस्य मानसमास्कन्दमानौ न कल्याणोदर्कौ तर्कयामि । गन्धे गन्धान्तरप्रसाञ्जिका न च युक्तिरस्ति, तदस्तित्वे वा का नोहानिः तस्या अप्यस्माभिः खण्डनीयत्वात् ।

* प्रवाहेति * तर्ह्यनवस्थाविरहविशिष्टयुक्तोर्विशिष्टप्रतीतिः विशेषणप्रतीतिपूर्विकेत्यादिरूपाया आद्यभेदसाधकत्वमित्युक्तं स्यात्तत्किमङ्गीकरोषीति पृच्छति *तदिति* ओमिति चेत्तत्राह *एवमिति* परिगणितभेदस्वीकारे नानवस्थेति शङ्कते * ओमिति * परिहरति * परार्द्धेति *. परार्द्धं नाम ब्र-

ब्रण आयुष एको भागः तच्च काललवमारभ्य सू- क्ष्मदर्शिभिः परिगण्यत इति यावत् । परार्द्धपर्यन्त- भेदस्वीकारोऽतिप्रसङ्गादेवानुपपन्न इति पूर्ववादी श- ङ्कते * नैतावदिति * कुतो नैतावन्मात्रेण दोष इ- त्यत आह * परार्द्धादिति * एकां सङ्ख्याम्परार्द्धं प्राप्य पुनरपि एकं द्वयमित्यारभ्य परार्द्धपर्यन्तग- णनसम्भवात्तदपि स्वीकर्त्तव्यमिति वक्तव्यं भवतीति न्यूनत्वमित्यर्थः । उच्यते एवं तर्हि को दोष इत्यत आह *तथाचेति* गूढाभिसन्धिः सिद्धान्त्याह *सत्य- मिति* मन्त्रणे क्रियमाणे प्रथमभेदस्वीकरणमेव युक्तन्न पुनर्द्व्यादिस्वीकार इति पूर्ववादी शङ्कते * द्व्यादीति* प्रथमस्वीकारे द्वितीयस्वीकारे च गुणदोषसाम्ये प्रथम- स्वीकारे स्वपक्षश्रद्धैव कारणं तवेत्युपहसन्नाह *एकस्मि- न्निति* साम्यमसिद्धमनवस्थाभावाभावयोरेव विशेष- त्वादिति शङ्कते *द्वितीयमिति* अयमपि विशेषो द्वि- तीयादावपि तुल्य इत्याह *द्वितीयेपीति* एवं साम्ये सति प्रथमे रागो द्वितीये च द्वेषः स्फुरति तावेतौ रागद्वेषौ मोक्षार्थं शास्त्रं प्रवर्त्तयतां न युक्तौ रागद्वेष- योर्मोक्षपरिपन्थित्वादित्युपसंहरति *ताविति* कल्या- णं पुरुषार्थरूपतया रमणीयं कैवल्यं उदर्के उत्तरकाले ययोस्तथाभूतौ न तर्कयामीति न विचारयामीतिया- वत् । प्रवाहपरित्यागे यदुक्तं दृष्टान्तेन गन्धे गन्धा- न्तरवदिति तद्विघटयति *गन्धइति* (अयं गन्धो गन्ध- वदूवृत्तित्वरहितगन्धवन्मात्रवृत्त्यधिकरणं प्रमेयत्वात् घटवदित्यस्ति युक्तिरित्यत आह * तदिति *)

पुनश्चोद्यान्तरमनुवदति।

८२ चोद्यान्तरनिरासः।

यदप्यथेतरेत्यादि निरूपणादित्यन्तं तदप्ययुक्तम्। तथाहि—इतरेतराभावज्ञानं भेदव्यवहारहेतुं मन्यते यस्तस्य पक्षो नोपपन्न आत्माश्रयप्रसङ्गादित्येवं ब्रुवाणस्य न किञ्चिद्बाधकमुक्तं स्यात्प्रतियोगिरूपत्त्वेनेत्यादिसमाधानं च प्रागेव दूषितम्। अथ स्वरूपमेवेत्यादि न दोष इत्यन्तं यदुक्तं तदप्यस्मदनुक्तदोषदूषणमित्युपेक्षितम्। यदपि तथाऽपि क इत्यादि तिर्यक् चेत्यन्तं तदपि गर्तवर्तिगोधामांसविभजनन्यायमनुहरति पक्षत्रयस्याऽप्युक्तयुक्त्याऽऽच्छादितस्य दर्शयितुमशक्यत्वेन तद्विभागव्यवस्थितेरवसरनिरस्तत्त्वात्।

* यदिति * इतरेतराभावविशिष्टधर्म्यादिज्ञानस्येतरेतराभावज्ञानकारणत्वादात्माश्रयत्वमित्युक्तंदोषापरिहारादयुक्तमिति दूषयति * तदिति * प्रतियोगिज्ञानमन्तराऽधिकरणमितिकारणनिरूपणेन परिहार उक्तस्तत्राह * प्रतीति * यत्किञ्चित्प्रत्यधिकरणत्वं वक्तव्यमेवं चात्माश्रयत्वं रुद्रेणापि दुर्निवारमित्यर्थः। एवं वैधर्म्यान्योन्याभावभेदबाध्यत्वमुपपाद्य स्वरूपभेदस्यापि तदुपपादनाय तदुक्तमनुवदति। * अथेति * स्वरूपपक्षोक्तदोषो नोद्धृत इत्याह * तच्चेति * व्याख्यानमपि पर्यायशब्देन चेत्पटो-

भिन्न इति सामानाधिकरण्यं न स्यादपर्यायेण चेद्- धिकार्थत्वमित्यनेनापि दुष्टत्वादुपेक्षितमित्याशयः । पुनः परोक्तमनुभाषते * यदिति * सोपहासं दूषयति * तदिति * गर्त्तः श्वभ्रं तद्वार्त्तिगोधाया मांसविभजनं यथा न सम्भवत्यप्राप्तविषयत्वात्तद्वदिदमपीत्यर्थः । तत्र हेतुमाह * पञ्चत्रयेति *

परोक्तं लक्षणमनूद्य दूषयति ।

८३ परोक्तलक्षणखण्डनम् ।

यच्च स्वरूपभेदस्य लक्षणमुक्तं ताद्रूप्येणाप्रतीतौ प्रतीतिरिति तदप्यवद्यम् । यदेकमेव वस्तु भ्रान्त्या भिन्नमिति प्रतीयते तत्र ताद्रूप्येणैकस्यैकरूपतया प्रतीतिर्नास्ति अस्ति च प्रतीतिर्न च स्वरूपभेद इत्यतिव्याप्तिः । ताद्रूप्येणेत्यस्य धर्मान्तररूपभेदासङ्कीर्णोदाहरणार्थत्वात् प्रतीतिरभ्रान्ता विवक्षितेति चेत् स्वरूपप्रतीतेस्तत्राप्यभ्रान्तत्वात् । यच्च स्वरूपमात्रेण प्रतीयते वस्तु न तत्ताद्रूप्येणैकरूप्येण[1] नच नानात्मतया वस्तुगत्या चैकमेव तत् तत्रापि स्वरूपलक्षणो भेदः स्यात् ।

* यच्चेति * कुत इत्यत आह * यदेति * ताद्रुप्यमेकरूपत्वमुत एवं रूपत्व माद्ये एकस्तावच्चन्द्रः स यदा भ्रान्त्या द्वौ चन्द्रमसाविति प्रतीयते तदा तस्य चन्द्रस्यैकस्यैकत्वं ताद्रूप्यं तेन प्रतीतिर्नास्तीति

१ ताद्रूप्येणैकरूप्येणेति सो० पु० नास्ति ।

भिन्नतया प्रतीयमानत्वात्स्वरूपप्रतीतिर्नास्ति कल्पितभेदाधिष्ठानत्वेन भेदप्रतीतेश्च भ्रमत्वान्न स्वरूपभेदसिद्धिरित्यतिव्याप्तिरित्यर्थः। नास्त्यतिव्याप्तिस्तस्यापि स्वरूपत्वेन कुतश्चिद्भेदत्वादित्यत आह * तादृूप्येणेति * वैधर्म्यान्योन्याभावलक्षणभेदासङ्कीर्णतया स्वरूपभेदज्ञापनार्थं तादृूप्येणेति विशेषणमुपात्तमतश्च यत्किञ्चिदपेक्षया भेदत्वे व्यर्थविशेषणत्वमित्यतिव्याप्तिः स्यादेवेत्यर्थः। अतिव्याप्तिपरिहाराय विशेषणं शङ्कते *प्रतीतिरिति* तादृूप्येणाप्रतीतावभ्रान्ता प्रतीतिः स्वरूपभेदसिद्धिर्नेष्यते भ्रमाभावप्रसङ्गादतो नास्त्यतिव्याप्तिपरिहार इत्याह * नेति * उदासीनेपि वस्तुन्यतिव्याप्तिमाह * यच्चेति * यद्वस्तु प्रतीयते तस्मिन्प्रतीयमाने वस्तुनि तादृूप्यमेकरूपत्वन्न प्रतीयते न भेदोपि प्रतीयते वस्तुगत्या तत्र न विद्यते भेदोपित्वैक्यमेव तत्रापि स्वरूपभेदलक्षणं गतमित्यतिव्याप्तिरित्यर्थः।

अवधीरितभेदाभेदरूपं वस्तु प्रतीयमानमेव नास्ति विरुद्धयोरेकतररूपेण प्रतीतेरावश्यकत्वादतो नातिव्याप्तिरिति शङ्कते।

८४ विरुद्धयोरेकतररूपेण प्रतीत्यावश्यकत्वभङ्गः।

नास्त्येवेदृशमुदाहरणं तादृूप्यातादृूप्याभ्यामेकस्यावश्यं प्रतीतेरिति चेन्न। प्रतीतिकलहानवकाशात्। भवति हि यत्त्वया तत्र दृष्टं तत् किमेकमनेकं वेत्यनुयुक्तो नायं विशेषो मया शङ्कितो जिज्ञासितो वा स्वरूपमात्रन्तु

प्रतीत्याहमुदासीनोऽभूवमित्यभिधत्त इति।

* नास्तीति * प्रतीतिकलहे घटाद्यपलापोऽपि स्यात्तत्रापि संविदमन्तरेण तत्साधकाभावादिति परिहरति * नेति * एवंविधलौकिकानुभवाभावे कथमनुभवविरोध उद्भाव्यत इत्यत आह *भवति हीति* दूरे गिरिशिखरे पुरतस्तरुरमणीयो मया प्रतीतो न पुनस्तदेकत्वन्नानात्वमिति लौकिकः कथयति परेण पृष्ट इति यावत्। सन्देहाभाव एकतरविशेषनिर्णयादपि स्यादित्यत आह * जिज्ञासितोवेति * जिज्ञासाभावात्तन्निर्णयोत्पादशङ्कापि नास्तीत्यर्थः। स्वरूपमात्रं प्रतीत्य–ज्ञात्वेतियावत्।

तस्य लक्ष्यत्वान्नातिव्याप्तिरिति चोदयति।

८५ उदासीनत्वेन दृष्टस्वरूपस्य भेदत्त्वमेवेतिशङ्कानिरासः।

ननु तदपि स्वरूपं भेद एव कस्मादपि, तत् कथमुक्तदोषावतार इति। मैवम्। एवं हि ताद्रूप्येणाप्रतीताविति व्यर्थं स्यात्। प्रतीतिमात्रं लक्षणं वक्तव्यम्। यत्प्रमेयं तत् कस्मादप्यवश्यं भिन्नमिति एकस्यैव स्वस्माद्भेदप्रसङ्गनिराकरणार्थमपि ताद्रूप्येणाप्रतीतावित्युक्तं तच्च खण्डितमिति। ताद्रूप्यमन्यरूपत्वं विवक्षितमिति चेन्न। तदा हि तदाऽनुपस्थापितपरामर्शवत् अन्यत्त्वस्य स्वरूपभेदत्वे आत्माश्रयः सर्व्वस्वरूपाणां लक्ष्यत्वात् अन्योन्याभावत्वे चान्योन्याश्रयः वैधर्म्ये च चक्रकम्।

* नन्विति * कस्मादप्यन्यस्मात् घटादितस्तस्य भेदत्वान्नातिव्याप्तिरित्यर्थः । स्वरूपं सर्वं यतः कुतश्चिद्भेद एव निःस्वरूपं च व्यवच्छेद्यन्नास्त्यतो व्यर्थविशेषणत्वमिति परिहरति * नैवमिति * कुतो विशेषणवैयर्थ्यमित्यतः प्रतीतिमात्रलक्षणस्यैव समर्थत्वादित्याह * प्रतीति * यद्वा किं तर्हि लक्षणं वाच्यमित्याकाङ्क्षायामाह * प्रतीति * नैवमतिव्याप्तिः प्रमेयमात्रस्य कुतोपि भेदस्येष्टत्वाद्भेदवादिभिरिति हेतुमाह * यदिति * प्रतीतिमात्रं चेत्स्वरूपभेदलक्षणं तर्ह्येकस्यैव स्वस्मात् भेदः प्रसज्येत तन्निवारणे तु विशेषणं सार्थकमेकत्वेनाप्रतीतावित्येकत्वेनप्रतीतित्वादेव तन्निवारणमित्याशङ्क्याह * एकस्येति * एकत्वानेकत्वसन्देहाभावस्य- लस्य यच्च स्वरूपमात्रेणेत्यत्र दर्शितत्वादित्यर्थः । ताद्रूप्यमेकरूपत्वं न विवक्षितमपि त्वन्यरूपत्वं विवक्षितमतो नोक्तदोष इति शङ्कते * ताद्रूप्यमिति * ताद्रूप्यमित्यन्यरूपत्वस्य विवक्षितत्वे स्वरूपस्यैव लक्षिततया प्रस्तुतत्वेनान्यरूपस्याप्रस्तुतत्वादप्रकृतान्यपरामर्शित्वं तच्छब्दस्य स्यादिति परिहरति * नेति * तदा-तच्छब्देनेत्यर्थः । यथेदमेकं दूषणं तथा दोषान्तरमप्यस्तीत्याह * अन्यत्वेति * अन्यशब्देन स्वरूपभेदो विवक्षित उतान्योन्याभाव उत वैधर्म्यमाद्ये स्वरूपस्याद्याप्यनिरूपितत्वात्तत्सिद्धौ तत्सिद्धिरिति आत्माश्रयत्वमित्यर्थः । घटस्वरूपभेदो यदा लक्ष्यते तदाऽन्यस्वरूपभेदानामलक्ष्यत्वात्कथमात्माश्रय इत्यत आह *सर्वेति * अन्यथाऽव्यापकत्वप्रसङ्गादित्यर्थः । यदि मध्यमः तत्राह *

अन्योन्येति * स्वरूपभेदसिद्धौ अन्योन्याभावसिद्धिस्तत्सिद्धौ च तदप्रतीतिवैशिष्ट्येन स्वरूपभेदसिद्धिरितीतरेतराश्रय इत्यर्थः। अन्तिममपवदति * वैधर्म्यइति * स्वरूपभेदज्ञानं विनाऽन्योन्याभावज्ञानायोगात्तेन च विना विरोधासिद्धेस्तद्व्यतिरेकेण च वैधर्म्यासिद्धिस्तत्सिद्धौ स्वरूपभेदज्ञानसिद्धिरिति चक्रकमित्यर्थः॥

स्वरूपभेदलक्षणान्निरस्यान्योन्याभावलक्षणं निरसितुमुपक्रमते।

८६ अन्योन्याभावलक्षणखण्डनम्।

यदपीतरेतराभावस्य लक्षणमबाधितः समानाधिकरणोनिषेधप्रत्ययः। एतदप्यशोभनम्। समानाधिकरण इत्यादि भाषायाः कथं कथमपि तात्पर्यगवेषणेऽपि समानाधिकरणो यो निषेधस्तत्प्रत्ययविषयोऽन्योन्याभाव इति पर्य्यवसाने[1] समानाधिकरण इति किं तुल्याश्रय, उतैकाश्रय, उत तादात्म्यप्रतियोगिक, उताधिकरणभूतपदार्थवाचिशब्दविशेषणाविशेष्यभावव्यवस्थितपदाभिधेय उतान्यदेव।

*यदपीति* प्रतियोगिसामानाधिकरण्यं किं प्रत्ययस्य किं वा निषेधस्याऽऽद्ये प्रत्ययस्यात्माश्रयस्य घटाद्यधिकरणत्वायोग इत्यभिप्रेत्य दूषयति * एतदपीति * नोपसर्जनमुपसर्जनान्तरान्वयमर्हतीति न्यायेन यद्यपि साक्षात्सम्बन्धो नास्ति तथापि

१ तात्पर्य पर्य्यवसाने इति का० मु० पु० पा०।

विवक्षाबलान्न इत्याह * कथमपीति * द्वितीयापि-शब्देन नानुपपत्तिसमुच्चयः । सतीदं वक्तव्यमिति शेषः । किं वक्तव्यमित्यत आह * समानेति * स-मानशब्दस्य समानो देवदत्तो यज्ञदत्तेनेति सदृश-पर्यायतया प्रयोगदर्शनात्तुल्याश्रयत्वमिति प्रथमक-ल्पार्थः । तादात्म्यस्योभयनिष्ठत्वादन्योन्याभावोपि तन्निष्ठस्तत् प्रतियोगिक एवेति तृतीयार्थः। अधिकरण-पदार्थस्य वाचको घटोयमिति शब्दस्तेन सह विशे-षणविशेष्यभावव्यवस्थितः पटो न भवतीति पदं तदभिधेयत्वमधिकरणसाम्येनौपचारिकमिति चतु-र्थार्थः । न्यूनताप्रतिहाराय कल्पान्तरम् ।

सदृशाधिकरणत्वं सामानाधिकरण्यमिति प्रथमं दूषयति ।

८७ प्रथम द्वितीयविकल्पनिरासः ।

तत्र न प्रथमः तुहिनमयूखे प्रियामुखे च न दू-षणकणस्यापि सम्भव इति प्रत्ययस्यापि दर्शनात् । तत्र मुखचन्द्रयोरन्योन्याभावोऽस्तीति चेन्न। तस्य सत्त्वे-ऽप्युक्तप्रत्ययस्य तदविषयत्वात् । मास्तु तद्विषयो ल-क्षणं त्वस्यैत्ततच्च तदविषयत्वेऽप्यदुष्टमिति चेत् कीदृशं तर्हीदं लक्षणं न तावत्समानाधिकरणो यो निषेधस्तत्प्रत्ययो यस्तस्य यो विषयः सोऽन्योन्याभाव इति, नापि स ए-एवान्योन्याभाव इति, नापि यत्र समानाधिकरणो नि-

१ भेदप्रत्यय इति का० पु० पा० ।

षेधप्रत्ययस्तत्र योऽस्ति सोऽन्योन्याभाव इत्यस्तु तद्ध-र्मस्य सर्वस्याऽन्योन्याभावत्त्वापातात् समानाधिकरणवै-यर्थ्यप्रसङ्गाच्च । एतेनैकमुदाहरणमादाय द्वितीयोऽपि निरस्तः ।

* तत्रेति * कुत इत्यत आह * तुहिनेति * तुहिनमयूखे शीतरश्मौ चन्द्रे प्रियामुखे च तुल्ये दू-षणसंसर्गनिषेधस्तुल्याश्रयो भवतीत्यतिव्याप्तिरित्य-र्थः । लक्ष्यान्योन्याभावस्यापि तत्र विद्यमानत्वात् लक्ष्यमतीत्य वर्त्तनं तत्र नास्तीति शङ्कते * तत्रेति * सत्यमस्ति तथाप्युक्तप्रत्ययस्तद्विषयो न भवत्यन्य-विषय एवेति लक्ष्यमतीत्य वर्त्तनमस्त्येवेति परि-हरति * नेति * अयं प्रत्ययोऽन्योन्याभावविषयो माभूदित्युक्तमङ्गीकृत्यातिव्याप्तिपरिहारं शङ्कते * मा-स्त्विति * चन्द्रप्रियावदनयोर्दोषकणो नास्तीति प्रत्ययोऽन्योन्याभावविषयो माभून्नहि मयैतत्प्रत्यवि-षयत्वं लक्षणमिष्टं येनान्योन्याभावमतीत्य तत्प्रत्य-यविषयस्य वर्त्तनादतिव्याप्तिः स्यादित्यर्थः । किं त-र्हि लक्षणमित्यत आह * लक्षणमिति * अस्मदभि-मतनिषेधप्रत्ययाविषय इत्यर्थः । तर्ह्यतिव्याप्तिरित्यत आह * तच्चेति * तस्य चात्यन्ताभावविषयत्वेपि नलक्षणत्वक्षतिरत्यन्ताभावस्थलेऽन्योन्याभावस्यापि विद्यमानत्वेनातिव्याप्त्यभावादित्यर्थः । स्वाभिप्रेतम-पि लक्षणं न त्वन्मनसि विपरिवर्त्तमानमात्रेण विप्र-तिपन्नबोधकमिति शब्दैरभिधातव्यन्तच्च न शक्यमिति

परिहरति * कीदृशमिति * समानाधिकरणनिषेधप्रत्ययविषयत्वं लक्षणमुत स एव प्रत्यय उत स एव प्रत्ययो यत्र तदाश्रितधर्मत्वमिति विकल्पाभिप्रायः। प्रथमं दूषयति * नेति * तत्प्रत्ययो बाधस्तद्विषय इति तुहिनदीधितिप्रेयसीमुखयोर्दोषकणोपि नास्तीत्यत्र संसर्गाभावेऽतिव्याप्तिरित्यर्थः। असम्भवादतिव्याप्तेश्च न द्वितीय इत्याह * नापीति * तृतीयमपवदति। * नापीति * मुखे चन्द्रेचाश्रितस्य धर्ममात्रस्यैवान्योन्याभावप्रसङ्गेनातिव्याप्तेरिति हेतुमाह * तदिति * अस्मिन्पक्षे संसर्गाभावस्यापि तद्धर्मिणि वर्त्तमानत्वेन व्यवच्छेदानुपपत्तेर्व्यर्थविशेषणत्वं चेत्याह * समानेति * एकाश्रयत्वं सामानाधिकरण्यमिति द्वितीयं दूषयति * एतेनेति * प्रियामुखे दोषलेशो नास्तीति निषेधप्रत्यय एकाश्रयो भवति तेनाबाधितैकाश्रयनिषेधप्रत्ययोऽन्योन्याभाव इति लक्षणं संसर्गाभावेऽतिव्यापकमित्यर्थः।

तादात्म्यप्रतियोगिकत्त्वं सामानाधिकरण्यमिति तृतीयं दूषयति।

८८ तृतीयविकल्पनिरासः।

नापि तृतीयः तादात्म्यप्रतिसन्धानव्यतिरेकेण तत्प्रतियोगिकत्त्वस्य प्रत्येतुमशक्यतया तन्निर्वचनप्रसङ्गात् तच्चाशक्यं तथा हि तदेकत्वं वा भेदाभावो वा, स्वरूपन्त्वसम्भावितं तस्य भेदत्वोपगमात् तस्मिन् दृष्टेऽपि तन्न वेति तादात्म्यसंशयानवकाशापत्तेः। आद्ये-

ऽपि संख्याविशेषो वा धर्मान्तरं वा।

*नापीति* कुत इत्यत आह *तादात्म्येति* तादात्म्यप्रतियोगिकत्वं इति ब्रुवता तत्प्रतियोगितादात्म्यान्निर्वनीयमित्यर्थः। निरूप्यतां तर्हि तादात्म्यं को दोषस्तत्राह * तच्चेति * तदुपपादनार्थन्तादात्म्यमेकत्व मुत भेदाभाव इति विकल्पयति *तथाहीति* घटादीनां स्वरूपं तादात्म्यमिति कल्पनीयमित्याशङ्क्य तन्न भवति भेदत्वेन तस्य स्वीकारादित्याह *स्वरूपं त्विति* असम्भवे हेत्वन्तरमाह * तस्मिन्निति * दूरे गिरितर्वादौ दृष्टेऽपि तादात्म्यसंशयो जायते तन्न स्यात्तादात्म्यस्य स्वरूपत्वं इत्यर्थः। कल्पान्तरासम्भवेऽपि कृतविकल्पे किं दूषणमित्याशङ्क्य तद्दर्शनाय विकल्पयति * आद्येति *

प्रथमं दूषयति।

८९ तृतीयविकल्पस्य प्रथमद्वितीयविकल्पखण्डनम्।

नाद्यः गुणादौ तदभावप्रसङ्गात्। प्रथमे क्षणे कार्यद्रव्यस्यैकस्यापि स्वातादात्म्यप्रसङ्गात्। वैशेषिकमते व्युत्थाने चैकत्वे तदभावप्रसङ्गात्। उपाधिभिन्नावलम्बिच तादात्म्यं कथं स्वरूपमात्रावलम्बेनैकत्वीकर्त्तुं शक्यं विचित्रप्रतिपत्तिकत्वात्। नापि द्वितीयः तस्यापि धर्मान्तरापेक्षयानवस्थापातात् अनपेक्षायां स्वातादात्म्यप्रसङ्गात्। नापि द्वितीयः स हि भेदस्याभावो भवन्नप्यन्योन्याभावस्यैव स्यात् अन्योन्याभावस्य च तत्प्रतिक्षेपात्मक-

त्वात् तेनाप्यन्योन्याभावप्रतिक्षेपात्मना भवितव्यं परस्परप्रतिक्षेपात्मत्वान्निषेध्यनिषेधयोः तथा च सत्यन्योन्याभावप्रतीतिमन्तरेण तन्निरूपणमशक्यं निषेध्यप्रतीतिसापेक्षत्वान्निषेधबुद्धेरित्यन्योन्याश्रयः ।

* नेति * गुणादिषु विद्यमानान्योन्याभावप्रतियोगित्वेन गुणा निर्गुणा इति न्यायेन तद्भावप्रसङ्ग इत्यर्थः । द्रव्येपि कालभेदेनाव्यापकत्वमाह * प्रथम इति * गुणारम्भे द्रव्यस्य समवायिकारणत्वानियमात् क्षणमात्रमुत्पन्नं द्रव्यमगुणं तिष्ठतीति वैशेषिकाभ्युपगमस्तत्र एकत्वसङ्ख्योत्पत्तेः प्राक्कार्यं द्रव्यात्मकन्न स्यादित्यर्थः । असम्भवी चायं पक्ष इत्याह *उपाधीति* कस्य केनेति सप्रतियोगिकेन तादात्म्येन निष्प्रतियोगिकत्वं कथमभिन्नं स्याद्विरुद्धप्रतिपत्तिकयोरेकत्वानुपपत्तेरित्यर्थः । धर्मान्तरं तादात्म्यमिति पक्षं दूषयति *नापीति* तादात्म्यं यद्धर्मान्तरं तत्रापि धर्मान्तरमस्ति नवेति विकल्प्य प्रथमं दूषयति *तस्यापीति * द्वितीयमपवदति * अनपेक्षेति * भेदाभावस्तादात्म्यमिति द्वितीयं दूषयति * नापीति * अन्नेतरेतराश्रयत्वोपपादनायोपोद्घातं करोति * स हीति * स तादात्म्यरूपो भावस्तस्य भेदस्याभावो भवन्नन्योन्याभावस्यैवाभावाद्भेदान्योभावोऽस्तुतः किंमष्टमित्यत आह * अन्योन्येति * तत्प्रतिक्षेपात्मत्वात्तादात्म्याभावरूपत्वादन्योन्याभावस्य तेन तादात्म्येनापि स्वाभावप्रतिक्षेपात्मकेन भवितव्यमित्युक्तं

तत्र हेतुमाह * परस्परेति * एवं च तादात्म्यप्रती तत्प्रतिक्षेपान्योन्याभावप्रतीतिस्तत्प्रतीतौ च तादात्म्यप्रतीतिरिति वक्तव्यमितरेतराश्रयणमित्याह * तथाचेति *

अधिकरणभूतपदार्थवाचिशब्दविशेषणविशेष्यभावव्यवस्थितपदाभिधेयत्वं सामानाधिकरण्यमिति । चतुर्थं दूषयति ।

९० चतुर्थपञ्चमविकल्पनिरासः ।

नापि तुरीयः निर्घटं भूतलमित्यत्रापि प्रसङ्गात् । नापि पञ्चमः समानाधिकरण इति प्रतियोगिसमानाधिकरणो विवक्षितस्तादृशश्च निषेधोऽन्योन्याभावः तत्प्रत्ययश्च तल्लक्षणमित्यस्याप्ययुक्तत्वात् । भावसमानाधिकरणस्यान्योन्याभावस्य कुम्भः पटत्वं न भवतीत्यादेरव्यापनात् । तज्जातीये तथात्वञ्च यं विशेषमन्योन्याभावगतमादाय स्यात्तदेव लक्षणीभवनसमर्थमुपजीव्यमानमस्य लक्षणस्योपन्यासं प्रत्यादिशति । नच तदपि सम्भवत्यन्योन्याभावसंसर्गाभावभेदखण्डनप्रस्तावे निरस्तत्वात् । प्रकारान्तरस्य चाऽसम्भवात् ।

* नापीति * कुत इत्यत आह * निरिति * अधिकरणवाचकशब्देन विशेषणादिभावस्थितपदवाच्यं समानाधिकरणं तन्निष्ठनिषेधप्रत्ययविषयत्वमन्योन्याभावलक्षणमुक्तं स्यात्तथाच निर्घमित्यादिसं-

सर्गाभावेऽतिव्याप्तमित्यर्थः । अन्यदेवेत्युक्तं प्रतिक्षिपति * नापीति * दोषप्रकटनाय पञ्चमकल्पार्थं प्रकटयति *समानेति* अयुक्तत्वे हेतुमाह *भावेति* स्वप्रतियोगिसमानाधिकरणो निषेधोऽबाधितोऽन्योन्याभाव इति लक्षणमुक्तं स्यात्तत्र च प्रमाणं तत्प्रत्यय इति तथाच कुम्भः पटत्वन्न भवतीत्यत्र पटत्वप्रतियोगिको निषेधो घटो वर्त्तते पटत्वं प्रतियोगिनि पटे वर्त्तत इत्यव्यापकत्वात् । न च पटत्वं तदन्योन्याभावश्च पटे वर्त्तत इति स्वप्रतियोगिसमानाधिकरणमिति वाच्यम् । धर्मिप्रतियोगिभेदाद्भावभेदे कुम्भधर्मिकाभावाव्यापनात्प्रतियोगिभेदादेवाभावभेदो न धर्मिभेदादिति शपथसाध्यत्वात् धर्म्यादिभेदेऽप्यभावस्यैकत्वेऽभावचातुर्विध्यकल्पनाया अप्रामाणिकत्वप्रसङ्गादिति भावः । आदिपदेन सुखं घटो न भवतीत्यादिसङ्ग्रहः । घटः शौक्ल्यन्न भवतीत्यत्र स्वप्रतियोगिकसमानाधिकरणो निषेधो भवति तेन स्वप्रतियोगिकसमानाधिकरणनिषेधजातीय इति लक्षणं सर्वान्योन्याभावव्यापि भविष्यति इत्याह *तज्जातीयेति* अन्योन्याभावानुगतविशेषानङ्गीकारे तज्जातीयशब्दप्रत्ययानुपपत्तेर्यं विशेषमन्योन्याभावानुगतमादाय तज्जातीयत्वप्रतीतिस्तस्य तत्रैव वर्तनादेव लक्षणीभवनसम्भवादुपजीव्यत्वेनावश्यप्रथमप्रतीतिसाधनत्वेन लाघवात्तर्कसाहाय्याल्लक्षणत्वमस्ति व्यर्थस्तदुपजीवकलक्षणोपन्यास इत्याशयः । अस्तु तर्हि तदेव लक्षणमित्यत आह * तदेति * रूपान्तरेण किं

निर्दिश्य तच्चैनदभिधीयत इत्यादावन्योन्याभावमात्रगतविशेषणस्य निरस्तत्वादित्यर्थः । अन्योन्याभावसंसर्गाभावभेदः खण्डनोक्तप्रकारादन्य एवासौ विशेष इत्यत आह * प्रकारेति *

यदुक्तं घटः पटत्वं न भवतीत्यादावव्याप्तिरिति तदसद्यतोऽत्र तावत्पटत्वं प्रतियोगि पटः पटत्वन्न भवतीत्यत्रापि तदेव प्रतियोग्यैकेन घटे वर्त्तमानोयमेवैष एषोप्ययमेवेति परस्परैक्यान्नास्त्यव्याप्तिस्थलमित्याशङ्क्याह ।

९१ लक्षणेऽव्याप्तिकथनम् ।

नंच पटत्वं न भवतीत्ययमेत्राभावः घटः पटत्वं न भवतीत्येक एव एवं प्रतियोग्यैक्येन मयात्र तथाभ्युपगमादिति क्वचित् प्रतियोगिसमानदेशत्वादपि लक्षणासिद्धिरिति वाच्यम् । तथापि प्रतियोग्यैक्येन तदत्यन्ताभावस्यैक्यापत्तेः तादात्म्यवत्संयोगस्यापि द्विष्ठत्वाविशेषादतिव्याप्तेः कालभेदेन च प्रागभावादेरपि प्रतियोगिसमानाधिकरणतयाऽतिव्याप्तेः कालैक्येन च विशेषणे च तदन्योन्यव्यतिरेकाव्याप्तेरिति ।

*न चेति* कुत इत्यत आह * तथापीति * संसर्गाभावान्योन्याभावयोरपि तथा सति भेदो न स्यादित्यर्थः । घटः पटत्वन्न भवतीत्यत्र पटत्वं प्रतियोगि न भवति किन्तु तादात्म्यं तस्योभयाधिकरणत्वात्तन्निषेधस्यापि द्वयनिष्ठतया प्रतियोगिद्वयसामाना-

धिकरण्यमस्तीत्यत आह * तादात्म्यवदिति * योगः संयोगस्तस्य द्विष्ठत्वात्तदभावोपि द्विष्ठ एवेति प्रतियोगिसमानाधिकरणत्वं संसर्गाभावेप्यस्तीत्यतिव्याप्तिरित्यर्थः । प्रतियोगिसामानाधिकरण्यत्वमात्रं विवक्षितमुताभिन्नकालिकमिति विकल्प्य प्रथमेऽतिव्याप्तिमाह *कालेति * यस्यां मृदि घट उत्पत्तेः प्राङ्नासीत्स एव घटः कालान्तरे तत्रैवासीदिति प्रागभावस्यापि स्वप्रतियोगिघटसामानाधिकरण्यमस्ति तथा तत्रैव पुनर्न भविष्यतीति प्रध्वंसस्यापि तथात्वेनातिव्याप्तिरिर्थः । द्वितीयं प्रत्याह *कालेति* यदा प्रतियोग्यस्ति तदा तत्समानधिकृतो निषेधोन्योऽन्याभाव इत्युक्तं स्यात्तथाच तस्मिन्नेव लक्ष्ये ऽन्योन्याभावेऽव्याप्तिर्नहि घटयोस्तादात्म्ये सत्येव तदन्योन्याभाव इत्यर्थः ।

वैधर्म्यभेदलक्षणमनुभाषते दूषयितुम् ।

९२ वैधर्म्यभेदलक्षणखण्डनम् ।

यदपि धर्मान्तरस्य लक्षणमत्रादि वैधर्म्यस्य विरोधः स चैकधर्म्यसमावेश इति तदप्युद्भ्रान्तमनसो भाषितम् । तथा हि प्रमाणप्रेमययोर्भेदोस्ति न वा, नचेत्तदभिधानस्य पर्य्यायत्वप्रसङ्गः किंप्रमाणिका बुद्धिरित्युक्ते बुद्धिविषयेणोत्तरप्रसङ्गश्च । नापि प्रथमः स हि न तावत्स्वरूपलक्षणः एकस्याप्युभयभावदर्शनात् । अत एव ना-

---

१ तुलादिद्रव्यस्येत्यधिकं का० मु० पु० पा० ।

न्योन्याभावोऽपि धर्मान्तरन्तु तयोर्भेदः परिशिष्यते यतोऽन्येन रूपेण तत्प्रमाणमन्येन च तदेव प्रमेयमित्युच्यते तथा च सत्येकधर्म्यसमावेशो लक्षणमव्यापकम् । सोऽयं प्रमेया च तुलाप्रामाण्यवदिति पारमर्षमपि परामर्शव्यस्मादित्यास्तां विस्तरः ।

* यदपीति * तदपि भ्रान्तप्रलपितमित्युपेक्ष्यमिति दूषयति * तदिति * लक्षणाव्याप्तिप्रदर्शनार्थमुपोद्घातं करोति * तथाहीति * प्रमाणप्रमेयमिति पदयोरभिन्नार्थतया पर्यायत्वप्रसङ्गो हस्तकरादिशब्दानामभिन्नप्रवृत्तिनिमित्तानां तथात्वादिति द्वितीयं दूषयति * नचेदिति * प्रमाणप्रमेययोरैक्यवादिनां तदभिधानपर्यायत्वमपि नानिष्टमित्यत आह * किमिति * बुद्धौ किं प्रमाणं घटे वा किं प्रमाणमिति प्रमाणप्रश्नेषु बुद्धौ बुद्धिः प्रमाणं घटे घटः प्रमाणमित्युत्तरं दातव्यं स्यात्तयोरभेदे मेयस्यैव मानत्वादित्यर्थः । प्रमाणप्रमेययोर्भेदः स किं स्वरूपलक्षण उतान्योन्याभाव उत वैधर्म्यमिति विकल्प्य प्रथमं पराचष्टे * सहीति * कुत इत्यत आह * एकस्येति * एकस्यैव वस्तुनस्तुलादिलक्षणस्य प्रमाणप्रमेयभावदर्शनादित्यर्थः । प्रमाणप्रमेययोरन्योन्याभावो न सम्भवति इत्याह *अत इति* तस्मात् तृतीयः कल्पः परिशिष्यत इत्याह * धर्मेति * अत्र हेतुर्यत इति अन्येन प्रमाकरणत्वरूपेण प्रमाणमन्येन प्रमाविषयत्वरूपेण प्रमेयमित्युच्यते यत स्ततोस्वरूपभेदमात्रो-

पगमाद्वैधर्म्यभेदः परिशेष इत्यर्थः । अस्तु तर्हि स एव पक्षः को दोषस्तत्राह * तथाचेति एकस्यैव प्रमाणत्वप्रमेयत्वोपगमात्तत्रैवैकधर्म्यसमावेशो नाम लक्षणमव्यापकमित्याशयः । एकधर्म्यसमावेशो वैधर्म्यमिति ब्रुवन्नुदयनो न न्यायशास्त्रं श्रुतवान् श्रुतमपि विस्मृतवानित्युपहसन्नुपसंहरति * सोयमिति * सूत्रं तु प्रागेव विवृतम् । प्रमाणत्वप्रमेयत्वयोः प्रमाप्रमेयभेदकयोरेकस्मिन् समावेशः सूत्रकारेण दर्शितो विस्मृत इत्यर्थः ।

अपरोक्षभेदप्रतिपत्तेः प्रातिस्विकेन्द्रियसंनिकर्षानुविधायित्वात्तज्जन्यत्वं वक्तव्यं घटप्रतीतिवदिति चोदयति ।

९३

ननु भेदप्रतिपत्तेस्तावत्प्रत्यक्षफलस्यार्थेन्द्रियसान्निकर्षः कारणमसाधारणं वक्तव्यं तत्र य एवेन्द्रियसान्निकर्षस्य भेदप्रतिपत्तिहेतोर्द्वितीयः सम्बन्धः स एव भेदोऽस्तु । न । उक्तबाधकैर्बाधितायाः प्रतीतेरर्थसन्निकर्षकारणत्वाभावादिति ।

* नन्विति * तथापि किं भेदलक्षणमित्यत आह * तवेति * इन्द्रियातिरिक्तो भेदप्रमाजनकत्वसन्निकर्षाधिकरणजातीयो भेद इति लक्षणं जातीयग्रहणं परोक्षभेदावरोधायेत्यर्थः । प्रागुक्तान्योन्याश्रयादिबाधकैर्बाधिताया भेदप्रतीतेर्भ्रान्तेरिन्द्रियस-

न्निकर्षजत्वमेव नास्ति तदनुविधानं त्वधिष्ठानग्रहण-कारणतयाऽन्यथासिद्धं रजतादिप्रतीतावितेति परिह-रति * नेति *

इति भेदखण्डनम् ।

---

कारणत्वानिरुक्तेश्च सन्निकर्षकारणत्वं भेदप्र-तिपत्तेर्दुरभिधानमिति मन्वानः कारणत्वखण्डनं प्रक्रमते ।

९४ कारणत्वखण्डनारम्भः ।

किं पुनस्तत्कारणत्त्वम् । पूर्वभावित्वमिति चेन्न । चिरापध्वस्तानामपि कारणत्वप्रसङ्गात् । अव्यवहित पूर्वभावित्त्वमिति चेन्न। व्यापारस्यैव कारणत्त्वप्रसङ्गात्। व्यापारेण न व्यवधानमिति चेन्न । कारणकारणस्यापि कारणत्वप्रसङ्गात् । कारणस्यातद्व्यापारत्वात् नैवमिति चेन्न । विनाविशेषोक्तिं दुर्विवेकत्वात्।यद्विना यद्यन्न ज-नयति तत् तस्यावान्तरव्यापार इति चेन्न । सहकारि-णामपि तथात्त्वप्रसङ्गात् । तज्जन्यमिति चेन्न । तथापि कारणत्वाव्यवस्थितौ विशेषोक्तेरतिप्रसक्तेः कथमपि विशेषोक्तौ गगनादेः सर्वत्र कार्ये हेतुत्वप्रसङ्गात् ।

* किमिति * पूर्वभावित्वमात्रं कारणत्वमुता-व्यवहितत्वविशिष्टमिति विकल्पाभिप्रायः । पूर्वकल्पं शङ्कते *पूर्वेति* भावित्वं कारणत्वमित्युक्ते कार्येऽति-

व्याप्तिस्तत्परिहाराय पूर्वेत्युक्तम् । तावत्युक्ते पूर्वमसतोऽपि कारणत्वं स्यात्तद्वारयति * भावित्वामिति * अतिव्यापकत्वान्नेदं लक्षणमित्याह * नेति * चिरमनन्वयेन निर्लेपमेव प्रध्वस्तानां जलबुद्बुदादीनामिदानीन्तनघटकारणत्वप्रसङ्गः । चिरप्रध्वस्तयागादेः कारणत्वमिति तद्व्यावृत्तये विशेषणमनन्वयेनेति । अन्वयो व्यापारः । द्वितीयं शङ्कते * अव्यवहितेति * यागादेर्व्यापारव्यवधानात् कारणत्वन्न स्यात् व्यापारस्य च कार्यम्प्रत्यव्यवधानात्कारणत्वं स्यादित्यव्याप्त्यतिव्याप्तिभ्यां दूषयति * नेति * स्वाङ्गमव्यवधायकमितिन्यायेन व्यापारवतः कारणत्वं स्यादिति शङ्कते *व्यापारेणेति *तर्हि कुलालादेरपि जलाहरणादिकार्यं प्रति कारणत्वं स्यात् घटादेस्तद्व्यापारत्वेनाव्यवधानादिति दूषयति * नेति * जलाहरणादिकारणस्य घटादेः कुलालादेर्व्यापारत्वाभावात्तेन व्यवहितकुलालादेर्न कारणत्वमिति शङ्कते *कारणस्येति* तज्जन्यः कारणमिति लक्षणे सम्भवति व्यापारत्वाभाव एव वक्तुमशक्य इत्याह *नेति* स्पन्दः प्रयत्नो वा संयोगादिर्वा व्यापारो न द्रव्यमिति विवेक्तुमशक्यमित्यर्थः । विशेषोक्तिं शङ्कते * यदिति * यदुद्यमनादि यत् कुठारादि विना छिदादिकार्यं न जनयति तदुद्यमनादि तत्र छिदादौ कुठारादेरवान्तरव्यापारः घटादिस्तु कुलालानधिष्ठितोऽपि यज्ञदत्ताधिष्ठितः सलिलानयनं करोति तेन न तद्व्यापारत्वमित्यर्थः । दण्डादयोऽपि विना मृदं न घटं

१ इदं मूलेऽपेक्षितम् ।

जनयन्तीति तेषामप्यवान्तरव्यापारत्वप्रसङ्ग इति दूषयति *नेति* शङ्कते *तज्जन्यमिति* यद्विना यद्यन्न जनयति तज्जन्यं तत्रावान्तरव्यापारः दण्डादयः पुनर्न मृज्जन्या इति तद्व्युदासः। अजन्यस्यापि समवायस्य श्रोत्रव्यापारत्वदर्शनादनुचितिस्तामङ्गीकृत्यापि दूषयति *तथापीति* येन विना यद्वस्तु यन्न जनयति तत्तज्जन्यं तत्र कार्ये तदवान्तरव्यापार इति विशेषोक्तिरशक्या कारणत्वानिश्चितौ तज्जन्यत्वविशेषणासिद्धेरित्यर्थः। तर्हि तज्जन्यपदस्थाने तत्समवेतत्वपदं निदधे इत्याशङ्काङ्गीकरोति *कथमपीति* भवतु वा व्यापारस्य कारणत्वानिश्चितौ तज्जन्याविशेषोक्तिस्तेन च व्यवधानं माभूत्तथाप्यव्यवहितपूर्वभावित्वं कारणत्वलक्षणं दुष्टं गगनादावतिव्यापकत्वादित्यर्थः।

उक्तप्रसङ्गपरिहारं शङ्कते।

९५ गगनेऽतिव्याप्तिपरिहारशङ्कानिराकरणम्।

अनन्यथासिद्धपूर्वभावित्वमिति चेन्न। वक्तव्यं हि कस्मादन्येन प्रकारेण विना, का च सिद्धिरिति, यदि हि कार्यादन्येन प्रकारेण न निष्पत्ति स्तदाऽसिद्धिः नहि कार्येण कारणस्योत्पादनं नापि कार्यादन्येन प्रकारेण न ज्ञप्तिः प्रत्यक्षादेरपि कारणत्वज्ञप्तेः नखलु सर्वा कार्यलिङ्गजा कारणस्य ज्ञप्तिः। नापि कारणत्वात् व्यतिरिक्तेन प्रकारेण न निष्पत्तिर्ज्ञप्तिर्वा ज्ञप्ता-

२ कारणं जन्यमिति पु० पा०।

वात्माश्रयात्। प्रकारान्तरवत्तया[३]पि च तदुपगमात्।

*अनन्यथेति* गगनादेर्व्यापकतया नित्यस्याऽन्यथासिद्धं पूर्वभावित्वमतो न सर्वकार्यहेतुत्वप्रसङ्गः कारणं त्वनन्यथासिद्धपूर्वभावि तेन नातिव्याप्तिर्नच प्रसङ्गबाध इत्याकूतम्। अन्यथेत्यन्येन प्रकारेण अनन्यथेति च तेन विनेत्युक्तं भवति तथा च किमन्यत्वप्रतियोगि का च सिद्धिरुत्पत्तिर्ज्ञप्तिर्वेति वक्तव्यमित्याह * नेति * अन्यत्वेनापेक्ष्यमाणं प्रतियोगि कार्यमुच्यते सिद्धिश्चोत्पत्तिस्ततश्च सिद्धमित्यनेन सम्बन्ध इति शङ्कते * यद्येति * अनन्यथासिद्धमिति कार्यप्रकारादन्येन प्रकारेण न निष्पन्नमित्युक्तं भवति तत्रार्थात्कार्येण जन्यत्वमेवाभिहितं भवति तेनासम्भवत्वं लक्षणस्येति दूषयति *तदेति* तदुपपादयति * नहीति * कार्यस्य प्रागसत्वेन न कारणनिष्पादकत्वसम्भव इति भावः। तर्हि अन्यत्वप्रतियोगि कार्यमेव सिद्धिश्च ज्ञप्तिर्विवक्षितेत्यत आह * नापीति * कुत इत्यत आह * प्रतीति * तदेवमुक्तं भवति कार्यादन्येन वस्तुना न ज्ञातं कारणमिति तदयुक्तं प्रत्यक्षादिप्रमाणविषयत्वात्कारणस्य त्वत्पक्षेऽसम्भव इत्यर्थः। कारणं चेत्कार्यलिङ्गेनैव ज्ञायत इत्यत आह * नेति * आप्तोपदेशादेरपि तदवगमादिति यावत्। अन्यत्वप्रतियोगिनोः कार्याकार्ययोः कार्यस्य प्रतिक्षेपे परिशेषात्कारणत्वमन्यत्वप्रतियोगि सिद्धिश्चोत्पत्तिज्ञप्त्योरन्यत-

३ अन्यथापि तदुपगमादिति का० मु० पु० पा०।

रा भवतीत्याशङ्क्याह * नापीति * कुत इत्यत आह * ज्ञप्ताविति * अनन्यथासिद्धमिति कारणत्वादन्येन प्रकारेण न निष्पन्नं न ज्ञातं वेत्युक्तं स्याज्जनिमतो-ऽडस्य कारणत्वप्रकारेणैव जन्मादि कथितं स्यादेवं च स्वज्ञाने स्वज्ञानं स्वोत्पत्तौ स्वोत्पत्तिरित्यात्मा-श्रयः ज्ञप्तावित्युत्पत्तेरुपलक्षणम् । ज्ञप्तिपक्षे कारणत्व प्रकाराद्द्रव्यसत्त्वादिप्रकारान्तरवत्तया ज्ञायमानत्वाद-सिद्धिरुत्पत्तावपि स्वावयवादिभ्यो निष्पत्तेरसिद्धिः स्यादित्याह * प्रकारेति *

अनन्यथासिद्धत्वमिति कारणत्वादन्येन प्रकारे-णाकारणत्वमित्येवं रूपेणासिद्धत्वं विवक्षितमिति शङ्कते ।

९६ अनन्यथासिद्धत्वस्यार्थान्तरनिरासः ।

व्यतिरिक्तत्वमकारणत्वमिष्टमिति चेन्न। उक्तदोषानि-वृत्तेः कारणत्वात् पूर्वं चोत्पत्तिज्ञप्त्योरक्षणिकत्वादिभिर-भ्युपगमात् । अव्यवहितपूर्वतया कदाचित्तदपि कारण-मेवं तत्पूर्वतरमपि, कस्याश्चित् व्यक्तेरनेवम्भावेऽपि त-ज्जातीयतया तथाभावित्वविवक्षिततया व्यक्तिव्यभिचारा-प्रयोजकत्वादिति चेन्न। कार्यान्तरेऽपि गगनादेरतथाभा-वस्य विनिगन्तुमशक्यत्वात् । कालदेशव्यापकतयाऽन्य-थासिद्धस्थिति तदिति चेन्न । तथा सति शब्दादौ गग-नादेरकारणत्वप्रसङ्गात् । एतेनानन्यथासिद्धान्वयव्य-

तिरेकानुविधायित्वमपि व्युदस्तम् । गगनादेर्व्यति-
रेकाभावात् अकारणत्वप्रसङ्गश्चाधिकः ।

* व्यतिरिक्तेति * अन्यथेति शब्दवाच्यं व्यति-
रिक्तत्वमकारणत्वं तद्रूपेणासिद्धिरितियोजना। कारण-
त्वज्ञानव्यतिरेकेणाकारणत्वज्ञानायोगात्कारणत्वज्ञा-
नेऽनन्यथासिद्धकारणत्वज्ञानमित्यात्माश्रय इति परि-
हरति * नेति * दूषणान्तरमाह * कारणत्वादिति *
स्थायित्वादिभिः कार्याव्यवहितपूर्वक्षणवर्त्तित्वं सह-
कारिसमवधानं वा कारणत्वं व्यवस्थिते वस्तुनि प-
श्चान्निष्पद्यत इत्यभ्युपगम्यते तेन प्रकारान्तरेणापि
सत्वज्ञप्त्योरभ्युपगमादव्याप्तिरित्यर्थः । यस्येदानीं का-
रणता ज्ञायते तत्पूर्वतरमपि कारणमेव कदाचिद-
व्यहितपूर्वतया, कार्याऽव्यवहितपूर्वक्षणासम्बन्धान-
धिकरणत्वस्य कारणत्वेन विवक्षितत्वादतोऽकारण-
त्वमसिद्धमिति शङ्कते * अव्यवहितेति * काचि-
त्तन्तुव्यक्तिः कार्यमजनित्वैव नश्यति तत्र का वार्त्ते-
त्यत आह *कस्याश्चिदिति* कार्याव्यवहितपूर्वक्षणा-
सम्बन्धानधिकरणजातीयस्य तथात्वेन विवक्षितत्वाद्य-
क्तिव्यभिचारोऽप्रयोजकः तस्यापि तज्जातीयत्वादि-
त्यर्थः। अतिव्याप्त्या दूषयति *नेति* यतः कार्यजन्म
कदाचिदपि न दृष्टन्तस्यापि तज्जातीयतया कारण-
त्वकल्पनेऽनन्यथासिद्धत्वकल्पने च गगनादेर्नित्यविभु-
द्रव्यस्य स्वकार्यशब्दादिव्यतिरिक्तकार्येण समतया पू-
र्वकालसम्बन्धित्वात्कारणत्वप्रसङ्ग इत्यर्थः । नच गग-

नादेः कारणत्वमिष्टमेव जनिमान्निमित्तत्वोपगमादिति वाच्यम् । व्यतिरेकाभावादन्वयमात्रस्य चातिप्रसङ्गित्वादिति। अन्यथासिद्धेः स्फुटत्वाद्गगनादेरनन्यथासिद्ध-पूर्वभावित्वं नास्तीति शङ्कते *कालेति* देशकालव्यापितयाऽऽकाशादेरन्यथासिद्धसन्निधित्वादकारणत्वे शब्दादावप्यकारणत्वप्रसङ्ग इति परिहरति * नेति * तदनन्यथासिद्धान्वयव्यतिरेकानुविधायित्वं कारणत्व-मिति पक्षे कथितं खण्डनमतिदिशति *एतेनेति* मृदादिगतप्रमेयत्वादिव्युदासार्थमनन्यथेतिविशेषणम् । त-दनुविधायित्वं तद्वत्त्वमितियावत् । एतेनेति गगनादेरन्यथासिद्धिसम्भवाच्छब्दाद्यकारणत्वेनेत्यर्थः । अ न्वयव्यतिरेकानुविधायित्वस्य कारणत्वोपगमे व्यतिरेकहीनगगनादेः कारणत्वं न स्यादिति दोषान्तरमप्यस्तीत्याह * गगनेति *

कार्यान्तरे गगनादेर्व्यापाराभावान्न कारणत्वप्रसङ्गो यतो व्यापारवत्त्वं कारणत्वमिति शङ्कते ।

९७ कारणत्वलक्षणद्वयनिरासः ।

व्यापारवत्त्वं कारणत्वमिति चेन्न । तद्धि व्यापारसमवायित्वं वा व्यापारजनकत्वं वा । नाद्यः यागादेरकारणत्वप्रसङ्गात् । नोत्तरस्तस्यैव निरूप्यमाणत्वात् । नित्यसत्वासत्वयोरन्यतरप्रसक्तिनिवारकत्वमिति चेन्न । निवारकपदावयवस्य प्रत्ययस्य कारणत्वनिर्वचनं विनाऽनिरूप्यमाणार्थत्वात् । अन्यतरार्थस्यैकस्य च निरु-

र्केत्यशक्तेः ।

* व्यापारेति * तत्र वत्प्रत्ययेन समवाय उच्यते किंवा जन्यजनकसम्बन्ध इति कथनीयमिति परिहरति * नेति * यागादिव्यापारापूर्वस्य चेतनसमवायित्वाद्यागादेः स्वर्गाकारणत्वप्रसङ्गेन प्रथमं दूषयति * नेति * जनकत्वं कारणत्वं तद्व्याप्यसिद्धमिति लक्षणासिद्धिरिति द्वितीयं दूषयति * नेति * लक्षणान्तरं शङ्कते *नित्येति* कार्यस्य नित्यं सत्वमसत्वं वा प्रसज्यमानं येन निवार्यते तत्कारणं तद्भावस्तत्त्वं जन्मनाशकारणद्वयावरोधाय विशेषणमिति यावत् । निवारकपदावयवो ल्युट्प्रत्ययः तस्यार्थः कर्त्ता स च कारणविशेषस्ततः कारणनिर्वचनं विना तदसिद्धिरिति दूषयति * नेति * अन्यतरशब्देन सत्त्वोपगमे नाशकारणेऽव्याप्तिरसत्त्वोपगमे जन्मकारणाव्याप्तिरुभयानुगतं चाऽन्यतरत्वं जातिरुपाधिर्वा नास्ति स्वात्मवृत्त्यनुपपत्तेरिति । जन्मनाशान्यान्यत्वं तत्रानुगतमितिचेन्न । जन्मनाशविशिष्टान्यान्यत्वस्य तत्र वृत्तावात्माश्रयादन्यान्यत्वमात्रस्योक्तदोषानिस्तारात् । दोषान्तरमाह * अन्येति *

लक्षणान्तरं शङ्कते ।

९८ कारणत्वस्यैव लक्षणान्तरनिरासः ।

यदनभ्युपगमे यस्य तत्पूर्वसत्त्वप्रसङ्गः तत्तस्य कारणं तद्भावश्च कारणत्वमिति चेन्न । भावस्य विनाशित्वानभ्युपगमे तथा प्रसङ्गेनातिव्यापकत्वात् । तत्पूर्वस्थित-

त्वेन च विशेषणे सहभावनियतस्याभावेऽपि प्रसङ्गः तथात्वोपगमे सामग्र्यामपि प्रसङ्गः । तस्या अपि च तथात्वोपगमे कार्यद्वयैक्यप्रसङ्गोऽसाधारण्यश्च । विशेषापेक्षित्वेऽतिव्याप्तिरविशेषे भाविपूर्वार्थविकल्पावकाशश्च ।

* यदिति * यस्य मृदादेरनभ्युपगमे यस्य घटादेर्यस्मिन्काले सत्त्वं दृश्यते ततः पूर्वस्मिन्नपि काले सत्त्वप्रसङ्गस्तस्य घटादेस्तन्मृदादि कारणं तद्भावश्च कारणत्वमित्यर्थः । प्रध्वंसेऽतिव्याप्त्या दूषयति *नेति* घटस्य प्रध्वंसप्रतियोगित्वानङ्गीकारे यस्मिन् क्षणे सहकारिसमवधानात्सत्त्वं दृश्यते ततः पूर्वक्षणेऽपि सत्त्वं प्रसज्येताविनाशिभावस्यानादित्वात्तथाच तत्प्रध्वंसस्तत्कारणं स्यात्तदुक्तलक्षणस्य तत्र भावादित्यर्थः । यस्य पूर्वभाविनोऽनभ्युपगम इति विशेषणं विवक्षितमतो नातिव्याप्तिः घटप्रध्वंसस्य तस्मात्पूर्वत्वाभावादित्याशङ्क्याह * पूर्वेति * अग्निसम्पर्काद्रूपरसगन्धस्पर्शा घटे सह भवन्ति तेषां प्रागभावानभ्युपगमेऽविशेषेणैव सत्वप्रसङ्गः एककालनियमात्ततश्च रूपप्रागभावो रसस्य तत्प्रागभावो गन्धादेः कारणं स्यादित्यतिप्रसक्तिरित्यर्थः । सहभावनियतस्याभावोऽन्योन्यकारणमिष्यतेऽतो नायमनिष्टप्रसङ्ग इत्यत आह * तथात्वेति * सहभाविनां रूपादीनां सामग्र्यामितरेतरकारणत्वप्रसङ्ग इत्यर्थः । सहभावनियतस्य सामग्र्या अपि इतरकारणत्वमभ्युपगम्यत एवेत्याशङ्क्याह * तस्या इति * रूपसामग्रीजन्यत्वे रसस्यापि रूपत्वं

रससामग्रीजन्यत्वे रूपस्यापि रसत्वमिति जातिभेदो-व्यक्तिभेदोपि न भवेदित्यर्थः । यदनभ्युपगम इत्यत्र य-च्छब्देन मृदादिकारणविशेषपरामर्शे तन्त्वाद्यव्याप्तिर्व-स्तुमात्रपरामर्शेऽतिव्याप्तिः मृदनङ्गीकारे घटातिप्रसक्तेः घटं प्रति तन्त्वादिवस्तूनां कारणत्वप्रसङ्गादित्याह*अ-साधारण्यमिति* दूषणान्तरमाह *भावीति* उत्तरपूर्व-शब्दार्थे विकल्पो भविष्यति तेन पूर्वार्थानिर्वचनादपि लक्षणासिद्धिरित्यर्थः ।

यस्य पूर्वभाविन इत्यविशेषाभिधानेऽव्याप्तिरुक्ता तत्परिहाराय विशेषं शङ्कते ।

९९ नियतत्वविशेषणे विकल्पस्य दोषकथनम् ।

नियतप्राग्भावित्वमिति चेन्न । अवश्यम्भावस्य नियमार्थत्वे गगनादेः सर्वकार्यहेतुत्वप्रसङ्गस्य तदव-स्थत्वात् । अन्वयवरूपादेश्चान्वयवितद्रसादिषु कारण-त्वप्रसङ्गात् । अनौपाधिकत्वं नियमार्थ इति चेत् । एवं ह्यनौपाधिकपूर्वभावो हेतुत्वमित्युक्तं भवति तथा च पिपीलिकोत्थानादेर्वृष्ट्यादौ जनकत्वप्रसङ्गः सहभा-विसामग्र्या वा । न तत्र प्राचि पूर्वभावो नियतः किन्तु वृष्टेः परं भाव इति चेन्न । प्राग्रूपाणामेव नियतत्वात् । तानि कारणमेवेति चेन्न । निदानप्राग्रूपसाङ्कर्यप्रसङ्गात् ।

*नियतेति* किमिदं नियतत्वमावश्यकत्वमुतानौ-पाधिकत्वं, यद्याद्यस्तर्हि गगनादिव्यतिरेकेण तत्तत्का-र्यानुत्पत्तेर्गगनादेः सर्वकारणत्वप्रसङ्ग इत्याह * नेति*

अतिव्याप्त्यन्तरमाह * अवयवेति * अवयविनि तद्गतरूपादौ चोत्पद्यमानेऽवयवादेरवश्यम्भावादवयविनं तद्गतरूपादिकं च प्रति व्यत्यासेन कारणत्वप्रसङ्ग इत्यर्थः। द्वितीयं शङ्कते*अनौपाधिकेति* लक्षणातिव्यापकत्वं दर्शयितुं लक्षणवाक्यस्य पर्यवसितमर्थं दर्शयति *नेत्यादिना* निरुपाधिपूर्वसत्त्वस्य हेतुत्वाभिधाने लक्षणस्य किं क्षुण्णमित्यत आह * तथाचेति * वृष्ट्यपेक्षया पूर्वभावित्वादनौपाधिकत्वाच्च वृष्टिसत्तां प्रति कारणता स्यादित्यर्थः। आदिपदेन पुरोवातादिसङ्ग्रहः। अतिव्याप्त्यन्तरमाह * सहेति * सह भाविनौ यौ रूपरसौ पाकजौ तयोः सामग्र्या वाऽन्योन्यकार्यं प्रति हेतुत्वप्रसङ्ग इति यावत्। वाशब्दश्चार्थे। यदुक्तं पिपीलिकोत्थानादेर्वृष्ट्यादिषु जनकत्वप्रसङ्ग इति तदयुक्तं पिपीलिकोत्थानादेर्वृष्टिज्ञानं प्रति पूर्वभावनियमेऽपि न वृष्टिं प्रति प्राक्सत्त्वप्रसङ्गस्तेन विनापि वृष्टिदर्शनादिति शङ्कते * न तत्रेति * कस्य तर्हि नियम इत्यतः पिपीलिकोत्थानादिसत्त्वे वृष्टिर्भवत्येवेति नियम इत्याह * किन्त्विति * यानि रोगाणां पूर्वरूपाणि तेषां पूर्वमपि नियतत्वात्कारणत्वं स्यादिति परिहरति * नेति * इष्ट एवायं प्रसङ्ग इति शङ्कते * तानीति * निदानानामिव कारणत्वं पूर्वरूपाणामपि चेत्।

"निदानं पूर्वरूपाणि रूपाण्युपशयस्तथे"ति

वैद्यशास्त्रप्रसिद्धनिदानपूर्वरूपयोर्भेदो न स्यादिति दूषयति * नेति *

नियतप्राग्भावि कारणं वदता पूर्वपदार्थो निर्वक्तव्यः प्राक्पूर्वपदयोः पर्यायत्वात्तच्चाशक्यमिति मत्वाह ।

१०० पूर्वशब्दार्थनिर्वचने दोषकथनम् ।

पूर्वार्थश्च वक्तव्यः । पूर्वकालसम्बन्धित्वं पूर्वत्वमिति चेन्न । कालस्याकारणत्वप्रसङ्गात् । तस्यापि किं पूर्वत्वमिति विवेचनीयत्वात् । अतीतोपाध्यवच्छिन्नत्वं तस्य पूर्वत्वमिति चेन्न । अतीत इति निष्ठान्तस्य पूर्वकालवाचिनो विवेचनीयत्वात् । परत्वापरत्वयोर्गुणयोर्मध्ये यत्परत्वं तत्पूर्वत्वमुच्यत इति चेन्न । कालादौ गुणादौ च तदनङ्गीकारात् तेषामकारणत्वप्रसङ्गात् । तस्मिन्नेव च तदभावात् साक्षात्कारिज्ञानादावपि तस्याकारणत्वप्रसङ्गात् ।

*पूर्वेति* पूर्वकालेन सम्बन्धित्वं पूर्वभावित्वमिति शङ्कते *पूर्वेति* अव्यापकमिति दूषयति *नेति* नियतपूर्वकालसम्बन्धित्वमित्युक्तं स्यात्तथाच काल एव लक्षणाव्याप्तिस्तस्य स्ववृत्तिप्रसङ्गेन कालसम्बन्धाभावात्कालान्तरस्य चाभावादभ्युपगमे चान्योन्याश्रयादिरित्याशयः । किञ्च पूर्वकालेत्यत्र किमिदं कालस्य पूर्वत्वमिति विवेचनीयं न तच्छक्यमद्यापि परीक्षाकालत्वादतो लक्षणासम्भव इत्याह * तस्येति * कालस्य पूर्वत्वं नामातीतेनाऽऽदित्यादिगतिलक्षणेनोपाधिनाऽवच्छिन्नत्वमिति शङ्कते * अतीतेति * स्मरणे निष्ठासंज्ञाविषयस्यातीत इति क्तप्रत्ययस्य पूर्वकालवाचि-

त्वात् पूर्वकालविवेचनं विना विवेचयितुमशक्यत्वादात्माश्रयतापातात्पूर्वकालावच्छिन्नत्वं कालस्य पूर्वत्वं निरूपयितुमशक्यमतः पूर्वकालावच्छिन्नत्वानिरुक्तौ कालस्य पूर्वत्वमित्यसङ्गतमिति परिहरति * नेति * प्रकारान्तरेण पूर्वपदार्थं शङ्कते * परत्वेति * परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तं दिक्कृतं कालकृतं चैकदिगवस्थितपिण्डयोर्मध्ये द्रष्टुः सन्निकृष्टमवधिं कृत्वा यत्र विप्रकृष्टा बुद्धिरुत्पद्यते तत्र तां बुद्धिमपेक्ष्य परेण दिक्प्रदेशेन संयोगात्परत्वमुत्पद्यते विप्रकृष्टं चोपाधिं कृत्वा यत्र सन्निकृष्टबुद्धिरुत्पद्यते तत्र तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वमुत्पद्यते तथैव युवस्थविरयोर्युवानमवधिं कृत्वा यत्र स्थविरे परबुद्धिस्तामपेक्ष्य तत्र परेण कालप्रदेशेन संयोगात्परत्वमुत्पद्यते स्थविरमवधिं कृत्वा यून्यपरबुद्धिमपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वमुत्पद्यते तत्र तयोर्मध्ये यत्परत्वं तत्पूर्वत्वमित्यर्थः । मूर्त्तानामेव परत्वापरत्वयोरङ्गीकारात्कालस्य चामूर्तत्वात् गुणादौ चागुणे तदनङ्गीकारान्न तेषां कारणत्वं स्यादिति परिहरति * नेति * दोषान्तरमाह * तस्मिन्निति * परत्वाख्यो यो गुणस्तस्मिंस्तावदन्यत्र सर्वत्र परत्वसम्भवेऽप्यनवस्थानात्परत्वं नास्त्यस्ति च स्वविषयसाक्षात्कारिज्ञाने व्यवहारे च कारणत्वं तन्न स्यादित्यर्थः ।

कारणत्वलक्षणान्तरं शङ्कते ।

१०१ कारणत्वस्यैव लक्षणान्तरनिरासः ।

सामग्र्येकदेशत्वं कारणत्वमिति चेन्न । एकदेश-

त्वस्यानिर्वचनीयत्वात् । अवयवत्वप्रदेशत्वादीनां सामग्र्यामसम्भवात् । सकलकारणकलापसमवधानस्यैव च मेलकार्थत्वात् तेनैव तन्निर्वचनीयत्वात्[1] । यदनन्तरं कार्यं भवत्येव सा सामग्रीति चेन्न । विभागानन्तरं संयोगनाशस्यावश्योत्पत्तेर्विभागस्यापि सामग्रीत्वप्रसङ्गात् । एवं कर्मणो विभागेऽन्त्यतन्तुसंयोगस्य पट इत्यादि । कार्यकारणभावो नाम सम्बन्धः कोऽपीति चेत् न तदाऽविशेषेण कार्यकारणसाङ्कर्यापत्तेः । कार्यकारणविशेषितत्वाद्भेदे तयोः पृथक् निर्वाच्यत्वापत्तेः ।

*सामग्रीति* यत्किञ्चिदेकदेशव्यावृत्त्यर्थं सामग्रीति विशेषणम् । सामग्र्येकदेशस्य निरूप्यमाणेऽसम्भवेन लक्षणासम्भव इति परिहरति * नेति * घटाद्येकदेशवत्सामग्र्यामप्येकदेशः किं न स्यादित्यत आह * अवयवेति * एकदेशशब्दस्यावयवप्रदेशयोरन्यतरार्थत्वात्सामग्र्याश्च निरवयवत्वाद्देशत्वाच्चासम्भव इत्यर्थः । अवयव आरम्भकद्रव्यम् । प्रदेश उपाध्यवच्छिन्नो विभागो भवति । आदिपदेन भेदादिसङ्ग्रहः । किञ्च कारणमेलनं सामग्री तदेकदेशः कारणमित्यन्योन्याधीननिरूपणत्वादप्यसम्भव इत्याह * सकलेति * तेनैवेति-मेलकेन कारणनिर्वचनादन्योन्याश्रय इति शेषः । कारणत्वनिरूपणनिरपेक्षं सामग्रीलक्षणं शङ्कते * यदिति * अतिव्याप्त्या दू-

१ निर्वचनात् इति टीकाऽनुसारेणाऽपेक्षितःपाठः ।

षयति * नेति * विभागानन्तरमव्यवहितक्षणे संयोगनाशस्यावश्योत्पादो न च तन्मात्रमेव सामग्र्यदृष्टादेरपि कारणत्वादतस्तत्कारणमात्रं तत्र च सामग्रीलक्षणमतिव्यापकमित्यर्थः । प्रसङ्गान्तरमाह *एवमिति * अविनश्यद्द्रव्यस्थकर्म हि तत्कारणमात्रमनन्तरक्षणे विभागं जनयतीति तत्रातिव्याप्तिरेवमन्त्यतन्तुसंयोगोऽपि कारणं तदनन्तरं च पटकार्यमुत्पद्यते तथाऽन्त्यतुरीवेमादिसंयोगे ऽप्यतिव्याप्तिरित्याशयः । कार्यकारणसम्बन्धाधिकरणत्वं कारणत्वमिति शङ्कते * कार्येति * कोऽपीतीतरसम्बन्धविलक्षण इति यावत् । तस्यैकत्वेनोभयत्रापि संयोगवदविशेषात्तदधिकरणत्वेन कारणवत्कार्यस्यापि कारणत्वं स्यादिति दूषयति * नेति * कार्यकारणयोः साङ्कर्यं च दर्शयति * कार्येति * अविशेषेण—कार्यकारणभावसम्बन्धस्येति शेषः । कारणेन विशेषितः सम्बन्धोऽन्य एव, कार्येण च विशेषितः सम्बन्धोऽन्यस्ततश्चाविशेषितत्वं नास्तीत्यत आह * भेद इति * कार्यकारणयोरन्योन्यनिरूपितत्वादितरेतराश्रयादसिद्धिरित्यभिसन्धिः ।

इदानीं नवीनां रीतिमाशङ्कते ।

१०२ विलक्षणधर्मरूपकारणत्वस्याऽप्रामाणिकत्वम् ।

कारणत्वं धर्मः कोऽपीति चेन्न । तत्सद्भावे प्रमाणस्य वाच्यत्वात् । क्वचित्प्रत्यक्षः सः, क्वचित् दृष्टानुमेय इति चेन्न । किं हि प्रति कारणतां प्रत्यक्षमुल्लिखेत् । न

तावदनिर्लुठितकार्यमप्रतीतेः अन्वयव्यतिरेकादेर्व्यञ्जकस्य च विशेषं प्रत्येव सम्भवात् । नापि सामान्यतो घटादिं प्रत्येवं विशेषतो घटाद्यनुत्पत्त्यापत्तेः । तावन्मात्रात् विशेषोत्पत्तेर्विशेषेषु विनिगमना न स्यात् प्रतिविशेषं चोत्पत्तेः प्राग्वर्तमानत्वादसन्निकर्षादध्यक्षविषयतानुपपत्तेः । कार्य्यसत्त्वकालश्च सामग्र्यभावात् न तज्जननकाल इति तदानीं तज्जननविशिष्टता कथमध्यक्षा स्यात् प्राक्तदग्रहणेन संस्कारसाचिव्यस्याप्यसम्भवात् । एवं क्वचिदपि हेतुत्वे साक्षात्कारासम्भवेन किंमूलव्याप्तिग्रहात्त्वाऽनुमाऽपि स्यात् । प्रतिबन्दी चानिर्वचनत्वादिनि न स्थाने । कादाचित्कत्वानुपपत्त्या तद्ग्रह इति चेन्न । वैयधिकरण्यात् । कथमपि सामानाधिकरण्ये तदुपपादकस्योपपाद्यवदनुपपत्तावविशेषादविश्रान्तिर्नानादित्वेनाऽपि शक्योपपादना । वैयधिकरणेऽप्युपपाद्यासम्बन्धश्चेदनियमः सम्बन्धश्चेदविश्रान्तिरिति । एतेन शक्तिः कारणत्वमित्यपि निरस्तम् ।

* कारणत्वमिति * कारणत्वं नामात्यन्ताभावविशेषरूपो धर्मविशेषस्तद्वत्कारणमित्यर्थः । कार्यत्वं धर्मः कार्येऽपीत्थमितिशेषः । कार्यत्वकारणत्वलक्षणधर्मयोः प्रमाणाभावादसिद्धिरिति परिहरति *

---

१ मिति गतार्थमिति पु०पा० ।

नेति * प्रमाणाभावोऽसिद्धः प्रत्यक्षादेर्यथायथं प्रमाणत्वादिति शङ्कते * क चिदिति * कचित्तत्र व्याप्तिं दृष्ट्वा पश्चादनुमेय इत्यर्थः। प्रत्यक्षं कारणतामुल्लिखत् निष्प्रतियोगिनीमुल्लिखेदुत किञ्चित्प्रतियोगिनीं, न तावदाद्यो लोके कारणतायाः सप्रतियोगिकत्वेन प्रसिद्धेर्नापि द्वितीयोऽपेक्ष्यस्य निरूपणाशक्तेरिति दूषयति * नेति * अनिर्द्धारितविशेषं कार्यमात्रं प्रतियोगि तेन प्रतियोग्यनिरूपणमसिद्धमित्यत आह * नेति * घटकारणं पटकारणमिति विशेषविषयकारणतोल्लेखान्नानिर्लुठितविशेषं कार्यमात्रं प्रति कारणतामुल्लिखेदित्यनुषङ्गः। हेत्वन्तरमाह * अन्वयेति * सत्सु तन्त्वादिषु पटो जायते नासत्स्वित्यन्वयव्यतिरेकयोः केवलव्यतिरेकस्य कार्यविशेषोपरक्तं कारणविशेषं प्रत्येव सम्भवात्तन्न केवलकारणता प्रत्यक्षग्राह्या सम्भवतीत्यर्थः। असम्भवादितिपाठ अन्वयव्यतिरेकसहकृतस्येन्द्रियस्यैव तत्ग्राहकत्वात्तस्य च घटादिविशेषनिष्ठतया दृष्टत्वात्सामान्ये तदसिद्धिरित्यर्थः। तर्हि सामान्यतो घटादि प्रति कारणत्वं प्रत्यक्षोल्लेख्यं भविष्यतीत्यत आह * नापीति * कुतो नेत्यत आह * एवमिति * घटव्यक्तिविशेषं प्रति किमपि कारणं प्रामाणिकं न सिध्येदित्यर्थः। सामान्यसिद्धिनान्तरीयकतया विशेषसिद्धिरित्याशङ्क्याह * तावदिति * सामान्यस्य विशेषमात्राकाङ्क्षत्वाद्- तद्दण्डव्यक्तिरेव तत् घटव्यक्तेः कारणमिति विनिगमनन्न स्यादित्यर्थः। अन्वयव्यतिरेकादेः सम्भवाद्विशे-

षविनिगमनं स्यादित्याशङ्क्याह * प्रतीति * अन्वयादिसहकृतमिन्द्रियं प्रतिविशेषं प्रागुत्पत्तेर्ग्राहकमुत कार्यसत्त्वकाले, नाद्यः प्रागुत्पत्तेरनेककार्यविशेषितकारणत्वस्याभावादेवाक्षसन्निकर्षाभावात् प्रत्यक्षत्वानुपपत्तेरित्यर्थः । द्वितीयं प्रत्याह * कार्येति * कार्यकाले पूर्वकालाभावात्पूर्वकालस्य च कारणविशेषणत्वात्पुनरपि विशेषणस्येन्द्रियासन्निकृष्टत्वात्कथं तद्विशिष्टस्येन्द्रियग्राह्यतेत्यर्थः।तस्य कालस्य सामग्र्या अभावेन न जननकालः स इति तदानीं तज्जननविशिष्टकारणता कथमध्यक्षा स्यादिति योजना । वस्तुनः संस्कारोपनीतस्य कार्यकाले प्रत्यभिज्ञायामिव प्रागवस्थाया ग्रहणं भविष्यतीत्याशङ्क्याह * प्रागिति * कार्यविशेषघटितस्य कार्यात्प्राक्क्षणेऽसत्त्वात्प्रत्यक्षेण तद्ग्रहायोगात् तत्संस्कारासम्भव इत्यर्थः । अनुमेयमेव तत्कारणत्वं तर्हीत्याशङ्क्याह * एवमिति * व्याप्तिग्रहणासम्भवेनानुमानप्रवृत्तेरसम्भवादनुमानेनैव व्याप्तिग्रहणेऽनवस्थाप्रसङ्गादित्यर्थः । त्वयाऽपि जगत्कारणं ब्रह्मेष्यते तद्धि कथं प्रतीयत इत्याशङ्क्याह * प्रतीति * न स्थाने–न युक्ता । प्रतीयते हि शब्दात् ब्रह्मणः कारणता या च न्यायबाध्येत्यनिर्वचनीयेत्यर्थः । माभूदनुमानेन तद्ग्रहः कार्यगतकादाचित्कत्वानुपपत्त्याऽर्थापत्त्या कारणत्वग्रह इति शङ्कते * कादाचिदिति * कादाचित्कत्वं कार्यधर्मः कारणत्वं कारणस्यातो वैयधिकरण्यान्न तत्सिद्धिरिति दूषयति

१ कार्यस्येति पु० पा० ।

* नेति * कार्यस्य कारणतादात्म्याङ्गीकारात् कारणत्वं कादाचित्कत्वं चैकाधिकरणमित्याशङ्क्याह * कथमिति * उपपादकस्याप्युपपाद्यवत् कादाचित्कत्वानुपपत्तेस्तत्रापि कादाचित्कत्वादिकमुपन्यसनीयमेवञ्च घटस्य कादाचित्कत्वमुपपादकं विनाऽनुपपद्यमानं स्वोपपादकमृदादेः कारणत्वं कल्पयति तदप्यनुपपद्यमानमुपपादकान्तरं कल्पयिष्यतीत्यनवस्थाऽऽश्रयणीयेत्यर्थः। बीजाङ्कुरवत्कार्यकारणपरम्पराया अनादित्वान्नानवस्था दोष इत्याशङ्क्याह * नेति * क्वचित्कार्यकारणभावं पूर्वं दृष्टवतोऽदृष्टेऽप्येवमिति भवेद्विश्वासः प्रथमत एव तु विप्रतिपन्नस्य नैकमपि सिद्ध्येत्कुतोऽनादिपरम्परावसर इत्याशयः। माहाभिप्रायेण सामानाधिकरण्यमङ्गीकृत्य दूषणमभाणि वैशेषिकाभिप्रायेण दूषणान्तरं भणति *वैयधिकरण्येपीति * उपपाद्येनोपपादकस्य सम्बन्धो नास्त्युतास्ति न चेत्सर्वं सर्वस्मादुत्पद्येताविशेषादस्ति चेत्सोऽपि सम्बन्धस्तेन सम्बद्धो नवा, नचेदसम्बन्धाविशेषः सम्बद्धश्चेदेवं सोऽपि सम्बन्धान्तरेणेत्येव[illegible]वस्थेत्यर्थः। अर्थापत्तिगम्यं कारणत्वं न सम्भवतीत्यनेन शक्तिः कारणत्वमित्यपि निरस्तं शक्तेरर्थापत्तिगम्यत्वादर्थापत्तेः खण्डितत्वादित्याह * एतेनेति * शक्तिरिति।

कारणत्वं प्रत्यक्षमित्यत्र दोषान्तरमाह।

१०३ कारणत्वस्य प्रत्यक्षत्वे दोषान्तरकथनम्।

---

१ तादात्म्याभिप्रायेणेति युक्तः पाठः परं सर्वेषु पुस्तकेषु महाभिप्रायेणेत्येवसत्त्वात्तथैवस्थापित इत्यवधेयम्।

किञ्च प्रत्यक्षप्रमितौ विषयस्यापि सन्निकर्षव्यापारकस्य कारणतया स्ववृत्त्यापत्तेः अन्यथाऽक्षस्यापि तत्र कारणत्वं न स्यात् अनुविधानाविशेषात्। विषयाविशेषिताक्षसन्निकर्षस्य तथात्वेऽत्यापत्तेः। क्वचित् कारणत्वाकारणत्वविवादस्य चानुच्छेद्यत्वापत्तेः। एकेन तस्य दृष्टेरपरेण चादृष्टेः। तल्लक्षणस्य नियतपूर्वभावित्वादेः कथने कथितदोषापत्तेः। विना च तच्चिह्नाद्भ्रमसन्देहौ तत्र किं दर्शनादुच्छेद्यौ अक्षेण हेतुत्वधर्मिणि दृष्टेऽपि तददृष्ट्या[2] यदेवगमोऽक्षसहकारी[1] वाच्यस्तदर्थेन सिद्धेन हेतुधियोऽर्थवत्वे सम्भवति तदन्यार्थकल्पनागौरवं कुतो बलात् सिध्येत्।

* किञ्चेति * कारणत्वं धर्मस्तच्चेत्प्रत्यक्षेण गृह्यते प्रत्यक्षप्रमितौ विषयस्य कारणत्वात्कारणत्वस्य विषयत्वात्तत्र कारणत्वं वर्त्तत इति वक्तव्यं तच्चेत्तदेवात्माश्रयोऽन्यच्चेदननुगतं कारणत्वमिति परस्पराश्रयाप्तिरनवस्था चेत्याशयः। विषयस्य सन्निकर्षं प्रत्येव कारणत्वं न प्रत्यक्षं प्रतीत्याशङ्क्याह * अन्यथेति * व्यापारिणः कारणत्वाद्व्यापारं प्रति तदभावात्तथापि सन्निकर्षव्यापारवतो विषयस्य कारणत्वाभावेऽक्षस्यापि प्रत्यक्षप्रमितौ कारणत्वन्न स्यादन्वयव्यतिरेकानुविधानाविशेषादक्षं चेत्कारणं विषयोपीति कारण-

१ यदभ्युपगमोऽक्षेति का० मु० पु० पा०।

२ तददृष्ट्येति टीकानुसारेणापेक्षितः पाठः।

त्वस्य प्रत्यक्षत्वे कारणत्वान्तरं प्रसज्येतेत्यर्थः। विषये-णाविशेषितस्याक्षसन्निकर्षस्य कारणत्वान्न विषयस्य सन्निकर्षव्यापारत्वमित्याशङ्क्याह * विषयेति * यत्र क्वापि विषये सन्निकर्षः प्रमामुत्पादयेदित्यविशेषितपक्षानुपपत्त्या यथा सन्निकर्षविशेषणतया ऽक्षस्यान्वयव्यतिरेकित्वात्कारणत्वं तथा ऽस्यापीत्यर्थः। किञ्चाक्षसन्निकर्षस्याभावे विषये केचन कारणत्वं मन्यन्ते केचिन्नानुमन्यन्ते स विवादः कारणत्वस्य प्रत्यक्षत्वे न स्यादिति दोषान्तरमाह * क्वचिदिति * किमित्युच्छेद्यता न स्यादित्याशङ्क्य कस्य चित्तद्विषयप्रत्यक्षज्ञानसिद्धेः कस्य चित्तद्विषयप्रत्यक्षज्ञानासिद्धेरित्याह * एकेनेति * यः प्रत्यक्षेण कारणत्वं पश्यति स एव विवादं कुरुत इति तन्निवृत्तिरशक्येत्युक्तम्। ननु यः प्रत्यक्षेण पश्यति कारणत्वं तेनेन्द्रियसहकारिभूतचिह्नान्तरं प्रत्याय्य विवाद उच्छेद्य इत्याशङ्क्याह * तदिति * तच्चिह्नमशक्यनिर्वचनं शक्यनिर्वचनत्वे तदेव कारणत्वमस्त्वित्यर्थः। कथितदोषापत्त्या लक्षणज्ञानासम्भवे किं फलितमित्यत आह * विना चेति * अकारणे पिण्डे कारणत्वभ्रमः सुगतादेर्विवादमूलं च संशयस्तस्योच्छेदो न स्या(त्प्रत्यक्षमात्रा)त्तत्प्रत्यक्षत्वे विवादसम्भवादित्यर्थः। किंदर्शनात्किंविषयविशेषदर्शनादिति यावत्। यत्र कारणत्वं वर्त्तते तस्य प्रत्यक्षत्वे दृष्टत्वात्तस्मिन् धर्मिणि वर्त्तमानकारणत्वविषयभ्रमसंशययोः शक्योच्छेदत्वमित्याशङ्क्याह * अक्षेणेति * कारण-

त्वधर्मिणः साधारणत्वात्तन्नियतचिह्नानामप्यभावेन दर्शनात्कारणत्वस्य चानिर्णीतत्वान्न तावुच्छेद्यौ स्याताभिति भावः। तदहृष्ट्वा—विशेषमदृष्ट्वा कारणरूपसंशयभ्रमावनुच्छेद्याविति शेषः। कारणत्वस्य केवलाक्षागम्यत्वेपि चिह्नान्तरसहकृताक्षगम्यत्वं स्यादित्याशङ्क्याह *तदिति * यस्य विषयस्यान्वयव्यतिरेकादेश्चिह्नस्यापि अवगमो ज्ञानमक्षस्य सहकारि कारणं वाच्यं तस्यैवार्थस्य कारणत्वविषयत्वे सम्भवति तद्व्यतिरिक्तकारणत्वविषयत्वन्न कल्पनीयं गौरवादित्यर्थः। केचिदेकमेवेदं ग्रन्थमिच्छति तस्मिन् पक्षे दूषणान्तरमाहेति सम्बन्धः।

हेतुत्वधियः प्रत्यक्षदृष्टः सहकारिविषयो न सम्भवति व्योमादौ यत्र हेतुत्वमनुमेयं तत्र व्यभिचारादिति शङ्कते।

१०४ व्यञ्जकाननुगमेऽपि व्यङ्ग्यकारणत्वमनुगतमितिशङ्कानिरासः

तस्यान्वयानुविधानादेरनुमेयहेतुत्वे व्योमादावनुपपत्तेरतदन्यत्वसिद्धिरिति चेन्न। अन्योन्याश्रयापत्तेः। प्रत्यक्षस्यान्यस्मिन्विषये सिद्धेऽन्यत्र दृष्टान्तेन तदनुमानं तत्सिद्धौ च प्रत्यक्षस्यान्यविषयतासिद्धिः तस्य चानागन्तुकत्वे प्रागपि 'तत्सत्त्वादस्तीतिमतिवत्करोतीतिप्रमापातः। आगन्तुकत्वे च तदुत्पत्तेः प्राक् कारणत्वं क्वापि न स्यात्। तथाऽप्यजातत्वे घटाद्यपि किं न तथा स्यात्। व्यावृत्तेषु तेष्वनुगतौ च सर्वं प्रति सर्वकारणत्वापातात्।

प्रतिकार्यव्यक्ति तत् पृथगिति चेन्न। साधारणस्यापि तद्गतस्य स्वरूपस्य घटादिकारणात्मतयाऽनुवृत्तौ घटकारणत्वस्यापि तन्तुकारणत्वापत्तेः। कारणत्वमात्रेण तदनुगतं रूपं न घटकारणत्वादिनेति चेन्न। घटादिविशेषानुपहितकारणत्वमात्रस्य किंप्रतीत्यनिर्देश्यस्य सद्भावे प्रमाणाभावात् अन्यथा यदि किञ्चित्प्रतिकारणे सामान्यतः कारणत्वं नाम धर्मः स्यात् तदा तस्या एव व्यक्तेः किञ्चित्प्रत्यकारणत्वादकारणत्वमपि रूपं तत्र स्यादित्यनपेक्षितविशेषकारणत्वाध्यासाद्भेदेनैकमात्रमेवोच्छिद्येत।

* तस्येति * अन्योन्याश्रयत्वप्रसङ्ग इति परिहरति * नेति * अन्योन्याश्रयमेव विशदयति * प्रत्यक्षेति * तद्धि गगनादावनुमेयं क्वचित् दृष्ट्वाऽनुमीयते ततश्च घटादिरेव प्रत्यक्षदृष्टो हेतुत्वधर्मिदृष्टान्तश्चेत् घटादौ प्रत्यक्षेण हेतुत्वाख्यं धर्मान्तरं गृह्यत इति सिद्धे तेन दृष्टान्तेन गगनादौ तत्सिद्धिः तत्सिद्धौ च घटादौ प्रत्यक्षस्यान्वयव्यतिरेकानुविधानादिना व्यतिरिक्तकारणत्वविषयत्वमिति परस्पराश्रय इत्याशयः। तत्कारणं नित्यमनित्यं वेति विकल्प्याद्यं दूषयति * तस्येति * दण्डादौ यथा सदिति मतिरस्ति तथा घटोत्पादात्प्रागपि कारणत्वस्य सत्त्वात्करोतीति मतिप्रसङ्ग इति यावत्। द्वितीयं प्र-

१ स्तम्भेति का० मु०पु० पा०।

त्याह * आगन्त्विति * उत्पत्तिमत्वे कारणत्वस्य कारणत्वोत्पत्तेः प्राक्किमपि कारणं न स्यात्कारणत्वस्यैकत्वात्तथाच कारणत्वोत्पत्तिरपि कारणाभावादेव न भवेदिति भावः । यद्यपि कारणस्याऽकारणत्वं नास्ति तथापि तदकारणादेव जायत इत्याशङ्क्य घटादिरेव तर्हि कारणव्यतिरेकेण किं न जायेतेत्याह * तथापीति * प्रतिकार्यव्यक्ति कारणत्वमनुगतं व्यावृत्तं वेति विकल्प्याद्ये दोषमाह * व्यावृत्तेष्विति * व्यावृत्तेषु घटपटकारणेषु दण्डवेमादिषु सर्वत्रानुगतं कार्यमात्रं प्रति कारणत्वं यद्यस्ति तर्हि पटकारणवेमादेः घटादौ घटकारणदण्डादेश्च पटादौ कारणत्वं स्यादित्यर्थः । द्वितीयं शङ्कते* प्रतीति* घटकारणं पटकारणमिति व्यावृत्तेषु घटपटाकारेणषु कार्यमात्रं प्रत्यनुगतं कारणत्वं नास्ति तेन घटकारणे पटकारणत्वधर्माभावान्न पटकारणत्वप्रसङ्ग एवमितरत्रापीत्याशयः । पृथिवीत्वाप्त्वादेरपरसामान्यरूपत्वेपि पृथिव्यादिषु द्रव्यं द्रव्यमित्यनुगतप्रत्ययबलात् द्रव्यत्वाङ्गीकारात्कारणं कारणमित्यनुगतबुद्धिबलात् घटपटकारणानुगतस्य कारणत्वस्य सामान्यस्याभ्युपेयतया घटकारणसाधारणस्य घटकारणात्मतयानुत्पत्तौ घटकारणत्वस्य पटादिसाधारणकारणैक्यात् पटादिकारणत्वापत्तेरिति परिहरति * नेति * कारणं कारणमित्यनुगतबुद्ध्या कारणत्वमात्रमनुगतं गृह्यते नतु घटकारणत्वमनुगतं तेन गृह्यते कारणत्वस्यानुगतमेव कारणतामात्रं घटादिकारणस्य भवति

ननु घटकारणत्वमिति कथमतिप्रसङ्ग इति शङ्कते *कारणेति* घटाद्याकारेणाविशेषितस्य कारणत्वमात्रस्य निष्प्रतियोगिकस्य सद्भावे प्रमाणाभावात् घटकारणत्वानुगम एव वाच्य इति प्रसङ्गतादवस्थ्येन परिहरति *घटादीति* निर्देशो न विद्यते यस्य तदनिर्देशम्। एतदेवानिष्टद्वारेण व्युत्पादयति *अन्यथेति* घटकारणे किञ्चित्प्रतियोगिविशेषानुपाधौ कारणत्वमात्रम यदि स्यात्तदा तेनैव न्यायेन प्रतियोगिविशेषानुपहितमकारणत्वं धर्म्मः स्यादित्यनपेक्षितविशेषयोर्विशेषानुपहितयोः सामान्यतः कारणत्वाकारणत्वयोरेकधर्मिसंसर्गाद्विरुद्धधर्माध्यासस्य भेदहेतुत्वादेका कारणव्यक्तिः का चिदपि न सिद्ध्येदित्यर्थः ।

विकल्पान्तरमुखेन कारणस्यानिर्वाच्यतामाह ।

१०५ विकल्पेन कारणस्यानिर्वाच्यत्वम् ।

किञ्च कार्यव्यक्तेः कारणमस्ति नवा, नचेन्नित्यसत्त्वासत्त्वयोरन्यतरप्रसङ्गः । अस्तिचेत् किं तत् कारणं। व्यक्तिविशेष इति चेन्न । पूर्वभावस्य रासभादिसाधारणत्वात् तां कार्यव्यक्तिं प्रति तस्याः किं तत्कारणत्वम् । स्वरूपमेवेतिचेन्न । तस्य व्यावृत्तत्वात् । तस्यास्तत्कारणात्मत्वे चातदात्मनां तत्कारणत्वविरोधात् तत्कारणत्वस्य च समवाय्यसमवायिनिमित्तभूतानेकव्याक्तिसाधारणत्वात् अनेकस्य चैकानुगतव्यवहारबुद्धिनिदानत्वे गोत्वाद्युच्छेदप्रसङ्गस्य दर्शितत्वात् ।

* किञ्चेति * एका या घटरूपा कार्यव्यक्तिस्तस्याः कारणमस्ति नवेति विकल्पार्थः । अन्वयव्यतिरेकयोः सामान्याकारेण सम्भवाद्विशेषस्य कारणं नास्तीति द्वितीयमनूद्य दूषयति * नेति * आकाशविषाणयोरिव कारणशून्ययोर्नित्यसत्वासत्वयोरन्यतरप्रसङ्गो न कादाचित्कत्वसम्भव इत्यर्थः । कादाचित्कत्वनियामकं कारणमस्तीति प्रथमकल्पं शङ्कते *अस्तीति* तर्हि तस्य कारणं सामान्यरूपं विशेषरूपं वेति विकल्पयति * किमिति * कारणसामान्यस्य कार्यसामान्यप्रयोजकत्वात्कार्यविशेषे कारणविशेषः प्रयोजक इति शङ्कते * व्यक्तीति * कार्यव्यक्तिं प्रति कारणव्यक्तेः कारणत्वाङ्गीकारे किन्तत्कारणत्वमित्याकाङ्क्षायां पूर्वभावस्य कारणत्वेनाभिधाने घटव्यक्तिं प्रति मृद्व्यक्तेरिव गर्दभव्यक्तेरपि कारणत्वप्रसङ्गात्कार्यव्यक्तिं प्रति कारणव्यक्तेः पूर्वभावमात्रं कारणत्वन्न भवतीत्यन्यदेव तद्वक्तव्यमापद्यत इति परिहरति *पूर्वेति * घटव्यक्तेः पूर्वमवास्थितमदः स्वरूपमेव कारणं नच तद्रासभेऽस्तीति शङ्कते * स्वेति * स्वरूपस्य व्यावृत्तत्वाद्बहुकारणव्यक्तिष्वनुगतप्रत्ययवेद्यकारणत्वं न स्यादिति दूषयति * नेति * दोषान्तरमाह *तस्या इति* (एकस्याइति) एकस्याः कारणव्यक्तेरेकां कार्यव्यक्तिं प्रति. कारणत्वस्य स्वभावत्वे तदात्मताशून्यानामन्यासां कारणव्यक्तीनां कार्यव्यक्तिं प्रति कारणत्वं विरुध्येत नहि य एकस्या व्यक्तेः स्वभावः स एवान्यस्याःसम्भवतीति भावः ।एकां कार्यव्यक्तिं प्रति

नास्त्येवानेकस्याः कारणव्यक्तेः कारणत्वमित्याशङ्क्याह *तदिति* समवाय्यादीनां परस्परव्यावृत्तान्येव स्वरूपाणि कारणत्वानि तैरेव बहुष्वनुगतकारणत्वप्रत्ययव्यवहारौ भविष्यत इत्याशङ्क्याह*अनेकेति* परस्परव्यावृत्तस्य स्वरूपत्रितयस्य त्रितयानुगतव्यवहारजनकत्वे गोत्वाद्यनङ्गीकारेऽपि खण्डादिभिरेव तद्व्यवहारोपपत्तेर्गोत्वाद्युच्छेदः स्यादिति पूर्वं दर्शितमित्यर्थः।

तर्हि सर्वेष्वनुगतं नियतपूर्वभावित्वन्तत्कारणत्वमस्तु तथासति नातिव्याप्तिरपि रासभादौ नियतत्वाभावादिति शङ्कते ।

१०६ रासभादिव्यावृत्तकारणलक्षणखण्डनम् ।

नियतपूर्वभावित्वमिति चेन्न । व्याप्त्यर्थस्य नियमस्यैकस्य सर्वत्र व्यक्तावसम्भवात् पूर्वमात्रस्य चातिप्रसञ्जकत्वात् । तज्जातीयं प्रति नियततज्जातीयत्वमिति चेन्न । तस्य तज्जातीयव्यक्त्यन्तरसाधारण्यात् । नियततज्जातीयत्वे सति तत्पूर्वत्वमिति चेन्न । तत्समानकालोत्पत्तिककार्यव्यक्तिशतजनकव्यक्तिशतसाधारण्यात् । तथाऽभ्युपगमे चैकसमवाय्यादिनाशे सर्वतत्कार्यनाशप्रसङ्गः । तत्कालतज्जातीयसर्वसामग्रीतः सर्वतत्कालतज्जातीयोत्पत्तौ सामग्रीभेदस्य कार्यभेदहेतुतया प्रत्येकमिलितसामग्रीत्वविकल्पेन कार्यव्यक्त्यभेदप्रति-

व्यक्तिस्वरूपभेदयोरन्यतरप्रसङ्गश्च ।

*नियतेति* असम्भवेन दूषयति *नेति* नियतशब्देनावश्यम्भावो विवक्षित उत व्याप्तिर्व्याद्यस्तदा सर्वेषु कार्येष्वाकाशादीनां कारणत्वप्रसङ्गो, यदि व्याप्तिस्तदैकस्यां व्यक्तावुत सर्वासु, यद्येकस्यां तदा गोर्योनेर्जायमानगोः पोतस्य च व्याप्तिवत्तत्पूर्वभाविनां वालादीनां कारणत्वप्रसङ्गो, यदि सर्वासु तदाऽसिद्धिः सर्वव्यक्तिग्रहणायोगादित्यर्थः । असम्भवपरिहारार्थं यदि नियतेतिविशेषणं नोपादीयते तर्हि रासभेऽतिप्रसङ्ग इत्याह* पूर्वेति * जात्यालिङ्गितत्वेन व्यक्तीनां नियतत्वसिद्धौ कारणत्वसिद्धिरिति शङ्कते *तदिति* घटत्वजात्यालिङ्गितव्यक्त्युत्पत्तौ याऽनुगता मृत्त्वजातिस्तदालिङ्गितत्वङ्कारणत्वमित्यर्थः।अतिप्रसङ्गेन दूषयति * नेति * एकस्मिन् घटे जायमानेऽतीतानागतवर्त्तमानमृदां मृज्जातीयत्वनियतत्वात्कारणत्वप्रसङ्ग इत्यर्थः। उक्तातिव्याप्तिपरिहृत्यै च लक्षणं विशेष्यत इति शङ्कते *नियतेति* नियतजातीयत्वे सति तद्व्यक्तिपूर्वभावित्वं तत्कारणत्वं नचैतन्मृदाद्यन्तरेऽस्ति तज्जातीयेऽपि तत्पूर्वत्वाभावादित्यर्थः । एकस्मिन्नेव क्षणे जायमानानेकजातीयकार्यव्यक्तीः प्रति तत्पूर्वभाविमृद्व्यक्तीनां सर्वासामपि कारणत्वं स्यान्नियतजातीयत्वात्पूर्वभावाच्चेति परिहरति * नेति * तेनैककार्येण समानकाले उत्पत्तिर्यस्य कार्यव्यक्तिशतस्य तज्जनककारणव्यक्तिशतस्य साधारण्यात्सर्वेकार्यं प्रतीतियोजना । अस्तु तथेत्यपि

न वाच्यमित्याह *तथेति* समवायिनाशादसमवायिनाशाच्च कार्यनाश इति तार्किकैरङ्गीकारादेकसमवाय्यादिनाशे सर्वस्यैककालीनकार्यस्य नाशः स्यात्सर्वपूर्वभाविनः कारणत्वाविशेषादित्यर्थः। किञ्च समानजातीयायाः सर्वस्या अपि सामग्रीतः सकाशात्सर्वस्य समानकालीनैकजातीयकार्यस्योत्पत्तिस्वीकारे त्वया वाच्यं किं मिलितसर्वसामग्र्या जनकत्वं प्रत्येकं वाऽऽद्ये कार्यव्यक्तीनामभेदप्रसङ्गो द्वितीये त्वेककार्यस्वरूपेऽपि भेदप्रसङ्गः सामग्रीभेदस्य प्रयोजकत्वादिति। स एव कालो यस्याः सामग्र्याः सा तत्काला सैव जातिर्यस्याः सर्वसामग्र्या सा तज्जातीयसर्वसामग्री तत्काला चासौ तज्जातीया चेति विग्रहः। सर्वं च तत्कालं च तज्जातीयं चेति तथोक्तं तस्योत्पत्ताविति यावत्। तत्कालतज्जातीयसर्वसामग्रीतः सर्वतत्कालतज्जातीयोत्पत्ताविष्टायां कार्यव्यक्त्यभेदप्रतिव्यक्तिस्वरूपभेदयोरन्यतरप्रसङ्ग इति सम्बन्धः। तदुपपादनं सामग्रीत्यादि।

एवं कारणत्वं सामान्येन निरस्य वैशेषिकाभिमतं समवायित्वं कारणगतविशेषं निरस्यति।

१०७ समवायिकारणत्वनिरासः।

समवायित्वं प्रत्यपि साधर्म्यानुविधायिनि नियमेऽत्यापत्तेः। व्यावृत्तत्वे चाऽनियमात्। नियततज्जातीयत्वे सति तत्सादेश्यमिति चेन्न। समवायिदेशापेक्षया कार्य्यकारणयोः सादेश्यनियमानभ्युपगमात् संयोगिदेशापेक्षया

गुणादावसम्भवात्। यथा कथञ्चित्सादेश्यमात्रस्य चातिप्रसञ्जकत्वात्। अदृष्टादेर्भिन्नदेशस्यापि कारणत्वोपगमे सर्वं प्रति सर्वकार्य्यसामग्र्याः कारणत्वापातात् पूर्वभावनियमादेस्तुल्यत्वात्। अनुगते च रूपेऽन्वयव्यतिरेकसम्भवात् व्यक्तिगतसामान्ययोरेव कार्य्यकारणत्वापत्तेः। तद्गतसामान्ययोरेवान्वयव्यतिरेकादिनियमः[1] व्यक्त्योश्च कार्यकारणतेति लक्ष्यलक्षणभाववैयधिकरण्यात्। सामान्याकारेप्रविष्टां[2] व्यक्तिमादायान्वयव्यतिरेके विशेषस्याकारणत्वं स्यात् सामान्याकारेण च पूर्वसतः कार्य्यत्वं, द्रव्यसामग्र्या वृक्षसामग्र्या शिंशपासामग्रया च पृथग्व्यक्तिजननापत्तेः पृथगेव तासां सामग्रीत्वात् सर्वासाञ्च व्यक्तिं प्रत्येव जनकत्वात् द्रव्यत्वादीनामजन्यत्वात्। शिंशपासामग्र्या वृक्षसामग्रीसहिताया एव सामग्रीभावान्न पृथक् शिंशपाव्यक्तिरिति चेन्न। वृक्षसामग्र्याः शिंशपासामग्रीमतीत्यापि शालतमालादेर्वृक्षस्य[3] जननात्पृथक्तया वृक्षव्यक्तिजननापत्तेः। सापि शिंशपासामग्री तन्मिलिता जनिकेति न व्यक्तिभेद इति चेन्न। शिंशपार्थातिरिक्तवृक्षार्थाभावापत्तेः। वृक्षशिंशपासामग्र्योरेकीभूतयोर्जननाद्वि-

1 नियमे व्यक्तेश्चेति पु० पा० ।
2 सामान्याकारेण प्राविष्टामिति का० मु० पु० पा० ।
3 तालादेरिति का० मु० पु० पा० ।

शेषाद्वृक्षसामग्री च वृक्षजनन एव कथं कचिच्छिंशपा-
सामग्री कचित्तमालसामग्रीमपेक्षत इति स्यात् । एकस्य वृक्षलक्षणस्य कार्यस्य सामग्रीभेदे स्वरूपभेदापातात् । अननुगतायाश्च वृक्षसामग्रीत्वे पृथग्वृक्षव्यक्तेः पृथक्-शिंशपाव्यक्तेरुत्पत्त्यापत्तेरित्यादि स्वयमूहनीयम् ।

*** समवायित्वमिति * यत्र समवैति कार्यं तत्समवायिकारणमित्याहुस्तत्र कार्यात्सर्वेषामन्यत्वभेदाविशेषे कथं कुत्र चिदेव कार्यं समवैति। यत्सालक्षण्यं कार्यस्य तत्र समवायो यथा पार्थिवस्य पार्थिवेष्विति, तर्हि घटस्य दण्डादिषु समवायः किं न स्यात्पार्थिवत्वेन साधर्म्यात् व्याप्त्यविशेषादनिष्टप्रसङ्गनातिव्याप्तिरिति ***

---

*१ समवायित्वं प्रत्यापि साधर्म्यानुविधायिनि नियमे व्यापत्तेरित्यारभ्य–इति चेन्न वृक्षसामग्र्या शिंशपासामग्रीमपीत्येतदन्तमूलग्रन्थव्याख्यानं विद्यासागर्यां नोपलभ्यते मन्ये तत्त्रुटितमेव स्यात् । सो साइटीपुस्तके अत्र गुण्डा— ग्रन्थपूरणपात्रं पठित्वा त्रुटितविद्यासागरीव्याख्यानं व्याख्येयमित्यनुसन्धेयम् इति लिखितं परं तत्पूरणपत्रमस्माभिरन्विष्यापि न लब्धमिति तावदंशस्य शङ्करमिश्रव्याख्यानमुपन्यस्यते—

इदानीं समवायिकारणं विशिष्य खण्डयति * समवायित्वमिति * पटं प्रति तन्तुत्वेन समवायिकारणत्वे सर्वेषां तन्तूनामेकपट समवायित्वापत्तिः तथा च किञ्चित्तन्तुनाशे सर्वपटनाशः स्यादित्यर्थः । तत्तन्तुत्वेन तु कारणत्वं दुर्ग्रहमित्याह * व्यावृत्तत्वे इति * अनियमान्नियमग्रहाभावात्सामान्यावच्छेदेनैव तद्ग्रहादितिभावः । ननु यत्पटसमानदेशो यः तन्तुः स तत्पटसमवायिकारणमिति शङ्कते * नियतेति * तन्तुपटयोरेकत्रांशे वृत्तौ सादेश्यं स्यान्नचैवं त्वयाऽभ्युपगम्यत इति परिहरति * समवायीति * ननु समवायेन

सम्बन्धेनावयवावयविनोः सादेश्यं न ब्रूमः किन्तु संयोगेन तथाच तन्तुपटयोर्भूतले सादेश्यं सम्भवत्येवेत्याशङ्क्याह * संयोगीति * एवं सति गुणकर्मणोः समवायिकारणासङ्ग्रहः तयोः संयोगाभावादित्यर्थः । नन्ववयवावयविनोरिव गुणगुणिनोरपि कथञ्चित्सादेश्यमस्त्येवेत्याशङ्क्याह * यथा कथञ्चिदिति * किञ्च त्वयाऽदृष्टादीनां भिन्नदेशानामपि नियतपूर्ववर्त्तिजातीयत्वेन कारणत्वमभ्युपगम्यते इति सर्वं सर्वत्र कारणं स्यादित्याह * अदृष्टादेरिति * पूर्वभावेति* वाराणसीवर्तिदण्डस्य पाटलीपुत्रीयपटजातीयपूर्ववर्तित्वेन कारणत्वं स्यात्सादेश्यत्वस्य त्वयैव तिरस्कृतत्वादित्यर्थः । किञ्च दण्डव्यक्तिघटव्यक्त्योः कार्यकारणभावो न स्यादेव पूर्ववर्त्तितानियमस्य सामान्यद्वयमात्रविश्रान्तत्वादित्याह * अनुगत इति * ननु निर्विशेषं न सामान्यमिति सामान्यावच्छेदेनापि व्यक्तीनामेव कारणत्वं पर्यवसन्नमित्याशङ्क्याह * तद्गतेति * सामान्ययोर्नियतपौर्वापर्यलक्षणं कार्यकारणभावलक्षणं दण्डघटादौ लक्ष्ये नास्तीति वैयधिकरण्यमित्यर्थः । ननु तथापि घटजातीयनियतपूर्ववर्तित्वमेव कारणत्वं प्रमाणेन सामान्यस्य परिच्छेद्यमिति विशेषयोरपि कार्यकारणभावः स्यादेव विशेषगर्भत्वात्सामान्यस्येत्याशङ्क्याह * सामान्याकारेणेति * एवं सति विशेषः कारणं न स्यादेव कारणताग्राहकप्रमाणस्य विशिष्ट एव प्रवृत्तेः सामान्यविशिष्टं वस्त्वन्तरमेव कारणं स्यान्न दण्डादिरित्यर्थः * सामान्याकारेणेति * पूर्वसत एव कार्यत्वं स्यादिति सत्कार्यवादापत्तिरथवा पूर्वं सत एव घटस्य भाविदण्डकार्यत्वं स्यादित्यर्थः । किञ्च द्रव्यं वृक्षः शिंशपेति सामानाधिकरण्यप्रत्ययो न स्यात्सामग्रीत्रयेण कार्यत्रयजननासम्भवादित्याह * द्रव्यसामग्र्येति * अत्र हेतुमाह * पृथगेवेति * ननु सामग्रीत्रयेण वृक्षत्वशिंशपात्वादिधर्मत्रयं पृथगेव क्रियते व्यक्तिस्त्वभिन्नेत्याशङ्क्याह * सर्वासामिति * सामान्यत्रयमजन्यमेव तेन तद्भेदो नापाद्यते किन्तु व्यक्तिभेद एव सामग्रीभेदादापाद्यत इत्यर्थः । ननु शिंशपासामग्री वृक्षसामग्रीमिलितैव जनिकेति शिंशपा कथं वृक्षभिन्ना स्यादित्याशङ्कते * शिंशपेति * शिंशपा वृक्षभिन्ना मास्तु वृक्षस्तत्र शिंशपाभिन्ना भवतु नहि वृक्षसामग्र्या अपि शिंशपासामग्रीसाहित्यनियम इति परिहरति * वृक्षसामग्र्येति *

शिंशपासामग्री वृक्षसामग्री च मिलिते सामग्र्यैक्यं भजमाने चेत्कार्यं जनयतस्तदा शिंशपासामग्रीं विहाय वृक्षसामग्र्या तमालतालादिवृक्षस्य जनिर्न स्यात्तथा च दर्शनविरोध इत्याशयः । सालो महावृक्षः । यद्यपि वृक्षसामग्री शिंशपासामग्रीमतीत्यापि वर्त्तते तथापि शिंशपासामग्री वृक्षसामग्री मिलितैव कार्यं जनयतीति सामग्रीभेदाभावान्न वृक्षव्यक्तेः शिंशपाव्यक्तिभेद इति शङ्कते * सापीति * शिंशपासामग्री वृक्षसामग्रीमिलितैका सामग्री भूत्वा शिंशपाव्यक्तिं जनयति चेत्तदा तस्याः सामग्र्याः शिंशपाव्यक्तिसामग्रीत्वात्तया जातायाः शिंशपाव्यक्तित्वादेव वृक्षव्यक्तिसामग्र्या अभावेन वृक्षव्यक्तेरभावाच्छिंशपातिरिक्तवृक्षार्थाभावः स्यादिति दूषयति * नेति * वृक्षसामग्र्या अपि तत्सामग्रीमध्यपतितायाः प्रयोजकत्वात् वृक्षाक्षेपोऽपि स्यादित्याशङ्क्याह * वृक्षेति * शिंशपासामग्र्या वृक्षसामग्रीसहिताया एव जनकत्वनियमात् यथा वृक्षः शिंशपैवं वृक्षसामग्र्या अपि शिंशपासामग्र्याः वृक्षसामग्रीसहिताया एव जनकत्वमेकत्र दृष्टमिति तत्रापि तथा नियमप्रसङ्गेनाशिंशपारूपो वृक्षो न स्यादित्यर्थः । यत्र वृक्षसामग्र्यासमानादिसामग्रीसहिताया वृक्षजनकत्वं न तत्राशिंशपासामग्रीसाहित्यमिति शिंशपासामग्र्यपेक्षा नास्तीति नोक्तदोष इत्यत आह * वृक्षसामग्रीति * काऽनुपपत्तिरित्यत आह * एकेति * शिंशपातमालादिसामग्रीसाहित्येन वृक्षसामग्र्या वृक्षसाम-

ग्रीत्वे शिंशपातत्सामग्रीत्वभेदेन तद्विशिष्टवृक्षसामग्र्या अपि भेदेन वृक्षलक्षणं कार्यमेकं न स्यात्सामग्रीभेदस्य कार्यभेदप्रयोजकत्वादित्यर्थः । सर्वत्राऽव्यभिचारिण्या वृक्षसामग्र्या वृक्षजनकत्वं नतु शिंशपादिसामग्र्यास्ततो न कार्यभेद इत्यत आह *अनुगतेति* शिंशपादिसामग्रीनिरपेक्षाया एव वृक्षसामग्र्या वृक्षजनकत्वाच्छिंशपावृक्षव्यतिरिक्तवृक्षकार्योत्पादः स्यादित्याशयः । किञ्च सामग्री जनिकेति कोऽर्थः किं जनेर्हेतुः कर्त्ता वा। नाद्योजनेर्जन्यत्वेऽनवस्थापातादेकस्योभयहेतुत्वे भेदापातादजन्यत्वे हेतुसम्बन्धायोगात् । न द्वितीयश्चेतनत्वापातात् । क्रियाश्रयत्वमात्रं कर्त्तृत्वं चेत्तदपि प्राधान्येन प्रयोजकत्वेन वा। नाद्योघटे जायमाने कुलालादि जायत इति प्रसङ्गात् । नापि द्वितीयोघटस्यजन्यैश्रयात्प्रागेव सिद्धिप्रसङ्गादितिद्रष्टव्यम् ।

इति कारणत्वखण्डनम् ।

---

एवं कारणलक्षणं निरस्य तद्विशेषणीभूतकालखण्डनमुपक्रमते ।

१०८ कालखण्डनारम्भः ।

नियमे च प्राक्कालीनतयाऽभिधीयमाने प्रागित्यस्य व्यवच्छेद्यौ वर्तमानभविष्यत्कालौ प्राक्कालश्च व्यवच्छेदको विवेचनीयः नच तद्विवेचनं शक्यम् । वर्तमानादिबुद्धय एव स्वविषयवैचित्र्ये प्रमाणमिति चेन्न । तथाहि

---

१ प्राक्कालतयेति का० मु० पु० पा० ।

वर्तमानादिबुद्धेरत्र कोविषयः। कालविशेष इति चेन्न। कालस्य विशेषः स्वाभाविक औपाधिको वा। नाद्यः कालस्य भवद्भिरेकत्वाभ्युपगमात् य एव कालो वर्तमानः प्रतीयते स एव पूर्वं भावीति पश्चात् भूत इति च न प्रतीयेत। त्रिविधस्वभाव एवासाविति चेन्न। भेदप्रसङ्गात् व्यवस्थानुपपत्तिप्रसङ्गाच्च। यदैव वर्तत इति प्रत्ययस्तदैव वृत्तो वर्तिष्यत इति प्रत्ययप्रसङ्गात्।

* नियमे चेति * नियतप्राग्भावित्वं कारणत्वमित्यत्र कारणनियमे प्राक्कालीनतयाऽभिधीयमाने प्रागित्येतत्पदस्य व्यवच्छेद्यौ वर्त्तमानभविष्यत्कालौ विवेचनीयौ। तयोर्व्यवच्छेदकः प्राक्कालोपि विवेचनीयस्तदज्ञाने व्यवच्छेदप्रतिपत्तेरयोगादित्यर्थः। प्राक्कालतानियमे कारणेऽभिधीयमान इति योज्यतां तर्हि इत्यत आह * नचेति * किमत्राशक्यं वर्त्तते वर्त्तिष्यति अवर्त्तिष्टेत्येवंरूपा बुद्धय एव विषयान्विचित्रान्समर्पयन्तीति तत्प्रमाणेन तद्विषयविवेचनं शक्यमिति शङ्कते * वर्त्तमानेति * अतीतानागतबुद्धिभ्यां व्यावृत्ता तया सिद्धा बुद्धिः स्वविषयवर्त्तमानं व्यवस्थापयति बुद्धिव्यावृत्तिश्चार्थव्यावृत्त्यधीनेति परस्पराश्रयप्रसङ्ग इत्यभिप्रेत्य दूषयति *नेति* को विषय इति यत्पृष्टं तद्दर्शयति पूर्ववादी*कालेति*अतीतानागतकालविशेषादन्यः कालोवर्त्तमानबुद्धिविषय इत्यर्थः।कालविशेष एव दुर्निरूप इतिपरिहरति*नेति*स्वाभावि-

को वास्तवो वा विवक्षित उतोपाध्यवच्छेदेनेत्यर्थः। अपसिद्धान्तप्रसङ्गेन प्रथममपाकरोति * नाद्य इति * तर्हि प्रमाणप्राप्तत्वादङ्गीक्रियते कालभेदः प्रामाणिकस्यैव सिद्धान्तत्वादित्यत आह *य एवेति* यदि स्वाभाविको भेदस्तदा वर्त्तमानात्कालादन्य एवातीतोऽनागतो वेति वर्त्तमानः कालः कालान्तरेऽप्यतीत इत्यनागत इति वा न प्रतीयेतेत्यर्थः। अतीतानागतवर्तमानस्वभावोऽपि ततो नाऽतीतानागतवर्तमानगतत्वेन प्रतीतिविरोध इति शङ्कते * त्रीति * एकस्वभावमेकमुच्यते नानास्वभावं च नानोच्यते कालस्य त्रिविधस्वभावत्वे भेदस्य स्वाभाविकत्वप्रसङ्ग इति परिहरति * नेति * दोषान्तरमाह * व्यवस्थेति * त्रिविधस्वभावत्वे यदैव वर्त्तत इति प्रतीयते तदैवातीतादि न प्रतीयते कालान्तर एव तु तथा प्रतीयत इति या व्यवस्था सा न सिद्ध्येदित्यर्थः। तामेव स्पष्टयति * यदेति *

उपाध्यनिरूपणे द्वितीयकल्पोऽनुपपन्न इत्याह।

१०९ औपाधिकस्य कालनिष्ठविशेषस्य खण्डनम्।

द्वितीयश्चेदुपाधिरभिधीयताम्। सूर्य्यादिक्रियासम्बन्धभेदः स इति चेन्न। भूतभविष्यतोरपि क्रियासम्बन्धप्रत्ययस्यावश्यं वक्तव्यत्वात्। य एव दिवसः सूर्य्यगतिविशेषावच्छिन्नो वर्त्तत इति प्रतीतः स एव हि तदवच्छिन्नो वृत्त इत्यवगम्यते वर्त्स्यतीति च, न हि निर्वि-

शेषस्य कालस्य तदतीतत्वं प्रतीयतेऽनागतत्वं वा किन्तूपाधिविशेषेणैवावच्छिन्नस्य येनैवासौ पूर्वं दिनान्तरात् व्यवच्छिन्नो वर्त्तत इति प्रतीतः तेनैवोपाधिना तत एव व्यवच्छिन्नो वृत्त इति वर्त्तिष्यत इति च कदाचित् ज्ञायते । ननु सत्यमेतत् परं यदा तदुपाधिसम्बन्धस्तस्य[1] स्वरूपेणावतिष्ठमानस्तदा वर्त्तमानप्रत्ययः यदा स एव विनष्टो भवति तदा भूतप्रत्ययो यदाऽनागतस्तदा भविष्यत्प्रत्यय इति । नैतदस्ति। यद्यत्र लटोविवक्षितोऽर्थस्तदा तज्ज्ञानस्यैव तज्ज्ञानोपायत्वमित्यात्माश्रयानवस्थयोरन्यतरप्रसङ्गः । विनष्टादिशब्दाश्चातीतादिपर्यायास्तेषां सर्वेषामेवार्थे निरूप्यमाणे तन्मध्यपतितमेकं शब्दं प्रयुज्य तन्निरुक्तिं कुर्वाणः श्लाघनीयप्रज्ञो मातापितृमानासि ।

*द्वितीय इति* उपाध्यनिरूपणमसिद्धं सूर्यादिक्रियासम्बन्धस्यैवोपाधित्वादिति शङ्कते * सूर्यादीति * आदिग्रहणेन चन्द्रादिग्रहः । अतीतानागतक्रियाव्यतिरिक्तक्रियासम्बन्धो वर्त्तमानत्वे कालस्योपाधिरित्यर्थः। अतिप्रसङ्गेन दूषयति * नेति * यथा वर्त्तमानकालस्य सूर्यगत्यादिसम्बन्धविशेषोपाधिना वर्त्तत इति प्रत्ययविषयाविषत्वं तथा भूतभाविष्यत्कालयोर

१ सम्बन्धोऽस्येति का० मु० पु० पा० ।

पि तस्यावश्यवक्तव्यतया नासावुपाधिरित्यर्थः। उपाधेर्वोपहितस्य वा भेदेनैकरूपप्रत्ययविषयत्वप्रसङ्गो नास्तीति चेन्मैवम्। योऽयं वर्त्तमानो दिवसः सूर्यादिगतिविशेषावच्छिन्नो वर्त्तत इति प्रतीयते स एव दिवसस्तेनैव सूर्यादिगतिविशेषावच्छिन्नो वर्त्स्यन्ववर्त्तिष्यमाण इति प्रतीयते यत इत्याह *य इति* अत्रैवोपपत्तिमाह *नहीति* कालमात्रविषयत्वेऽतीतानागतप्रतीत्योरेकरूपत्वप्रसङ्गादुपाधिविशेषावच्छिन्नस्यैव तथा प्रतीतिरित्यर्थः। तथापि किमित्यत आह *येनेति* सूर्यादिगतिसम्बन्धस्योपाधेरपि त्रिविधप्रत्ययहेतुत्वं न सम्भवतीत्युक्तं तत्रोपाधिविशेषं शङ्कते *नन्विति* उपाधिसम्बन्धत्रैविध्यात् त्रिविधप्रत्ययविषयत्वं भवतीत्यर्थः। अवतिष्ठमान इति लडादेशस्य शानचो रूपं। तत्र यदि लटोऽर्थो वर्त्तमानता यद्यविवक्षितस्तदोपाधिसम्बन्धमात्रं वर्त्तमानप्रत्ययहेतुरिति कालान्तरेऽपि वर्त्तमानप्रत्ययप्रसङ्गाद्व्यवस्था न स्याद्यदि विवक्षितस्तदोपाधिसत्त्वस्य वर्त्तमानत्वज्ञानात्कालस्य वर्त्तमानत्वं ज्ञातव्यं तच्च यद्येकमेव वर्त्तमानत्वं तर्हि तज्ज्ञानात्तज्ज्ञानमित्यात्माश्रयो यद्युपाध्यन्तरकृतं वर्त्तमानत्वमन्यत्तदाऽनवस्था स्यादित्यभिप्रेत्य दूषयति *नेति* यदुक्तमुपाधौ विनष्टे भूतप्रत्ययोऽनागते भविष्यत्प्रत्यय इति तत्राह *विनष्टादीति* तेन तात्पर्यवत्त्वेन तदर्थस्यैव निरूप्यमाणत्वात्तदर्थस्यैवाज्ञानात्तद्विशेषणविशिष्टलक्षणस्याज्ञानादसिद्धिरित्याशयः।

लक्षणान्तरं शङ्कते।

११० अतीतानागतवर्तमानानां लक्षणान्तरनिरासः।

क्रियावच्छिन्नः कालो वर्तमानः तत्प्रागभावावच्छिन्नो भूतः तत्प्रध्वंसावच्छिन्नो भविष्यन्निति चेन्न। अतीतानागतप्रतीतिकालोऽपि क्रियावच्छिन्नः प्रतीयत इति वर्तमानप्रत्ययप्रसङ्गस्य तादवस्थ्यात् क्रियानवच्छिन्नस्य तत्प्रागभावप्रध्वंसभावावच्छेदानुपपत्तेः।

* क्रियेति * नावतिष्ठमानत्वादिकं लक्षणविशेषणं किन्तु क्रियावच्छेदमात्रं, अतीतादिलक्षणे तु न विनष्टादिपदोपादानं किन्तु तदुपाधिप्रागभावावच्छिन्नो भूतस्तत्प्रध्वंसावच्छिन्नोऽनागत इति नोक्तदोष इत्यर्थः। अतिप्रसङ्गेन निराकरोति * नेति * अतीतानागतप्रत्यया यस्मिन्काले जायन्ते तदानीमपि तस्य कालस्य क्रियाप्रतीतेर्वर्त्तत इति प्रत्ययप्रसङ्गतादवस्थ्यमित्यर्थः। अतीतादिप्रतीतिकाले क्रियाप्रागभावाद्यवच्छेदान्न वर्त्तमानप्रत्ययप्रसङ्ग इत्याशङ्क्याह * क्रियेति * यस्यैव क्रियावच्छेदो गृह्यते न तस्यैव प्रागभावाद्यवच्छेदोपि विरोधान्निर्विशेषणक्रियावच्छेदप्रत्ययहेतुत्वेऽतीतादिप्रतीतिकालेपि प्रसज्यतैव वर्त्तमानप्रत्यय इत्यर्थः। तस्य कालस्य क्रियानवच्छिन्नस्यैव निर्विशेषणस्यैव तत्प्रागभावाद्यवच्छिन्नत्वमिति योजनीयम्।

यदुक्तं प्रागभावाद्यवच्छिन्नो भूत इति तद्दूषयति॥

१११ प्रागभावप्रध्वंसलक्षणखण्डनम्।

प्रागभावश्च प्रागर्थानिरुक्तौ कथं न दुरधिगमः।

प्रध्वंसस्याऽपि प्रागभावात्कथं विशेषो वक्तव्यः । अभावो विनाशी प्रागभाव उत्पत्तिमान् प्रध्वंस इत्यनयोर्विशेष इति चेन्न । कोहि प्रागभावस्य विनाशो येन विनाशीत्युच्यते । यदि प्रतियोगिभूतो घटादिः प्रध्वंसस्यापि प्रागभाववत्प्रतियोगीति सोपि विनाशी प्राप्तः । उत्पत्तिमांश्च प्रध्वंस इत्युत्पत्तिपदार्थो विवेचनीयः यद्यसावसतः सत्त्वं तच्च सामान्यं तदाऽभावेऽसम्भव एव । अथ स्वरूपसत्त्वं तदा प्रागभावेऽपि प्रसङ्गः । तस्यापि कदाचिदसत्त्वात् । पूर्वमसतः पश्चात्सत्त्वं विवक्षितमिति चेन्न । पूर्वेदानींपश्चादर्थस्यैवानिरूपणात् । एतेन कारणावच्छिन्नं सत्त्वमुत्पत्तिरित्यपि निरस्तम् । पूर्वापरनिर्वचनमन्तरेण कारणार्थानिर्वचनात् ।

* प्रागिति * आत्माश्रय इत्याशयः । पूर्वमविद्यमानोऽभावः प्रध्वंस इति प्रध्वंसस्य प्रागभावो वाच्यः सच न सम्भवति प्रागर्थानिरुक्तेरतः प्रध्वंसावच्छिन्नोभविष्यन्नित्यपि लक्षणमसिद्धमित्याह *प्रेति* लक्षणभेदात्तयोर्विशेषाधिगम इति शङ्कते*अभाव इति* उत्पत्तिमानभाव इत्यनुषङ्गः।कृत्यं स्पष्टम्। प्रागभावस्य विनाशानिरुक्त्या लक्षणासिद्धिरिति परिहरति * नेति * विनाशद्वयं हि प्रागभावस्य भवद्भिरिष्यते घटश्च ध्वंसश्चेति अतो येन घटेन प्रध्वंसेन च विनाशीत्युच्यते तयोर्मध्ये कोत्रेष्ट इत्यर्थः । प्रतियोगिपक्ष-

मनुवदति *यदीति* तर्हि घटप्रतियोगित्वं प्रध्वंसस्याप्यस्तीति सोपि विनाशी प्राप्त इति दूषयति *प्रध्वंसेति* नच प्रागभावस्य विनाशो नाम स्वध्वंस एवेति कल्प्यम् । प्रागभाववानभावो ध्वंस इत्यङ्गीकारादन्योन्याश्रयप्रसङ्ग इति द्रष्टव्यम् । एवं प्रागभावलक्षणं निरस्य प्रध्वंसलक्षणं निराचष्टे *उत्पत्तीति* उत्पत्तेर्ध्वंसलक्षणे विशेषणत्वात्तन्निर्वचनं कार्यं तच्चाशक्यमित्यर्थः । तथाहि असतः सत्त्वमुत्पत्ति, रुत कारणावच्छिन्नसत्वमिति विकल्प्याद्यमनुवदति *यदीति* तदपि सत्वं सामान्यरूपमुत स्वरूपसत्वमिति विकल्प्य प्रथममनूद्यासम्भवमाह *तदेति* अभावस्य निःसामान्यत्वादित्यर्थः । द्वितीयं शङ्कते *अथेति* असतः सत्वमात्रं जन्म प्रागसतः सत्वं वेति विकल्प्य, प्रथमे प्रागभावस्यापि जन्मप्रसङ्गस्तस्य प्रतियोग्युत्पत्तेरूर्ध्वमसत्वात्पूर्वं स्वरूपसत्वाच्चेत्याह *तदेति* प्रागसतः सत्तासमवायो जनिरिति लक्षणात् द्वितीयः कल्पोऽभिमतइति शङ्कते *पूर्वमिति* पूर्वशब्दार्थानिरुक्त्या विशिष्टलक्षणासिद्धिरिति दूषयति *नेति* कारणसमवेतसत्वं जन्मेति द्वितीयकल्पेप्युक्तं खण्डनमतिदिशति *एतेनेति* कथं तन्निरास इत्यत आह*पूर्वेति* नियतपूर्वभावित्वस्यैव कारणत्वादितियावत् ।

वर्त्तमानत्वे दोषान्तराभिधित्सया शङ्कते ।

११२ वर्तमानकाललक्षणखण्डनम् ।

अस्तु तावदतीतानागतयोर्यथातथा निरुक्तिः यत्

क्रियावच्छिन्नो यः कालः स तत्क्रियापेक्षया वर्त्तमानो नत्वन्यापेक्षयेति चेत् तदपेक्षयेति कोऽर्थः। किं तदुपधानेन, उत तदवधिकतया, उत तत्प्रतियोगिकतया, उत तेन प्रकारेणेत्येव । नाद्यः उपाध्यवच्छिन्नस्यातीतानागतप्रतिपत्तिविषयत्वमपि तस्येत्यसकृदुक्तत्वात् । नापि द्वितीयः अस्मादयं दीर्घ इतिवदस्मादयं वर्त्तत इत्यवध्यपेक्षामन्तरेण प्रतीयमानत्वात् सर्वदैव च त्रिविधावध्यपेक्षया आसीदस्ति भविष्यतीति प्रत्ययाव्यवस्थाप्रसङ्गात् । अतएव न तृतीयः । नापि चतुर्थः अतीतानागतप्रतीतिकाले क्रियावच्छेदप्रकारेण वर्त्तमानप्रत्ययविषयत्वप्रसङ्गात् । नासौ क्रियावच्छेदलक्षणः प्रकारोऽतीतानागतकाले वर्तत इति चेन्न। वर्तमानताया अद्याप्यनिरूपणेन वर्तत इत्युक्त्वा विशेषस्य दर्शयितुमशक्यत्त्वात् । तत्क्रियाकाले तत्क्रियावच्छिन्नः कालो वर्तमान इति चेन्न । कालस्य कालाश्रयतया निरूपणासम्भवात्कालान्तरस्यानभ्युपगमात्तस्यैव कालस्य तदाश्रयत्त्वे व्यक्तमात्माश्रयत्त्वापत्तेः ।

*अस्त्विति* अतीतानागतयोः कालयोर्यादृक्तादृङ्निरुक्तिः स्यान्नास्माकमादरो यथाऽऽदित्यादिगतिलक्षणया क्रिययाऽवच्छिन्नो यः कालः स तां क्रियामपेक्ष्य वर्त्तमानो भवति। क्रियावच्छिन्नो वर्त्तमान इत्युक्ते च-

वर्त्तमानादिक्रियावच्छिन्नः कालो वर्त्तमानः स्यात्तथा-सत्यविशेषितकालस्यैव तदुपाध्यवच्छिन्नत्वात्तस्याती-तानागतप्रतीतिविषयत्वमपि स्यादिति तन्निरासार्थं तामपेक्ष्येत्युक्तमिति वर्त्तमाननिरुक्तौ पश्चादितरनि-रुक्तिरपि स्यादित्यर्थः । दूषणोक्तिविभागविज्ञत्यै विकल्पयति *तदिति * किं क्रियाया उपाधित्वादपे-क्षा किमवधितया किं प्रतियोगितया प्रकारमात्रे-ण वेति क्रमेण विकल्पार्थः । घटात्पटो भिन्न इति वद्घटः पटो न भवतीत्यत्र पञ्चम्यन्तनिर्दिष्टावधित्वम-न्तरेणापि प्रतियोगित्वं दृष्टमिति पृथग्विकल्पो द्रष्टव्यः। आद्यमप्रवदति * नेति * तदुपाध्यवच्छिन्नस्यैवाती-तानागतप्रत्ययविषयत्वादतिव्याप्तिरित्यर्थः । अवधि-रपेक्षाशब्दार्थ इति द्वितीयं दूषयति * नेति * कुत इत्यतआह * अस्मादिति * अस्मादयं ह्रस्वोऽ-स्मादयं दीर्घ इति, ह्रस्वादि पदार्थावधिमपेक्ष्य प्रती-यते न तथा वर्त्तमानपदार्थः प्रतीयमानोऽस्मादयं व-र्त्तत इति प्रतीयतेऽपितु तन्निरपेक्षोऽतोदर्शनविरोध इत्याशयः। भङ्गान्तरं भणति *सर्वेति* यदैव वर्त्तमान-ताप्रत्ययस्तदैवातीतानागतप्रत्ययापेक्षया आसीदस्ति भविष्यतीति त्रिविधव्यवहारप्रसङ्गोऽविशेषादेवञ्च का-लान्तर एवातीतानागतप्रत्यय इति व्यवस्था न स्यादि-त्यर्थः। उक्तन्यायं कल्पान्तरेऽप्यतिदिशति*अत इति* सर्वदैवातीतानागतवर्त्तमानसूर्यादिगतिक्रियाप्रतियो-गेन त्रिविधप्रत्ययप्रसङ्गेनाव्यवस्थानात् तृतीयकल्पो न घटत इत्यर्थः। अतीतोऽनागत इति प्रतीतिर्यदा काल-

विषया जायते तदा यस्य कस्य चित्क्रियावच्छेदप्रकारस्य विद्यमानत्वाद्वर्त्तत इति प्रतीतिविषयत्वप्रसङ्गान्न तुरीयोपीत्याह * नापीति * क्रियावच्छेदप्रकारस्य यदा वर्त्तमानता तदैव तेन प्रकारेण तत्र वर्त्तमानप्रत्ययोऽतीतानागतसमये तस्यावर्त्तमानत्वान्न तेनापि प्रकारेण वर्त्तमानप्रत्यय इति शङ्कते*नासाविति * वर्त्तमानार्थस्याद्याप्यनिरूपितत्वान्नासौ प्रकारो वर्त्तमान इत्यनया वाक्भङ्ग्या विशेषस्य दर्शयितुमशक्यत्वमात्माश्रयादिति परिहरति *नेति* तत्क्रियावच्छिन्नकालस्तत्क्रियासत्वकाले वर्त्तमानो न तत्क्रियाया असत्वकालेऽतोऽनागतप्रतीतिसमयेपि नासौ वर्त्तमान इति शङ्कते *तदिति* काले काल इत्यत्र हि कालस्य कालाधारत्वमुच्यते तन्न सम्भवतीति परिहरति * नेति * कालस्य कालान्तराश्रयत्वमुत तस्यैवाश्रयत्वमाश्रयित्वं चेति विकल्प्य प्रथमं प्रत्याह * कालेति * द्वितीयमपवदति * तस्येति *

सूर्यादिक्रियावच्छेदस्योपाधित्वे खण्डिते उपाध्यन्तरं शङ्कते।

११३ काले वर्तमानत्वादिप्रयोजकोपाध्यन्तरखण्डनम्।

स्यादेतत् ग्राहकविज्ञानविषयो ग्राहकविज्ञानाश्रयश्च कालो वर्तमानः वर्तमानोपाधिप्रागभावावच्छिन्नश्च पूर्वस्तत्प्रध्वंसाभावावच्छिन्नश्चानागतः, प्रागभावप्रध्वंसयोश्च स्वाभाविकमेव भेदमादाय व्यवस्था, प्राग्व्यवस्थाहेतुरभावः प्रागभाव इति स्वभावभूतस्यैव विशेषस्य कार्य-

मादाय लक्षणमनागतव्यवस्थानिदानमभावः प्रध्वंस इति च प्रध्वंसस्येति नैवम् । ज्ञानाऽस्वप्रकाशतापक्षे स्वोपहितस्य स्वयं ग्रहणानुपपत्तेः कथं वर्तमानताग्रहः, ज्ञानान्तरेण च तथाग्रहे वर्तमानतावभासाङ्गीकारे तदाऽसौ दृष्टोमयेति प्रत्ययस्य तदाऽसौ मया दृश्यत इत्याकारतापत्तिः।अत एव स्वप्रकाशपक्षेऽप्यनिस्तारः ।यावानर्थः स्वप्रकाशे वर्तमानतयोक्तस्तावत एव परेण ग्रहणे व्यभिचारात् स्वप्रकाशतायाश्चाधिक्येऽपि विषये विशेषाभावात् । स्वरूपमेव विशेष इति चेन्न । तस्यानुगमाननुगमाभ्यामनुपपत्तेः प्राक्प्रध्वंसाभावयोश्च स्वरूपतोऽविशेषेऽपि कतरो भूतव्यवहारस्य कतरश्चानागतव्यवहारस्योपाधिरित्यनुयुक्ते कार्यभेदजनकतया च तन्निरुक्तावुत्तरे पूर्वप्रत्युक्तां पूर्वतापरतानिरुक्तिं विना जन्यजनकत्वाज्ञानमिति । उपाधिभेदाच्च कालभेदे योऽप्येकतयाऽभिमतः कालः सोऽपि चन्द्रसूर्यक्रियाद्यसङ्ख्योपाधिभेदसम्भवेन नाना स्यात्तत्राऽयमेवोपाधिर्नायमितिच्चाऽविनिगम्यत्वात् प्रतिक्षणस्वभावभेदवादिपक्षे च नानाक्षणेषु वर्तमानत्वादिव्यवहारार्थमुपाध्यनुसरणावश्यम्भावेनोक्तोपाधिदोषग्रासस्यैवापातादिति ।

* स्यादिति * ग्राहकविज्ञानविषयत्वमिदानीम-

तीतकालस्यापि सम्भवति तदर्थमुक्तं ग्राहकविज्ञाना-
श्रय इति । कालान्तरग्राहकविज्ञानाश्रयत्वमतीतका-
लस्याप्यस्तीति तदर्थं ग्राहकविज्ञानविषय इत्युक्तम् ।
वर्त्तत इति कालग्राहिविज्ञानं यस्मिन्काले जायते
तस्य कालस्य तज्ज्ञानविषयत्वं वर्तमानत्वमित्यर्थः ।
वर्त्तमानकाललक्षणमुक्त्वाऽतीतकाललक्षणमाह * व-
र्त्तमानेति * एतद्वर्त्तमानकालोपाधिभूतज्ञानप्रागभावा-
वच्छिन्नः कालोऽतीत इत्यर्थः । एतत्प्रध्वंसावच्छिन्नश्च
कालोऽनागत इत्याह *तदिति*इदानीं प्रागभावप्रध्वं-
सनिरुक्तौ पूर्वोक्तं दूषणं परिहरन्नाह * प्रागिति *
प्रागभावप्रध्वंसयोः स्वाभाविकभेदसद्भावे मानमाह
*प्रागिति* स्वभावभूतस्यैव प्रागभावादिगतविशेष-
स्य कार्ये प्रागवस्थामनागतव्यवस्थां चाऽऽदा-
य लक्षणे तेनेतरत्कार्यद्वयकारणत्वमभावलक्षणमि-
त्यर्थः । यदि हि वर्त्तमान इति प्रत्ययाधारत्वं तद्विष-
यत्वं च वर्त्तमानता तर्हि तेन ज्ञानेन स्वरूपमपि ग्रा-
ह्यं स्यादुपाधिग्रहणं विनोपहितग्रहणादर्शनात्तच्च वै-
शेषिकपक्षे नास्तीति वर्त्तमानज्ञानं न स्यादित्याह * मै-
वमिति * अस्वप्रकाशवादिमते ज्ञानान्तरवेद्यत्वमिष्ट-
मतो ज्ञानान्तरेणोपाधिभूतज्ञानग्रहे वर्त्तमानताव-
भास इत्यत आह *ज्ञानेति* असौ वर्त्तमानः कालो
मया दृष्ट इति तत्ज्ञानविषयत्वं तदाधारत्वं च
तस्य कालस्य गृह्यते तदा तेनापि वर्त्तमानता गृही-
तेति दृष्ट इत्यतीतप्रत्ययस्य वर्त्तमानार्थग्राहितया
दृश्यत इति वर्त्तमानाकारतापत्तिरित्यर्थः । दृष्ट इति

ज्ञानस्य वर्त्तमानाकारतापत्तौ च स्वप्रकाशपक्षेऽपि न निस्तार इत्याह *अत इति* कथमित्याकाङ्क्षायामाह* यावानिति* वर्त्तमानाकारज्ञानविषयज्ञानकालस्य ज्ञानसम्बन्धः स दृष्ट इति ज्ञानस्याप्यविशिष्ट इत्यर्थः। ज्ञानान्तरेण ज्ञानावच्छिन्नवर्त्तमानत्वग्राहकदृष्टइत्याकारस्य दृश्यतइत्यकारापत्तिरित्युक्तमयुक्तं ग्राहकज्ञाने स्वप्रकाशत्वाविशेषादित्यत आह*स्वेति*ज्ञानस्य स्वप्रकाशत्वेन स्फुरणेऽपि पूर्वोक्तज्ञानविषये नास्ति विशेष इत्यर्थः । कथं विशेषाभावः कालविशेषणज्ञानस्य स्वग्राहकज्ञानादभेदाख्यविशेषस्य भावादिति शङ्कते * स्वेति * स्वशब्देन सर्वनाम्ना ज्ञानमात्राभिधाने ज्ञानान्तरमपि स्वयमेवेति स एव व्यभिचारस्तद्विशेषाभिधाने नान्यस्मिन्वर्त्तमानंकाले तद्व्यक्तिघटितं लक्षणमित्यव्याप्तिरिति परिहरति * नेति * यदुक्तं प्रागभावप्रध्वंसयोः स्वाभाविकभेदमादाय व्यवस्थेति तत्राह * प्रागिति * अन्नुयुक्ते कार्यभेद'जनकतया या निरुक्तिः सैवासदुत्तरं तस्मिन्नुत्तरे या पूर्वनिरस्ता पूर्वापरता तन्निरुक्तिं विना जन्यजनकत्वाज्ञानमित्यन्योन्याश्रय इत्याशयः। इतश्चोपाधिभेदात्कालभेद इत्ययुक्तमित्याह*उपाधीति* योऽप्येकतयाऽभिमतो वर्त्तमानः कालः सोऽप्यनेकसूर्यक्रियाद्यनन्तोपाधिसम्भिन्न इत्येकोपाधिविशिष्टोऽप्युपाधिभेदादनेकः स्यादित्यर्थः । तत्र सूर्यपरिस्पन्दस्यैवोपाधित्वन्न चन्द्रादिपरिस्पन्दानामवर्जनीयतया सन्निधानात्तेषामित्यत आह *तत्रेति * तास्वनन्तक्रियासु

मध्य एकस्या एव क्रियायाः कालोपाधित्वमित्यत्र मानाभावेन निर्णयाभाव इति यावत् । वैशेषिकपकपक्षोक्तदोषं सर्वक्षणेषु कालस्वभाव एव भिद्यत इति सुगतमतेऽप्यतिदिशति *प्रतीति* येन स्वाभाविककालभेदोऽङ्गीक्रियते तेनापि वर्त्तमानोऽनेककालेष्वनुगतवर्त्तमानबुद्ध्यादिसिद्धये वर्त्तमानत्वं कश्चिदुपाधिरुपन्यसनीय एवमतीतेष्वतीतत्वमनागतेषु चानागतत्वमित्यनुगतोपाधिनिरुक्तौ पूर्वोक्तानामेव दूषणानां तत्र सत्त्वं क्रियावच्छेदमन्तरेण वर्त्तमानत्वाद्यसिद्धेरित्यर्थः ।

इति कालखण्डनम् ।

---

संशयखण्डनोपक्रमाय सङ्गतिं करोति ।

११४ संशयखण्डनारम्भः ।

ननु तथाऽपि तावद्विषयभेदेनाऽवश्यं भवितव्यं प्रतीतिभेदस्य दुरपन्हवत्वादतः सामान्यतः सिद्धौ विशेषतो विवेचनाशक्तौ भेदे संशय एवास्तामितिचेन्न । संशयस्याऽपि निर्वक्तुमशक्यत्वात् । तथाहि—संशयस्य निश्चयात्किमुपाधिकृतो विशेष, उत जातिकृतः । आद्ये किं विषयविशेषणोपाधिना उत कारणविशेषेण उतान्येनैव केन चित्सम्बन्धिना कृतः । न प्रथमः तस्याऽनिर्वचनात् । उयभकोटिविषयः संशय इति चेन्न । कोटिद्वयसमुच्चयनिश्चयस्याऽपि संशयत्वप्रसङ्गात् । प्र-

तीतिरेव नैवमितिचेन्न । भेदाभेदप्रतीतिनां शाङ्खत्वप्रा-दिप्रतीतीनां च तादृशां सम्भवात् । समुच्चयप्रकाशे कोट्योरविरोधः प्रकाशते संशयेतु विरोध इतिचेन्न । पीतः शङ्ख इत्यादिषु पीतत्वशङ्खत्वादे भिन्नाश्रयता-नियमं विरोधं जानतोऽपि प्रत्ययात् । तथाऽपि तस्यां बुद्धौ न भासते विरोध इतिचेन्न । कथमेवमिति प्रका-शेऽपि तत्प्रकाशात् । तयोरेकाश्रययोर्विरोधप्रतीतिरव-श्योपेयत्वात् । मिथ्याधियस्ता इति चेन्न । संशयस्यापि भवद्भिरतत्त्वबुद्धितयाऽङ्गीकारात् । तत्त्वातत्त्वबुद्ध्योश्च तद्विषयत्वेन विशेषाभावात् नहि मिथ्यारजतबुद्धीरजत-बुद्धिरेव न भवति ।

* नन्विति * वर्त्तते वत्स्यर्त्यवर्त्तिष्टेति प्रतीति-भेदस्यानुभवसिद्धतया ऽपलपितुमशक्यत्वात्प्रतीतेश्च निर्विषयतयाऽसम्भवाद्भवितव्यं तेनापि तस्य चा-ऽयमसाविति विशेषदर्शनासम्भवे सामान्यग्रहणं विशेषाग्रहणसहितं कालविषयसंशयं जनयति तेन संशयैककोटिनिविष्टतया कालसिद्धिरित्यर्थः । सं-शयस्यैव निर्वचनानर्हतया कथं कोटितया कालसि-द्धिरिति परिहरति * नेति * तदनिर्वचनं दर्शयितुं विकल्पयति * तथाहीति * उपाधिकल्पं त्रिधा-विकल्पयति * आद्य इति * विषयाविशेषितः क-श्चिद्धर्म एवंविधविषयमवगाहमानरूपवत्तत्कारया-

विशेषितः कश्चिद्धर्मः तन्निष्ठः साधारणधर्म्मदर्शनजन्यत्वादिरूप उत विषयकारणव्यतिरिक्तेनान्येन सम्बन्धिना विशेषितस्तन्निष्ठो धर्म्म इति विकल्पानामर्थः । सम्बन्धिनेति विशेषणं अतिप्रसङ्गपरिहाराय । विषयविशेषकृतं संशयस्य निश्चयात् भेदं दूषयति * नेति * संशयस्य विषयनिर्वचनं शङ्कते * उभयेति * अनेककोट्यवलम्बिज्ञानं संशय इत्यर्थः । अनेककोटिसमुच्चयमात्रज्ञानं संशय उत विरोध्यनेककोटिज्ञानमिति विकल्प्य प्रथमं प्रत्याह * नेति * कोटिद्वयसमुच्चयनिश्चयज्ञानं यत्र जायते तत्रातिव्याप्तिरित्यर्थः । एकस्यानेककोटिसमुच्चयमुल्लिखन् निश्चय एव नास्ति तत्कुतोऽतिव्याप्तिरिति शङ्कते * प्रतीतिरिति * अनेकान्तवादिमते भिन्नोऽभिन्नश्च घटः सन्नसंश्चेत्यादिप्रत्ययस्य स्थाणुश्च पुरुषश्चेति शाब्दनिश्चयस्य च स्वप्नेन्द्रजालादिप्रत्ययस्य च सम्भवान्मैवमिति परिहरति * नेति * द्वितीयं शङ्कते *समुच्चयेति* विरोधप्रकाशे सति समुच्चयज्ञानं संशयस्तदप्रकाशे तु निश्चय इति विशेष इत्यर्थः । अतिव्यापकमिति परिहरति * नेति * पीतः शङ्ख इति पीतत्वशङ्खयोर्विरोधज्ञानात्तस्यैव पित्तदुष्टेन्द्रियस्य पीतत्वशङ्खत्वयोर्मिथोविरुद्धयोरेकस्मिन् धर्मिणि ग्रहदर्शनाद्विरुद्धानेककोटिज्ञानं संशय इत्येतदतिव्याप्तं पीतत्वशङ्खत्वयोर्भिन्नाधिकरणत्वेन विरोधादित्यर्थः । आदिपदेन पयस्तिक्तमित्यादिसङ्ग्रहः । यद्यपि सहानवस्थानलक्षणो विरोधो ज्ञानान्तरेण गृह्यते तथापि

न तेनैव गृह्यतेऽतोऽविरोधग्राहकत्वे सत्यनेककोट्यवलम्बित्वं संशयलक्षणं त्वदुक्तस्थले नास्तीति नातिव्याप्तिरिति शङ्कते *तथापीति* कथमयं शङ्खः पीतः स्यादित्यत्र कथमित्यंशस्य विरोधग्राहकत्वाच्छेषस्य च कोटिद्वयग्राहकत्वाद्विमर्शरूपप्रत्यये ऽतिव्याप्तिरिति परिहरति * नेति * यद्यपि विमर्शे विरोधः स्फुरति तथापि पीतः शङ्ख इत्याश्रयतया प्रतीयमानयोर्विरोधो न स्फुरतीत्यत आह * तयोरिति * तत्र ग्रहणव्यतिरेकेण तद्गतविरोधादित्यर्थः । पीतः शङ्ख इत्यादिषु समुच्चयविषयासु यद्यविरोधो भाति तथापि मिथ्यात्वेनामिथ्यात्वेन च विशिष्टं संशयलक्षणं विवक्षितमतो नातिव्याप्तिरिति शङ्कते * मिथ्येति * संशयस्यापि मिथ्याबुद्धित्वेन स्वीकाराद्विशेषणासिद्धिरिति परिहरति * नेति * संशयस्य तत्त्वबुद्धित्वमतत्त्वबुद्धित्वं च विभ्रमस्येत्युपगम्यापि विशेषणं दूषयति * तत्त्वेति * तयोस्तत्त्वातत्त्वबुद्धित्वेन सत्यपि विशेषे विरुद्धानेकप्रकारावगाहित्वऽविशेषस्तावन्मात्रस्यैवाऽऽभासत्वप्रयोजकत्वेन तथेत्यादिविशेषणमुपादेयं वैयर्थ्यादविशेषणमुक्त्वा विशेषणान्तरोपगमे हेत्वन्तरापाताच्चेत्यर्थः । तत्त्वातत्त्वबुद्ध्योरेकविषयत्वसम्भवे दृष्टान्तमाह * नहीति *

लक्षणान्तरं शङ्कते ।

११५ संशयस्य लक्षणान्तरखण्डनम्

अव्यवस्थितकोटिद्वयविषयः संशय इति चेत् । के-

यमव्यवस्थितता । पाक्षिकतेति चेत् । न पर्यायं पृच्छामोऽपि तु किं कोटिद्वयस्वरूपमेवोत कोटिद्वयस्य धर्मः कश्चित् । आद्ये कोटिद्वयनिश्चयेन सहाविशेषस्तदवस्थः । द्वितीये यद्यसौ केन चित्प्रमाणेन सिद्धः तदा तस्यैव कोटिद्वयाश्रिततद्धर्मविषयस्य संशयत्वप्रसङ्गेन प्रमाणत्वव्याघातः । अथ कस्य चित्प्रमाणस्य नासौ विषयः, नास्ति तर्हि विषयकृतो विशेषः । एतेनान्योऽपि यः कश्चिद्विषयविशेषः स्थाणुतदभावपुरुषतदभावादिरूपोऽभिधीयते सोऽपि निरस्तो वेदितव्यः । अत्यन्तासत एव च तस्य प्रतिभासे जितं जिनैरसत्ख्यातिवादिभिः । क्वचित्सतश्चेत्तत्रैव प्रसङ्गः ।

* अव्यवस्थेति * समुच्चयग्राहकनिश्चयस्य स्थाणुः पुरुषश्चेतिरूपस्य व्यवस्थितविषयत्वादव्यवस्थितानेककोटिविषयत्वं च संशयलक्षणमतो नातिव्याप्तिरित्यर्थः । ज्ञानस्यैव लक्षणाविशेषणत्वादव्यवस्थितत्वशब्दार्थः त्वया कथनीय इति मत्वा पृच्छति *केति* पर्यायेणोत्तरमाह * पाक्षिकेति * तदर्थप्रश्ने शब्दपर्यायकथनं कथम कथं घटतां प्राश्नीत्याह *नेति* किं तर्हि पृच्छ्यते इत्यत आह * अपि त्विति * अव्यवस्थितत्वं कोटिद्वयस्वरूपं तद्धर्मो वेति विकल्पार्थः । अनेककोटिनिश्चयस्य पूर्ववत्संशयत्वप्रसङ्गो दुर्वार इति प्रथमं प्रत्याह *आद्यइति* द्वितीयेऽपि तस्मि-

ऽधर्मे किञ्चित्प्रमाणमस्ति नवेति विकल्पस्य प्रथममनु-
पपत्ति *द्वीति* धर्मिग्रहणमन्तरेण तदाश्रितधर्मग्रहणा-
योगात्तत्प्रमाणं पाक्षिकत्वधर्मविशिष्टकोटिद्वयग्राहक-
मिति संशयलक्षणं तद्वातिव्यापकमिति परिहरति * ने-
ति * द्वितीयं शङ्कते * अथेति * यन्न केन चित्प्रमीयते त-
न्नास्ति शशशृङ्गवदिति भवदभ्युपगमात्पाक्षिकत्वस्या-
सिद्ध्या तद्विशिष्टसंशयलक्षणासिद्धिरिति दूषयति * ने-
ति * उक्तन्यायं पक्षान्तरेऽप्यतिदिशति * एतेनेति *
वस्तुनिष्ठस्तदभावनिष्ठो वा पुरुषनिष्ठस्तदभावनिष्ठो
वाऽन्यो वा कश्चिद्विशेषोऽस्ति तद्विशिष्टानेककोटिविष-
यत्वं संशयत्वमित्यत्रापि विशेषस्य प्रमितत्वाप्रमित-
त्वविकल्पोक्तदूषणं तुल्यमित्यर्थः । किञ्चाप्रमितं चे-
त्प्रतीयते किमसदेव उत क्वचित्सदितिविकल्पस्य प्रथमे
शून्यख्यातिप्रसङ्ग इत्याह * अत्यन्तेति * द्वितीयं
दूषयति * क्वचिदिति * यत्र सत्वं तत्र प्रमितत्वेन
तत्प्रमाणामतिव्याप्तिरित्यर्थः ।

विषयविशेषोपाधिं निराकृत्य कारणविशेषोपा-
धिं निराकरोति ।

११६ संशयस्य निश्चयात्कारणविशेषप्रयुक्तवैलक्षण्यस्य खण्डनम् ।

नापि द्वितीयः कारणविशेषोहि विशिष्य सामग्री
स्यात्तदेकदेशो वा । नाद्यः तस्या अप्रत्यक्षत्वेन तदु-
पहितस्य प्रत्यक्षतोऽवगमानुपपत्तेः । नच तस्या अनुमे-
यत्वं लिङ्गासम्भवात् । कार्यविशेष एव लिङ्गमितिचे-
न्न । कार्यगतस्यैव विशेषस्य चिन्त्यमानस्याद्याप्य-

प्राप्तेः जातिभेदस्य दूषणीयत्त्वात् । नापि द्वितीयः दृश्यस्य तदेकदेशस्य साधारणधर्मदर्शनादेर्विशेषद्वयस्मरणादेश्च साधारणधर्मविशेषद्वयज्ञानप्रत्यक्षादावपि हेतुत्त्वेन साधारण्यात् । अदृश्ये च तस्मिँल्लिङ्गाभावात् । तेन कार्ये विशेषजात्याधानस्य निरस्यत्त्वात् । तस्या अविषयत्त्वेनानुव्यवसायसाक्षिककार्यगतविशेषभिवनाऽसामर्थ्यात् ।

*नापीति* तदुपपादनाय विकल्पयति *कारणेनेति *अनिष्टप्रसङ्गेन प्रथमं निराकरोति * नेति * उपाधिप्रत्यक्षत्वे सत्येवोपाहितप्रत्यक्षत्वं दृष्टं दण्ड्यादौ सामग्र्याश्चाप्रत्यक्षत्वात्तदुपहितस्य संशयत्वस्य प्रत्यक्षत्वन्न स्यात्प्रत्यक्षं च तत् दृश्यते मानसवेद्यत्वादित्यर्थः । सामग्र्या अनुमेयत्वात्तदुपाधिकं संशयत्वमप्यनुमेयमस्तु तत्राह * नचेति * लिङ्गाभावोऽसिद्धः सामग्रीजन्यकार्यगतविशेषस्यैव लिङ्गत्वादिति शङ्कते *कार्येति* ज्ञानगतपाक्षिकत्वलक्षणविशेषसिद्धौ तद्बलेन सामग्रीविशेषसिद्धिस्तत्सिद्धौ च तदुपाधिकविशेषसिद्धिरित्यन्योन्याश्रयान्न कार्यगतविशेषोऽप्यपि लभ्यत इत्यर्थः । तर्हि संशयत्वजातिरेव सामग्रीलिङ्गमास्तामित्यत आह * जातीति * नाप्यर्थापत्तितस्तत्सिद्धिरुक्तन्यायेनानुपपद्यमानार्थाभावान्नाप्यागमतः कृतकस्याकृतकस्य वा तद्विषयस्यादर्शनान्नाप्युपमानतस्तस्य सादृश्यमात्रविषय-

त्वा(द्वावेवो धनोप्युपधा अभिप्रायः भावा)न्नाप्यभावत इति द्रष्टव्यम् । सामग्र्येकदेशः संशयत्वोपाधिरिति द्वितीयं दूषयति * नापीति * दृश्योऽसावदृश्यो वा त विकल्प्य दृश्यपक्षे दोषमाह *दृश्यस्येति * साधारणधर्मज्ञानं कोटिद्वयरूपविशेषस्मरणं च यदा मनसा गृह्यते विधीयते वा तदा तत्र साधारणधर्मविशेषद्वयस्मरणप्रत्यक्षादावपि विषयतया हेतुत्वेन साधारणधर्मदर्शनादौ संशयोपाधित्वन्न सम्भवति तत्प्रत्यक्षादावप्यन्यथासंशयत्वप्रसङ्गादित्यर्थः। आदिपदेनानेकधर्मादिसङ्ग्रहः।स्मरणादेरित्यत्रादिपदेन तदभिधानसङ्ग्रहः।अदृश्यपक्षे दोषमाह *अदृश्ये चेति* लिङ्गाभावमेव स्पष्टयति *तेनेति* तेनादृश्यसामग्र्यैकदेशेन कार्ये संशये विशेषणज्ञानस्य संशयत्वसामान्यसम्बन्धलक्षणस्य चानिरसनीयत्वात् लिङ्गाभाव इत्यर्थः । अदृश्यत्वे च संशयग्राहकानुव्यवसायप्रत्यक्षे स्फुरणमपि तस्य न स्यादतश्चोपाधिघटितरूपस्यानिर्णयाद्भेदोपि न सिध्येदित्याह * तस्येति * उपाधेरप्रत्यक्षतया तदुपहितविशेषस्याविषयत्वेनानुव्यवसायज्ञानं यन्मम संशयो जात इति तद्विषयस्तत्कार्ये संशयज्ञानं तद्गतविशेषीभवितुन्नास्य सामर्थ्यं संशयविषयप्रत्यक्षे तदग्रहणादिति योजना ।

अन्येन केन चित्सम्बन्धिना संशयस्य निश्चयाद्विशेषः कृत इति पक्षं दूषयति ।

---

(१) एतदन्तर्गतोग्रन्थः पुस्तकानुरोधाद्यथाश्रुत एव स्थापित इति बोध्यम् ।

११७ सम्बन्धिकृतोनिश्चयाद्विशेषः संशयस्येतिपक्षखण्डनम् ।

नापि तृतीयः तस्य दर्शयितुमशक्यत्वात् । नच द्वितीयः धर्मिस्वरूपादेरपि तद्विषयतया संशयितत्वप्रसङ्गात् । नचैवं, नह्ययं स्थाणुर्वा पुरुषोवेति संशये सतीदमा परामृष्यमाणस्योर्द्धत्वशालिनो धर्मिणः स्वरूपसत्त्वेऽपि स्वरूपमेव भवति नवेति तद्द्रष्टुरभिमानो व्यवहारोवा, किं नाम? तत्र स्वरूपसत्त्वमात्रांशावलम्बिनस्तस्य ज्ञानस्य निश्चयत्वमेव । ततः किमिति चेत् एकस्यैव ज्ञानस्य निश्चयत्वसंशयत्वजातिसङ्करः । स प्रामाण्याप्रामाण्यवद्भविष्यतीति चेन्न । अत एव हि तयोरपि जातित्वानङ्गीकारः, किंनाम ? तथाभूताऽतथाभूतार्थतालक्षणोपाधिद्वयरूपतास्वीकारएव तयोः । यदाच संशयत्वनिश्चयत्वलक्षणजातिद्वयसम्भिन्नं तद्विज्ञानमास्थीयते तदा कञ्चिद्विषयमपेक्ष्य संशयत्वं कञ्चिदपेक्ष्य निश्चयत्वमित्यापेक्षिकी जातिव्यवस्थितिरित्यपूर्वः पन्थाः । ईदृशस्य पथः पान्थेनापि भवता किंनियामकमभिधेयं येन धर्मिणि तस्य निश्चयत्वं व्यवतिष्ठते । विशेषद्वये च संशयत्वं विशेषदर्शनादर्शने इतिचेत् । तर्हि भवति स्थाणोः स्थाणुत्वं पुरुषत्वं पुरुषस्य विशेषः प्रतीयते चासाविति विशेषदर्शनात्तत्राऽपि निश्चयप्रसङ्गः ।

* नापीति * कुत इत्यत आह * तस्येति * विषयकरणातिरिक्तस्योपाधेर्दर्शयितुमशक्यत्वादिति यावत्। संशयस्य निश्चयात्किमुपाधिकृतो विशेष उत जातिकृत इति विकल्प्य प्रथममपाकृत्य सम्प्रति द्वितीयं दूषयति * नेति * संशयत्वजात्यधिकरणज्ञानस्य संशयत्वे तद्विषयजातस्य संशयितत्त्वादयं स्थाणुर्वा पुरुषोवेत्यत्रेदमा निर्दिश्यमानधर्म्यादिस्वरूपस्यापि तद्विषयतया संशयितत्वं प्रसज्येत निश्चयविषयस्य निश्चितत्ववदिति हेतुमाह * धर्मीति * अस्तु को दोष इत्यत आह * नचेति * कुत इत्यत आह * नहीति * स्थाणुर्वा पुरुषोवेति संशयसमये इदमा परामृश्यमान ऊर्द्धतार्वांशश्लिष्टो धर्मी तस्य स्वरूपसमयेऽपि किं तत्स्वरूपं भवति नवेति द्रष्टुः संशयाभिमानव्यवहारौ न स्त इत्यर्थः। किं तर्हि तत्र स्यादित्यत आह * किमिति * तत्र संशयविषये स्वरूपसत्तांशमात्रज्ञानस्य निश्चयत्वमेव,

"सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः"

इति भवता स्वीकारादित्यर्थः। स्वाभिप्रायमेव प्रश्नपूर्वकं व्यक्तीकरोति *नत इति* धर्मिज्ञाने निर्णयत्वं विशेषांशे संशयत्वमिति निर्णयत्वसंशयत्वजातिद्वयस्यैकस्मिन्संशयज्ञाने सङ्करप्रसङ्ग इति यावत्। यथा प्रमात्वाप्रमात्वयोरस्मिन् ज्ञाने धर्मिप्रकारभेदमादायाङ्गीकारस्तथा संशयत्वनिर्णयत्वयोरपि सङ्करः धर्मिप्रकारभेदादविरुद्ध इति शङ्कते *स इति* प्रमात्वाप्रमात्वयोरपि जातित्वं नाङ्गीक्रियते साङ्कर्यबाधात्किन्तू-

पाधित्वमिति परिहरति * नेति * यद्यजातित्वं किन्तर्हि, उपाधिता उपाधित्वे वा क उपाधिरित्यत आह * किमिति * अबाध्यार्थत्वं बाध्यार्थत्वं च प्रमात्वाप्रमात्वयोरुपाधिरित्यर्थः । एकस्यामपि ज्ञानव्यक्तौ विषयांशकृतभेदेन जातिद्वयस्य व्यवस्थितिरविरुद्धेत्युक्तमनुवदति दूषयितुं *यदेति* ज्ञानव्यक्तेः स्वतो निरंशत्वाद्विषयभेदकृतभेदानुपपत्तेर्जातेश्च कृत्स्नव्यक्तिगतत्वादापेक्षिकी व्यवस्थितिः कल्पयितुमशक्येत्यर्थः। एवम्भूतव्यवस्थानिर्णायकं किञ्चिन्न पश्याम इत्याह * ईदृशस्येति * यदाऽऽपेक्षिकीं जातिमङ्गीकृत्यापि धर्म्यंशे विशेषद्वये संशयत्वं जातिरङ्गीक्रियते तदा व्यवस्थापकं वाच्यमन्यथा नियमस्याऽऽकस्मिकत्वप्रसङ्गस्तच्च न शक्याभिधानमित्यर्थः । विशेषालम्बनत्वं यत्र तत्र निर्णयत्वं विशेषानालम्बने तु संशयत्वमिति विशेषालम्बनत्वानालम्बनत्वे विशेष इति शङ्कते * विशेषेति * तर्हिस्थाणुपुरुषयोः स्थाणुत्वस्य पुरुषत्वस्य च विशेषस्य दर्शनं निर्णयत्वनियामकमस्तीति विशेषद्वयांशेपि निर्णयत्वप्रसङ्ग इति परिहरति * तर्हीति *

स्थाणोः स्थाणुत्वं पुरुषस्य पुरुषत्वं यद्यपि विशेषस्तथापि युक्तः संशयो यतः संशयात्पूर्वन्नास्ति विशेषदर्शनमिति शङ्कते ।

११८ संशयात्पूर्वं विशेषदर्शनासत्त्वेन संशयेऽप्यनुपपत्तिः ।

संशयात्पूर्वं नास्ति विशेषदर्शनमिति युक्तस्तत्रापि संशय इति चेन्न । धर्मिभियः पूर्वं तर्हि कथं तद्गतविशेषदर्शनं स्यात् ।

संशयकाले चाऽस्ति विशेषदर्शनमित्यनन्तरं तर्हि संशयाऽननुवृत्तिप्रसङ्गोऽपि युक्त एव। तदीयविषयाद्विशेषादृव्यतिरिक्तस्य विशेषस्य दर्शनं विवक्षितमिति चेन्न। स्थाणुर्वा पुरुषोवेति संशयानन्तरं दारुमयो मांसमयो वाऽयमिति संशयो नोपपद्येत तदुभयमयत्वातिरिक्तयोः स्थाणुत्वपुरुषत्वयोर्विशेषयोः पूर्वज्ञानेनोल्लिखितत्वात्। अन्यतरविशेषदर्शनं संशयप्रतिरोधकं संशयेन तूभयोरुपदर्शनमतो नोक्तदोषप्रसङ्ग इति चेत् तर्हि स्थाणुः पुरुषश्चेति कुतोऽपि विभ्रमे जाते दारुमयोवा मांसमयो वेति संशयप्रतिरोधोन स्यात् पूर्वज्ञानेन विशेषद्वयोपदर्शनस्य कृतत्वात्। विशेषदर्शनं हि विशेषनिश्चयो विवक्षितो नतु विशेषज्ञानमात्रं येन संशयोपनीतादपि विशेषात्संशयप्रतिरोधः प्रसज्येतेति चेत्। मैवम्। संशयेन यावुपदर्शितौ विशेषौ तत्र न संशयस्य निश्चयत्वमिति व्यवस्थायां सिद्धायामुपदर्शितनियामकसिद्धिर्भवति सिद्धे चाऽस्मिन्नियामके संशयस्य विशेषद्वयं प्रति निश्चयत्वं नास्तीति सिद्ध्येदित्यन्योन्याश्रयापत्तेः को वारयिता।

* संशयादिति * अतिप्रसङ्गेन निराकरोति * नेति * धर्मिज्ञानात्पूर्वं धर्मिनिष्ठतया विशेषदर्शनासम्भवाद्विशेषादर्शनानन्तरभावित्वं संशयनियामकं धर्म्यंशज्ञानेऽस्तीति तत्रापि संशयत्वप्रसङ्ग

इत्यर्थः । यद्यपि संशयोत्पत्तेः प्राग्विशेषदर्शनं नास्ति तथापि संशयकाले तत्र विशेषस्य दर्शनान्न तत्र संशय इत्यत आह * संशयेति * तदानीन्तनविशेषदर्शनमादाय यदि निर्णयो युक्तस्तर्हि धारावाहिकतया संशयज्ञानं जायते इति स्थितिः तत्र प्रथमस्य विशेषदर्शनानन्तरभावित्वाभावेपि द्वितीयप्रभृतीनां तदस्तीति संशयाननुवृत्तिप्रसङ्गो युक्त इत्यर्थः। संशयज्ञाने योऽसौ विशेषः प्रकाशते तस्माद्व्यतिरिक्तस्य विशेषस्य पूर्वक्षणे दर्शनं निर्णयत्वानियामकं तच्च प्रथमसंशयेन स्थाणुत्वपुरुषत्वग्राहकं तत्र नास्त्येव स्थाणुत्वपुरुषत्वयोर्द्वितीयादिसंशयेऽपि विषयत्वादतो युक्ता संशयानुवृत्तिरिति शङ्कते * तदिति * स्थाणुर्वा पुरुषोवेति प्रथमसंशय उत्पद्यतेऽनन्तरं दारुमयो मांसमयोवेति संशयो यत्र तत्र द्वितीयसंशयो न स्यादिति दूषयति * नेति * कुत इत्यत आह * तादिति तदुभयं यद्दारुमयत्वं मांसमयत्वं तद्व्यतिरिक्तस्य स्थाणुत्वादिविशेषस्य पूर्वज्ञानेनावगाहनादिति यावत् । एकस्यैव विशेषस्य पूर्वक्षणे दर्शनं निर्णयनियामकं तत्संशयविरोधि संशये तु स्थाणुत्वपुरुषत्वविशेषद्वयदर्शनमतः पूर्वसंशयेन विशेषावगाहनेप्युत्तरसंशयोत्पत्तिरिति शङ्कते * अन्येति * अनाप्तवचनादितः कुतोपि भ्रमकारणात् स्थाणुश्च पुरुषश्चेत्येकस्मिन् धर्मिणि कोटिद्वयसमुच्चयभ्रमानन्तरसंशयानुत्पत्तिस्तत्पक्षे न स्यादित्युक्तं तत्र हेतुमाह * पूर्वेति * निश्चयरूपज्ञानं विशेषद-

र्शनपदेन विवक्षितं सन्देहानुवृत्तिस्थले प्रथमस्य सन्देहरूपत्वान्न विशेषदर्शनत्वमिति भवत्येव सन्देहानुवृत्तिरिति स्वाभिप्रेतं नियामकं शङ्कते * विशेषेति * स्थाणुर्वा पुरुषोवेति. ज्ञानस्य स्थाणुत्वपुरुषत्वविशेषद्वये संशयत्वमेव नतु निर्णयत्वमिति व्यवस्थासिद्धावुक्तनियामकसिद्धिस्तत्सिद्धौ तत्रैतस्य संशयत्वसिद्धिरिति परस्पराश्रय इति परिहरति * मैवमिति *

शङ्कते ।

११९ एकधर्मिनिष्ठत्वेनैव विरोधेऽङ्गीकृते दोषपरम्परा ।

स्यादेतत् संशयज्ञानस्य धर्मिविषयत्वेऽभ्युपगम्यमानेऽद्वैतैशसमापद्येत तच्च तदनभ्युपगम एव निवर्तते तेन धर्मिज्ञानं निश्चयात्मकमन्यदेव स्थाणुर्वा पुरुषोवेति चान्यदेव संशयज्ञानमित्यभ्युपैष्याम इति चेत् । मैवम् । एकधर्मिसम्बन्धोपनयनव्यतिरेकेण स्थाणुत्वपुरुषत्वयोर्विरोध एव नास्तीति स्थाणुर्वा पुरुषो वेत्येतदेव न स्यान्नहि यस्य कस्य चित्स्थाणुत्वेन यस्य कस्य चित्पुरुषत्वं विरुद्धयते । एकधर्मिसम्बन्धमनन्तर्भाव्य विरोधे जगति तयोरन्योन्यस्य व्यतिघ्नतोरसत्त्वमेव प्रसज्येत । तस्य धर्मिणो वा पुरुषत्वनिश्चयाद्यथा संशयो निवर्तेत नोत्पद्यते वा तथा स्वात्मनः पुरुषत्वनिर्णयात्संशयो निवर्तेत नोत्पद्येत वा, विशेषाभावा यथाऽयं द्रष्टुर्न स्वशरीरविषयः

संशयः तथैव पुरोवर्त्तिविषयोऽपि नासौ । कथं चेदमर्थेन सामानाधिकरण्याभिमानः योऽयमूर्ध्वताधर्मा स किं स्थाणुरुत पुरुष इति । कस्माद्वा प्रत्यभिज्ञानादयोऽप्येकं ज्ञानमङ्गीकृता इत्युच्छिन्ना विशिष्टविज्ञानसङ्कथा । सञ्जातश्च गौरश्वः पुरुष इतिवद्विशकलितो विज्ञानसंसार इत्यास्तां विस्तराभिनिवेशः ।

* स्यादेतदिति * संशयज्ञानस्य धर्मिविषयत्वाङ्गीकारे धर्म्यंशे निर्णयत्वं प्रकारांशे संशयत्वमिति निर्णयत्वसंशयत्वजातिसङ्कर आपद्येत यदा तु धर्मिज्ञानं व्यवहितक्षणोत्पन्नमन्यत्तदा धर्मिज्ञाने निर्णयत्वमन्यस्मिन्प्रकारज्ञाने संशयत्वमिति एकस्यार्द्धे संशयत्वमर्द्धे निर्णयत्वमिति नार्द्धवैशसमित्यर्थः । स्थाणुत्व पुरुषत्वलक्षणकोटिद्वयस्यैकधर्मिसम्बन्धास्फुरणे विरोधास्फुरणात्स्थाणुर्वा पुरुषोवेति वाकारार्थसामानाधिकरण्यप्रतीतिर्न स्यादिति दूषयति * मैवमिति * एकधर्मिसम्बन्धव्यतिरेकेण तयोरविरोधमेव स्फोरयति * नहीति * दोषान्तरमाह * एकधर्मीति * एकधर्मिसम्बन्धव्यतिरेकेण यदि तयोः स्वरूपादेस्तत्वमेव विरुद्धं तदा भिन्नाधिकरणयोरपि तयोः स्वरूपन्न स्यादित्यर्थः । किञ्च विशेषद्वयस्य पुरोवर्त्तिसामानाधिकरण्यानङ्गीकारे पुरोवर्त्तिनः पुरुषत्वनिर्णय एव संशयविरोधीति तस्य द्रष्टुः स्वशरीरे पुरुषत्वनिर्णयः संशयविरोधीति किं न स्यादेकविषयत्वं विना

विरोधित्वेऽविशेषादित्याह * तस्येति * सदृष्टान्तं स्पष्टयति * यथेति * ज्ञानभेदवादिनः सामानाधिकरण्यानुभवविरोधोपि भवति इत्याह * कथमिति * अभिमानमेव विशदयति * य इति * अयं घट इति विशिष्टज्ञानवदिदमर्थेन सामानाधिकरण्यादेकज्ञानत्वमित्यर्थः । स्थाणुपुरुषयोरिदमर्थेन सामानाधिकरण्याभिमानो नास्ति किन्त्विदमर्थाविवेकनिमित्तः सामानाधिकरण्यव्यवहार इत्यत आह । * कस्मादिति * आदिपदेनायं घट इत्यादिसङ्ग्रहः । प्रत्यभिज्ञानस्थले स इत्यंशस्य भिन्नज्ञानत्वमिति वक्तुं शक्यत्वादित्यर्थः । विशिष्टज्ञानं निराकुर्वता सर्वं स्वलक्षणमिति सुगतमतमाश्रितं स्यादित्याह *सञ्जात इति* असंसर्गाग्रहस्य विशिष्टव्यवहारजनकत्वे सुषुप्त्यादौ प्रसङ्गादभावे वाऽविशेषादौपाधिकाविषयेऽपि प्रतीयमानविवेकाग्रहस्य तदभावादिति भावः।

अनुभवावष्टम्भेन संशयस्य निश्चयविषयाद्विलक्षणविषयत्वं भवतीति शङ्कते ।

१२० अनुभवबलाद्वैलक्षण्यनिरासः ।

नन्वस्ति तावदयं स्थाणुर्वा पुरुषोवेति परस्परविरुद्धार्थावगाही प्रत्ययः स स्वविषयं तथाभूतमुपस्थापयिष्यति। न । उक्तबाधकैः सर्वप्रकारखण्डने परिशेषासम्भवात् ।

*नन्विति*संशयस्तावदनुभवसिद्धः सच स्वानुगुणं विषयमुपस्थापयतीत्यर्थः । असंभवेन निराकरोति *नेति* जातिनिमित्तस्योपाधिनिमित्तस्य वा खण्डनात्प्रकारान्त-

रासम्भवात्कल्पितत्वं सविषयस्य संशयस्येत्यर्थः ।

इति संशयखण्डनम् ।

---

भावाभावयोः साक्षाद्विरोधस्तदनुषङ्गादन्यत्रेति यत्कल्पनं तद्दूतासिध्यनुगतमिति विरोधखण्डनं प्रक्रमते ।

१२१ विरोधखण्डनारम्भः ।

यच्च स्वरूपमादाय विरुद्धार्थत्वमभिधीयते तदपि निर्वक्तुं न शक्यते । तथाहि । भावतदभावयोः को विरोधः । सहानवस्थानमिति चेन्न । देशभेदेन सहाप्यवस्थानात् । देशाभेदेनेति चेन्न । संयोगाद्यव्यापकत्वं यद्यभ्युपैषि तथाऽप्यनुपपत्तिः प्रकारभेदेन तथाभावस्याभ्युपगमात् । तस्य पक्षे एकेन प्रकारेणैकस्मिन् सहानवस्थानं विरोधः, संयोगाद्यव्यापकत्वानभ्युपगन्तृपक्षेच. देशाभेदेन सहानवस्थानं स इति चेन्न । तद्धि तदुभयावस्थानसाहित्यनिषेधोवा तदुभयावस्थाननिषेधसाहित्यं वा स्यादाद्येऽप्रसिद्धप्रतियोगिकत्वं, तदुभयावस्थानसाहित्यस्य क्वचिदप्यप्रमितेः शशविषाणनिषेधादेश्च शशके विषाणनिषेधादिरूपत्वाङ्गीकारेण प्रसिद्धप्रतियोगिकत्वाभ्युपगमात् ।

यदाहैको "वस्तुनः प्रतियोगिते"ति ।

अन्यश्च—

"लब्धरूपं क्वचित्किञ्चित्तादृगेव निषिद्ध्यते" इति ।

*यच्चेति* भावाभावयोरसहावस्थानं विरोध उत परस्परप्रतिक्षेपात्मकत्वमिति विकल्पयति *तथाहीति* परोविरोधं शङ्कते *सहेति* एककालत्वं सहार्थ उत देशैक्यमुत तदुभयैक्यमिति विकल्प्य प्रथमं प्रत्याह *नेति* देशभेदेनैकस्मिन् काले घटतदभावयोरवस्थानाद्विरोधासिद्धिरित्यर्थः। तृतीयं शङ्कते * देशेति * कालभेदेनैकस्मिन् देशे भावाभावावस्थानाद्विरोधासिद्धिरिति द्वितीयोबहिरेव दूषितो मन्तव्यः। संयोगविभागशब्दात्मविशेषगुणानामव्याप्यवृत्तित्वमुत व्याप्यवृत्तित्वमिति विकल्प्य प्रथमं दूषयति * नेति * देशाभेदेनापि सहानवस्थानानुपपत्तिः संयोगादेरेकस्मिन्द्रव्ये भावाभावोपगमात्तदव्यापकत्वमित्यर्थः। द्वितीयकल्पं कटाक्षेण शङ्कते * प्रकारेति * योऽपि च वैशेषिकः संयोगादिरव्याप्यवृत्तित्वमिच्छति तस्य पक्षे संयोगादेर्भावाभावयोऽसहानवस्थानस्याकाशादौ कल्पितप्रदेशेनाभ्युपगमादेकस्मिन्देशे सहानवस्थानं भावाभावयोर्विरोध इत्यर्थः। आधुनिकस्याभिप्रायमाह * संयोगादीति * अव्याप्यवृत्तिपक्ष एकेन प्रकारेणेति विशेषणमुपादेयं न व्याप्यवृत्तिपक्ष इत्याशयः। मतद्वयेऽपि सहानवस्थानशब्दार्थो निरूपयितुं न शक्यत इति परिहरति * नेति * सहपदस्य किमसमस्तेनानवस्थानपदेन सम्बन्ध उत समस्तेनानवस्थानपदेनेति विकल्पार्थः। भावाभावयोरेकदेशकालसंसर्गोऽवस्थानं निषेधप्रतियोगीत्युक्तं स्यात्तच्च संभवत्यप्रमितप्रतियोगित्वप्रसक्तेरित्याह *आद्यइति * कुत इत्यत आह * तत्तदिति *

अप्रसिद्धप्रतियोगिकत्वं निषेधस्य न दूषणमप्रमितस्य शशविषाणादेर्निषेधदर्शनादित्यत आह * शशेति * शशस्य के–शिरसि प्रमिते धर्मिणि गवि प्रमितं विषाणमारोप्य निषिध्यत इत्यर्थः । अत्राभियुक्तवचनमाह * यदेति * धर्मिप्रतियोगिनौ वस्तुनी एवास्मिन्मत इत्यर्थः । वचनान्तरमाह * अन्य इति *

सहपदस्य निषेधान्वय इति द्वितीयं दूषयति ।

१२२ सहपदस्य निषेधान्वय इति द्वितीयकल्पदूषणम् ।

द्वितीये तु तदुभयावस्थानसाहित्यस्वीकार एव स्यात्तदुभयनिषेधयोस्तदुभयतयैवाङ्गीकारात् । परस्परप्रतिक्षेपकत्वं विरोध इति चेन्न । तद्धि परस्परप्रतिक्षेपं प्रति कारणत्वं वा तादात्म्यं वा, न प्रथमः प्रमाणाभावेन तथाविधतत्कार्यानङ्गीकारात् । न द्वितीयः प्रतिक्षेपशब्दार्थस्योभयानुगतस्यानिर्वचनात् । यत्रैकस्य सत्त्वं तत्रापरस्यासत्त्वं नियमेन यत्स विरोधस्तयोरिति चेन्न । सत्त्वासत्त्वयोरेकापराश्रयत्वे वैयधिकरण्यात् । सम्बन्धस्य तद्व्यतिरिक्तत्वे एकसत्त्वस्यैव चापरासत्त्वात्मकतया स्वीकारेण यत्रैकस्य सत्त्वं तत्रैकस्य सत्त्वमितिवचनार्थप्रसङ्गेन पौनरुक्त्याद्यापातात् । यत्र घटाभाव इत्यत्र खल्वयमर्थो यन्नाम ? यस्याऽधेयतया सम्बन्धी घटाभावस्तत्र घटो नास्तीत्यस्याप्ययमर्थः तस्याधेयतया सम्बन्धी

घटाभाव इति, यत्र घट इत्यस्य कोऽर्थः यस्याधेयतया सम्बन्धी घटः तत्र घटाभावो नास्तीति कोऽर्थः तस्याधेयतया सम्बन्धी घटाभावसम्बन्धनिषेधः घटाभावसम्बन्धस्य घटाभावात्मकतया घटाभावनिषेधस्यापि घटात्मकतेति। तस्मात्तस्याधेयतया सम्बन्धी घट इत्येवार्थ अतो घटतदभावयोर्भेदं मनसिकृत्यापि न विप्रतिपत्तव्यमिति ।

* द्वितीय इति * तावेव भावाभावावुभयं तदुभयम्। तत्र हेतुमाह *तदिति* भावावस्थाननिषेधस्याभावत्वादभावावस्थाननिषेधस्य च भावत्वान्निषेधसाहित्ये भावाभावसाहित्यं स्यात्तच्च न भवतीत्यर्थः। सहानवस्थानं भावाभावयोर्विरोध इति कल्पं निराकृत्य परस्परं निषेधत्वं स इति द्वितीयकल्पमुत्थापयति *परस्परेति* दूषयितुं विकल्पयति* तदिति * परस्परप्रतिक्षेपं करोतीति परस्परप्रतिक्षेपक उत परस्परप्रतिक्षेप एव परस्परप्रतिक्षेपकः स्वार्थे कप्रत्ययाङ्गीकारादिति विकल्पार्थः । प्रथममपवदति * नेति * भावाभावव्यतिरिक्तप्रतिक्षेपशब्दार्थो नोपपद्यते तार्किकैर्बैराश्याश्रयणात् कुतस्तत्कारणत्वं कारणत्वखण्डनाच्चातोलक्षणासम्भव इत्यर्थः । भावप्रतिक्षेपत्वमभावस्य रूपमभावप्रतिषेधत्वं च भावस्येत्यनुगतस्य तस्याऽनिर्वचनादन्योन्याश्रयाच्चासिद्धिरित्याह *न द्वितीय इति * लक्षणान्तरं शङ्कते *

यत्रेति * एकस्य सत्वेऽन्यतरस्य काकतालीयासत्वस्य भावधर्मत्वादसत्वस्य चाभावधर्मत्वात्तयोरेकनिष्ठत्वाभावेन वैयधिकरण्यं त्वया तु यत्र सत्वं तत्रासत्वमिति वदता तयोरैकाधिकरण्यं विरोध इष्टः स न सिद्ध्यतीत्यर्थः। एकश्चापरश्च एकापरौ भावाभावौ तदाश्रयत्व इति यावत्। सत्वासत्वयोर्भावाभावाश्रयत्वेनासामानाधिकरण्यमित्युक्तमत्रैव दोषान्तरमाह * सम्बन्धेति * यत्रैकस्य सत्वमित्यनेन सम्बन्ध उच्यते तत्रापरस्यासत्वमित्यनेन सम्बन्धाभाव इत्येवं सत्वासत्वयोः सम्बन्धस्य तद्व्यतिरेकरूपत्वे विरोधस्य परस्परप्रतिक्षेपकत्वात्तयोर्यत्र भावस्य सत्वं तत्राभावस्यासत्वमितिवदतोक्तमेव पुनरुक्तं स्याद्विरोधे लक्ष्ये लक्षणस्य वृत्तिरपि नोक्ता· स्यादितरेतरस्वरूपव्यावृत्त्याऽव्याप्तिश्चेत्यर्थः । एतदेव दृष्टान्तेन स्फुटयति * यत्रेति * यत्र घटो· नास्तीत्याभ्यां यत्र घटाभाव इत्यस्यार्थमभिधाय तत्र घटो नास्तीत्यस्यार्थमाह * तत्रेति * एतदुक्तं भवति यत्र घटाभावोऽस्ति तत्र घटोनास्तीत्याभ्यां यत्र घटाभावोस्ति तत्र घटाभावोस्तीत्युक्तं स्यादिति। यत्र घटस्तत्र घटाभावो नास्तीति द्वितीयवाक्यस्यार्थं विमृशति *यत्र घट इति* यत्र घटः तत्र घटाभावो नास्तीति वचनस्य घटाभावसम्बन्धनिषेधश्चेदर्थस्तर्हि न पौनरुक्त्यं सम्बन्धनिषेधस्य घटात्मत्वाभावादित्याशङ्क्याह *घटाभावसम्बन्धस्येति* अभावस्य संयोगसमवायानङ्गीकारात्स्वभाव एष

सम्बन्धः सम्बन्धनिषेधो नाम घटाभावनिषेध एव तस्य घटात्मतया स्यादेव पौनरुक्त्यमित्यर्थः । एवं व्युत्पाद्योपसंहरति *तस्मादिति* घटपटयोरिव घटतदभावयोरपि भिन्नत्वात्कथमेकनिषेधेऽन्यस्य विधिरित्याशङ्क्याह * अतइति * घटतदभावयोर्भेदेपि घटतदभावसम्बन्धनिषेधयोरभेद इत्यर्थः ।

उक्तदोषपरिहारायाभिप्रायं शङ्कते ।

१२३ दोषपरिहारशङ्कानिरासः ।

यत्रैकस्यावस्थानं तत्रैकस्यैवेति नियमाभिप्रायेण न पौनरुक्त्यादिरिति चेन्न । नियमस्य यत्किञ्चिदन्यव्यवच्छेदकत्वेऽसिद्धत्वापातात् । विरोधिव्यवच्छेदकत्वस्य च विरोधानिर्वचनेऽनिर्वचनात् । अभावपक्षे भावव्यवच्छेदो भावपक्षे चाभावव्यवच्छेदो नियमार्थ इति चेन्न। एकरूपानभिधानेऽनुगतविरोधानिर्वचनात् । किं च भावाभावव्यवच्छेदयोरभावभावविधानातिरिक्तयो रनभ्युपगमे पुनरपि च यत्र भावस्तत्र भावोयत्राभावस्तत्राभाव इत्युद्देश्यविधेयभावानुपपत्तिरभेदादिति पौनरुक्त्याधिकफलाभाव एव ।

* यत्रेति * यत्रैकस्य सत्त्वं तत्रापरस्यासत्त्वमित्यनेन यत्रैकस्य सत्वं तत्रैकस्यैव सत्वमिति नियमस्य विवक्षितत्वान्न पौनरुक्त्यादिरित्यर्थः। एकस्यैवेत्येवकारेण यत्किञ्चिद्व्यवच्छेद्यमुत विरोधीति विकल्प्य प्रथमं

दूषयति *नेति* घटाश्रयनिष्ठतया यावत्किञ्चिदन्यद्व्यवच्छिद्यते चेदसम्भवित्वं तत्र रूपादेरपि भावादिति-यावत् । द्वितीयं दूषयति *विरोधेति* विरोधासिद्धौ विरोधिनोऽप्यसिद्धेस्तद्व्यवच्छेदो न सिध्यतीत्यर्थः। प्रकारान्तरेण नियमार्थं शङ्कते *अभावेति* यत्रैकस्यासत्वं तत्रैकस्यैवासत्त्वमित्यभावपक्षे भावो व्यवच्छेद्यः यत्रैकस्य सत्वं तत्रैकस्यैव सत्वमिति भावपक्षे भावो व्यवच्छेद्य इति यावत् । क्वचिद्भावव्यवच्छेदो विरोधः क्वचिदभावस्येत्युक्तं तत्रानुगतविरोधनिरुक्तिर्न स्यादिति दूषयति * नेति * एवमपि पूर्वोक्तमेव पौनरुक्त्यं फलति नाधिकं फलं सिध्यतीत्याह * किञ्चेति * भावव्यवच्छेदोऽप्यभावोऽभावव्यवच्छेदश्च भाव एवातो नान्यत् उद्देश्यविधेयभावस्य भेदसापेक्षस्यानुपपत्तेः पौनरुक्त्यमित्यर्थः ।

एवं भावाभावस्वरूपातिरिक्ते विरोधे ध्वस्ते स्वरूपपक्षं शङ्कते ।

१२४ भावाभावयोः स्वरूपत एव विरोध इति शङ्का ।

स्यादेतत् भावाभावयोः स्वरूपमेव विरोधः, नचैवं सत्यविरुद्धतापत्तिः यथा सत्ता भावरूपैव सती स्वात्मनि सदिति भवितृव्यवहारं करोति तथा भावाभावौ विरोधात्मानावेव स्वात्मनि विरुद्धरूपं भवितृव्यवहारं कुर्वाते, कस्यैतौ विरोध इति चानुयोगे स्वाश्रयस्येत्युत्तरं, किं तत विरोधफलमिति प्रश्ने भेदव्यवस्थानमित्यभिधेयम् । यदाह—

"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति"।

*स्यादिति* तर्हि भावाभावौ विरोधाविति व्यवहारः स्यान्नतु भावं विरुणद्धीतिकर्तृव्यवहारो न स्यात्तदा च सहावस्थानमपि प्रसज्येतेत्याशङ्क्याह * नचेति*भावस्य स्वात्मनि भवितृव्यवहारप्रवर्त्तकत्वं दृष्टान्तेन स्पष्टयति *यथेति* विरोधो नाम धर्मः स च कस्य चित् धर्मिणो भवति नतु भावाभावयोरेव धर्मित्वं स्वनिष्ठत्वापत्तेरित्याशङ्क्याह * कस्येति * यत्र भूतलादावाश्रितौ तस्यैव तौ विरोधावित्यर्थः। स एव विरोधो भवति यः स्वाश्रये विरोधफलं प्रसूते ऽतो न भावाभावयोर्विरोधत्वमाश्रये फलाऽजनकत्वादित्याशङ्क्याह * किमिति * भावाभावाधिकरणयोर्नियमेन भेद एव फलमित्यर्थः। अत्राभियुक्तवचनमुदाहरति *यदेति * भावाभावयोः स्वात्मनि भवितृव्यवहारे हेतुत्वाद्विरोधयोरपि विरुद्धं विरुद्धधर्माध्यासस्य चाश्रयभेदहेतुत्वमनेन दर्शितं तच्च भावाभावयोरस्तीत्यर्थः। हेतुफलयोरभेदोपचारादयमभेद इत्युक्तमिति द्रष्टव्यम्।

विकल्पासहत्वेनैतद्दूषयति।

१२५ विकल्पस्य स्वरूपपक्षखण्डनम्

तदेतदनुपपन्नम्। एतयोर्विरोधत्वं प्रत्येकं वा स्यान्मिलितयोर्वा। नाद्यः प्रत्येकमेवाश्रयैकत्वभङ्गप्रसङ्गात्। नैकत्वाभावोभेदोऽभिमतः किन्त्वन्योन्याश्रया-

पेक्षभेदरूपधर्मवत्त्वमिति चेन्न । तस्याभावात् । कालभेदेनैकस्य भावाभावाश्रयत्वाभ्युपगमात्तदभेद इति चेन्न । तदभेदस्य स्वाभाविकस्य विवक्षितत्वे विशेषणवैयर्थ्यात् । एकोपाध्यवच्छिन्नस्य विवक्षितत्वे कालभेदाभिमतेऽपि सम्भवात् । भिन्नोपाध्यनवच्छिन्नत्वस्य विवक्षितत्वेऽसम्भवात् । असहावस्थितभिन्नोपाध्यनवच्छिन्नत्वस्य वाञ्छितत्वे सहत्वस्यैककालरूपत्वेन तत्रापि कालाभेदविकल्पानुवृत्त्यापत्तेः ।

* तदिति * आद्यमपवदति * नेति * भावत्वस्याऽभावत्वस्य वाऽन्यानपेक्षस्य विरोधत्वात्प्रत्येकं तदधिकरणस्य विरुद्धधर्माध्यासात्स्वस्मादपि भेदप्रसङ्गः । विशेषं शङ्कते *नैकत्वेति* नैकत्वाभावो विरोधफलमपि तु भेदः स च नैकत्वाभावो भावाश्रययोरन्योन्यापेक्षया भेदरूपधर्मवत्वं विरोधफलमित्यङ्गीकारादतो नोक्तदोष इत्यर्थः । क्रमेण भावाभावाश्रयत्वेऽप्येकस्य तथाभूतधर्मवत्वाभावान्नैवमिति परिहरति * नेति * कालाभेदे भावाभावाश्रययोर्भेदधर्मवत्वं विरोधफलमिति विशेषं शङ्कते * तदिति * कालस्य स्वाभाविकोभेदो विवक्षित उतौपाधिक इति विकल्प्याद्यं दूषयति * नेति * क्रमेणैकस्य भूभागस्य भावाभावाश्रयत्वं भवत एकस्मिन् कालेऽस्तीति विशेषणवैयर्थ्यमित्यर्थः । द्वितीयं दूषयति * एकेति * मुहूर्त्तयामादिभेदेऽप्येकोपाध्यवच्छि-

नादिवस एकस्मिन् मुहूर्त्ते घटसंसर्गिभूतलस्य मुहूर्त्तान्तरे घटाभावसंसर्गिणो भेद एव स्यादेकोपाध्यवच्छिन्ने काले भावाश्रयत्वादित्यर्थः । भेदेनोपाध्यनवच्छिन्नत्वं कालस्यैक्यं विवक्षितं नचैवमतिप्रसङ्गस्तत्र मुहूर्त्तादिकालावच्छेदकोपाधीनां भेदादित्याशङ्क्याह * भिन्नेति * सहावस्थितैरनेकैश्चन्द्रसूर्यादिपरिस्पन्दैरेकस्यापि क्षणस्यावच्छिन्नत्वादसम्भव इत्यर्थः । सूर्यादिगतिभेदः सहावस्थायी ततोऽन्येनासहावस्थिताभिन्नोपाधिनाऽनवच्छिन्नकालस्यैकत्वं विवक्षितं चेत् तत्राह * सहेति * असहत्वं नाम सहत्वनिषेधस्तच्च सहत्वनिरूपकं कालैक्यमेव तदपि स्वाभाविकमौपाधिकं वाऽऽद्ये विशेषणवैयर्थ्यमौपाधिकत्वे च केन चिदुपाधिनाऽवच्छिन्ने कालविशेषे संवत्सरादिलक्षणे वर्त्तमानानेकोपाधिभिरवच्छिन्नत्वसम्भवेनासम्भवो यत्र सहावस्थिताभिन्नोपाध्यनवच्छिन्नत्वं तदाऽनवस्थेत्यर्थः ।

मिलितयोर्भावाभावयोर्विशेषमिति द्वितीयं पक्षमादाय विकल्पयति ।

१२६ द्वितीयविकल्पस्य विकल्पेन खण्डनम् ।

मिलितत्त्वं चानयोरेकदेशत्वं वाऽभिमत,मेककालत्वं वा, एकप्रकारेण वृत्तिर्वा, वृत्तिप्रकारान्यैकोपाध्यवच्छेदो वा । नाद्यः भावात्यन्ताभावयोस्तदभावात् । न द्वितीयः भावस्य प्रध्वंसप्रागभावाभ्यां तदनुपपत्तेः । न तृतीयः संयोगाद्यव्याप्यवृत्तितावादिपक्षे गगनादौ सं-

योगभावाभावयो स्तदभावात् । अव्याप्यवृत्तिधर्मान-भ्युपगन्तृपक्षे भावाभावयोर्वृत्तौ प्रकारान्तराभावे प्रमा-णाभावात् ।

* मिलितेति * एकप्रकारेणेति * येन प्रकारेण भावस्य वृत्तिरभावस्यापि तेनैव प्रकारेणेत्यर्थः । वृत्तिप्रकारातिरिक्तः कश्चिद्भावाभावयोरुपाधिर्भवि-ष्यति तदवच्छिन्नत्वमेवानयोर्मिलितत्वमित्यन्तिमक-ल्पार्थः । आद्यं दूषयति * नेति * गवि शृङ्गं तदभाव-स्तु शशमस्तके तत्संसर्गाभावोऽत्यन्ताभाव उच्यते तयोर्भावात्यन्ताभावयोरेकदेशत्वाभावादविरोधाप-त्तिरित्यर्थः । तृतीयं निराकरोति * नेति * गगनादौ संयोगादितदभावयोरेकदेशप्रकारेण वृत्तिर्नास्ति प्रदे-शभेदेन तयोरभ्युपगमात्संयोगस्य च समवेतत्वप्रका-रेण वर्त्तमानत्वात्तदभावस्य च विशेषणविशेष्यभा-वेन वर्त्तनादित्यर्थः । गगनादौ संयोगादिभाव एव न तदभावो निरवयवेषु प्रदेशभेदाभावादित्याशङ्क्याह * अव्याप्येति * अव्याप्यवृत्तय एव चेन्न सन्ति तदा भावाभावयोरेकत्र मिलितत्वेन वृत्तौ प्रकारा-न्तराभावे प्रमाणं नास्त्येवेत्यसिद्धिरित्यर्थः ।

तुरीयकल्पं निराकरोति ।

१२७ चतुर्थविकल्पनिरासः ।

नाऽपि चतुर्थः । सहि यदि निर्देष्टुं शक्यते तदाऽपि भावप्रागभावयो र्भावप्रध्वंसयोर्वैकदाऽनभ्युपगमेन त-

द्विशेषितयोरप्येकदाऽवश्यमनभ्युपगन्तव्यतया कदा विरोधस्य तदाश्रयतेति वक्तुमशक्यत्वात्। किञ्च भावप्रागभावयो र्भावप्रध्वंसयोर्वा यदि तथा भावोऽभ्युपगम्यते तदाश्रयभेदप्रसङ्गः, अभावान्तरेऽपि सावकाशत्वात् न परस्परप्रतिक्षेपात्मकत्वं, परस्परप्रतिक्षेपात्मकत्वं हि भावात्यन्ताभावयोरेव। अथ नाऽभ्युपगम्यते तदा भावप्रागभावयोर्भावप्रध्वंसयोश्चाविरोधापत्तिः। तदसत्त्वमात्रयोर्विरोधो न तु तत्तदसत्त्वविशेषयोरिति चेन्न। विशेषस्य तथाऽप्यविरोधात्कदाऽपि सहावस्थितियोग्यतापत्तेः। नियमेन तथात्वे च विरोधव्याघातात्। मात्रशब्देन च यदि विशेषशून्यत्वमसत्त्वस्योच्यते तदा तदनभ्युपगम एव प्रमाणाभावात् नहि निर्विशेषासत्त्वमात्रसद्भावे प्रमाणमभिधातुं शक्यते। अथ मात्रशब्दोपादानं सत्यपि विशेषेऽसत्त्वस्य साधारणरूपपुरस्कारेण विरोधव्यवस्थितिप्रदर्शनार्थं तदा भावप्रध्वंसयोस्तादृगेव दोषापत्तिः। प्रध्वंसादौ विशेषे सामान्यरूपस्यावश्याभ्युपगम्यत्वात्तदादायेव विशेषे विरोधपर्यवसानात्।

*** नापीति *** तथाभूतोपाध्यनुपलम्भात्तथाप्यङ्गीकृत्य ब्रूमहे तयोरेकोपाध्यवच्छिन्नयोरप्येकदाऽवस्थानं न सम्भवति स्वस्वाभावयोस्तथाऽनुपलब्धेस्ततः कदाचिद्विरोधस्य तदाश्रयतेति वक्तुं न शक्यते

विरोधोऽप्युभयधर्मः स च धर्मिणोऽसहावस्थानमपेक्षते वर्त्तमानधर्मस्य वर्त्तमानधर्मिनिष्ठत्वनियमात्ततो भिन्नकालीनयोर्न विरोधः सिध्यतीत्यव्याप्तिरित्याशयः । भावाभावयोर्विरोधस्वरूपत्वं वदता किं विशेषरूपयोर्विरोधरूपत्वमङ्गीक्रियते नवेति विकल्प्याऽऽद्यं प्रत्याह * किञ्चेति * आश्रयान्तरे घटे जातेपि प्रागभावो न निवर्त्तेत प्रध्वंसे वान्यत्रैवोत्पन्ने घटस्तत्रैवावतिष्ठेतेत्याश्रयभेदप्रसङ्गस्तथा विरुद्धयोरपि संसर्गतदभावयोः प्रसिद्धेरित्यर्थः । भावाभावयोर्भिन्नाश्रयत्वप्रसिद्धेः संसर्गाभावे सावकाशत्वान्न प्रागभावभावप्रध्वंसाभ्यां तत्प्रतियोगिनः सहाश्रयभेदेनैकदा सत्वमित्याशङ्क्याह * अभावान्तरेपीति * प्रागभावादिव्यतिरिक्तसंसर्गाभावे विरुद्धत्वस्यापि तथैव सावकाशत्वान्न प्रागभावादौ विरोध इति पुनरप्येकोपाधौ प्रागभावादेः स्वप्रतियोगिसामानाधिकरण्यमापन्नमित्यर्थः । द्वितीयं प्रत्याह * अथेति * प्रागभावप्रध्वंसाभ्यां भावस्य विरोधो न स्यादित्यर्थः । भावाभावयोः साधारणरूपयोर्विरोध इष्यते ततो घटप्रागभावाद्योर्विरोधताऽङ्गीक्रियते नवेति विकल्पोऽनवसरग्रस्तस्तयोरपि तदधिकरणत्वादिति एवं तर्हि प्रागभावप्रध्वंसात्यन्ताभावानां विशेषरूपतया विरोधाभावात्कदाचित् स्वप्रतियोगिना समानदेशत्वं स्यादिति दूषयति * नेति * विरुद्धसमानाधिकरणत्वान्न विशेषाणां सहावस्थानप्रसङ्गोऽनुपलब्धेश्च तथेत्याशङ्क्याह * क-

दापीति * भावाभावाश्रययोरेव विरोध इत्युक्तत्वान्न स्वतो विशेषाणां विरोधो नच विरोधिसम्बन्धितया विरोधस्तथासति स्वाभावविरुद्धघटसंसर्गितया भूभागगगनयोरपि विरुद्धत्वप्रसङ्गादित्यर्थः। विशेषस्य प्रतियोग्यविरोधेपि सहस्थित्यभावनियमः किं न स्यादित्यत आह * नियमेनेति * नियमेन विशेषस्याप्यसहावस्थानान्न विशेषयोर्विरोध इति वचनं निरुक्तं स्यादित्यर्थः । किञ्च मात्रशब्देनासत्वस्य किंविशेषवत्वं व्यावर्त्यते, अथ सत्यपि विशेषे तदनपेक्षया विरोधप्रयोजकत्वं, आद्ये तदेव न स्यात् किं निर्विशेषोघटाभाव इति, विशेषघटित एव तस्मिन्प्रमाणप्रसरादित्यर्थः । द्वितीयं शङ्कते * अथेति * घटतत्प्रध्वंसयोर्भिन्नाश्रयत्वापत्तिस्तदवस्थैवेति दूषयति * तदेति * कुत इत्यत आह * प्रध्वंसेति* सामान्यद्वारेण विरोधाङ्गीकारादित्यर्थः ।

इति विरोधखण्डनम् ।

---

बन्धाभावं मोक्षमिच्छता बन्धतदभावयोर्विरोध इष्टः इदानीं तदनभ्युपगमेन तवानिष्टापत्तिरिति शङ्कते ।

१२८ तर्कखण्डनारम्भः ।

भावाभावयोर्विरोधानभ्युपगमे तवाऽप्यनिष्टापत्तिरिति चेत् । केयमापत्तिः । तर्कभेद इति चेत् अथ कस्तर्कः ? अभ्युपगतव्याप्यं प्रति व्यापकप्रसञ्जनं सः तत्प्रसञ्जनं

च स्वीकारार्हताबोधनमितिचेन्न । अव्याप्तेः अस्तिह्य-प्रसङ्गोऽपि सम्भावना नाम तर्कः तद्यथा—यदि जलं सहकारिभिः सम्पत्स्यते तदा मे तृषं शमयिष्यतीति । इष्टापादनेऽपि गतत्वाच्च । अनभ्युपगतव्यापकमित्यपीति चेन्न । तथाभूतमपि प्रत्यव्याप्यादव्यापकप्रसञ्जने गत-त्वात् । व्याप्येनेत्येपिकार्यमिति चेन्न । विकल्पासहत्वात् । किं परमार्थतो व्याप्यव्यापकभावव्यवस्थितयोः स्वरूपे-णेष्टानिष्टत्वमुत व्याप्यव्यापकयोर्भावेन तत् । नाद्यः त-थात्वाज्ञानेन वैपरीत्येनेष्टेनापि प्रसञ्जने प्रसङ्गात् । अन्य-था परैस्तथात्त्वेनानङ्गीकृतेन स्वयमपि परान्प्रति तथा-त्वेन व्युत्पादयितुमशक्तेन परमार्थतस्तथाभूतेन प्रसञ्ज-ने जयप्रसङ्गात् ।

*भावेति* बन्धमोक्षव्यवहारोऽपि कल्पित एवेति न मेऽनिष्टापत्तिरुक्तं हि देवकीसुतेन ज्ञानमूर्त्तिना—

"बद्धोमुक्त इति व्याख्या गुणतो नच वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनमिति"

आपत्तेरनिरूप्यत्वादिति नापत्तिरित्याह *केति* प्रश्नं मत्वोत्तरमाह * तर्केति * यदाह वैशेषिकः द्वि-विधस्तर्कः सम्भावनात्मकः प्रमित्युत्पादोपयोगीति, प्रसङ्गरूपो विपक्षविरोधी प्रतिबन्धकापनयनार्थः त-दुभयोपाहितमनुमानं श्रुतीरपि बाधत इति तत्प्रसङ्गेन

तर्कखण्डनमुपक्रमे * अथेति * आरम्भार्थोऽथशब्दः। तर्कलक्षणं शङ्कते * अभ्युपगतेति * व्यापकप्रसञ्जनं तर्क इत्युक्तेऽनभ्युपगतव्याप्यं प्रति तत्प्रसञ्जनस्याभासस्य तर्कत्वप्रसक्तिं निवारयति * अभ्युपगतेति * अव्यापकप्रसञ्जने आभासे प्रसक्तिनिवारणाय व्यापकेत्युक्तम्। स-तर्क इत्यर्थः। किमिदं प्रसञ्जनमित्यत आह * तदिति * द्विविधेपि तर्केऽनुगतं तर्कलक्षणं वाच्यं त्वया तु प्रसङ्गस्य लक्षणं क्रियते तत्सम्भावनायां न वर्त्तते इत्यर्थः। अव्याप्त्या दूषयति *नेति* अव्याप्तिभूमिरेव नास्तीत्यत आह * अस्तीति * सम्भावनातर्कस्योदाहरणमाह * तदिति * व्याप्तमस्ति चेद्व्यापकं स्यादेवेति निश्चयरूपः प्रसङ्ग इदं तु सम्भावना नैवमित्यव्याप्तिरित्यर्थः। अतिव्यापकं चेहगहेष्टेति येन गिरेरग्निमत्त्वमिष्टं तं प्रति यदोच्यते यद्ययमग्निरधूमः स्यादिति तदा तस्मिन्निष्टापादने तर्काभासेपि गतमित्यतिव्याप्तिरित्यर्थः। अनभ्युपगतव्यापकं प्रति अभ्युपगतव्याप्यं व्यापकप्रसञ्जनं तर्क इति लक्षणस्वीकारान्नोक्तदोष इति शङ्कते * अनेति * दूषयति * नेति * इन्धनवत्वे पर्वतस्याग्निमत्वं प्रसज्ज्येतेत्यव्याप्येनानभ्युपगतपर्वताग्निं प्रति सञ्जनेऽतिव्याप्तिः स्याद्दैवगत्या तेन व्याप्यधूमस्य स्वीकारसम्भवादित्यर्थः। अनभ्युपगतव्यापकमभ्युपगतव्याप्यं च प्रति व्याप्येन व्यापकप्रसञ्जनं तर्क इति विशेषणान्नोक्तदोष इति शङ्कते * व्याप्येनेति * विकल्पे क्रियमाणे स्वकार्यं निर्वोढुमसहत्वान्नैवमित्याह *नेति*

विकल्पमेव दर्शयति *किमित्यादिना* वस्तुगत्या व्याप्यतया व्यापकतया च व्यवस्थितयोर्व्यापकांशमपहाय स्वरूपेण धूमवत्त्वस्येष्टत्वं अनिष्टत्वं वाग्निमत्त्वस्योत तयोर्व्याप्यव्यापकाकारेणेष्टत्वानिष्टत्वामिति विकल्पार्थः । प्रथमं प्रत्याह *नेति* कोष्ठं गत्वा विद्यमानोपि धूमाग्न्योर्व्याप्यव्यापकभावो यत्र न ज्ञायते तत्र धूमेन वह्नेः प्रसञ्जनं तर्कः स्यान्न स तर्कोऽन्यतरासिद्धव्याप्तिकतया प्रशिथिलमूलत्वादुभयसिद्धव्याप्तेरिव तर्कमूलत्वादित्यर्थः । दूषणान्तरमाह *वैपरीत्येति* धूमस्य व्यापकत्वमग्नेश्च व्याप्यत्वं येनेष्यते तं प्रति धूमेनैवाग्नेः प्रसञ्जनं तर्कः स्यान्नचासौ तर्को धूमस्य व्याप्यत्वस्य वह्निव्यापकत्वस्य तं प्रत्यसिद्धेरित्यर्थः । अज्ञातव्याप्यभावस्वरूपज्ञातधूमेन यद्व्यापकप्रसञ्जनं स तर्क एवेत्यत आह *तथासतीति* नैयायिकादिभिस्तथात्वेनानङ्गीकृतेन मिमांसकैर्नैयायिकादीन् प्रति व्याप्यतया प्रतिपादयितुमाशङ्कितेन वस्तुगत्या व्याप्येन सह कारणत्वादिना नित्यत्वप्रसञ्जन उक्तलक्षणसम्भवे सत्तर्कत्वाज्जयप्रसङ्ग इत्यर्थः । अन्यथेति केचित्पठन्ति तदर्थ एवंविधस्यासत्तर्कत्वानङ्गीकारे तथात्वेन व्याप्यत्वेन परैरनङ्गीकृतेन सहकारणत्वेनेतियावत् तथाप्यन्यतरासिद्धं न स्यात्स्वयमेव परं प्रति साधयितुं व्याप्यं शक्नोति चेदित्यत आह * स्वयमिति * वादिप्रतिवादिनोरपरिज्ञाने व्याप्यव्यापकभावस्तर्हि न स्यादित्याह * परमार्थेति *

व्याप्यव्यापकभावेनेष्टत्वानिष्टत्वमिति द्वितीयं दूषयति ।

१२९ द्वितीयविकल्पखण्डनम् :

न द्वितीयः स्वयमपि तथेष्टानिष्टतायां सत्यां कृते तादृशि प्रसङ्गे "यत्रोभयो"रित्यादिना दोषेण सत्प्रसङ्गतयाऽनिष्टेऽपि गततयाऽतिव्यापकत्वात् । स्वयं व्याप्यतयाऽनिष्टेनेत्यपि विशेषणीयमितिचेन्न । स्वयमपि व्याप्यतयेष्टेन स्वमात्रेष्टव्यापके विषये प्रसङ्गस्याऽव्यापनात् । अथ स्वयमानिष्टव्यापके स्वयं व्याप्यतयेष्टेन यन्न भवति तत्रानभ्युपगतव्यापकं परं प्रति पराभ्युपगतेन व्याप्येन व्यापकप्रसञ्जनं तर्कः, एवं सति हि स्वानिष्टव्यापके स्वयमिष्टव्याप्येन यत्र प्रसङ्गस्तत्रगमनादतिव्याप्तिर्या या च स्वमात्रेष्टव्यापके स्वयमपि व्याप्यतयेष्टेन प्रसङ्गस्याव्याप्तिस्ते निरस्ते भवत इति चेन्न । यद्यत्र सत्तयाऽपि घटोऽभविष्यत्तदाऽद्रक्ष्यदित्याद्यव्यापना तत्र स्वयमनिष्टदर्शनरूपव्यापके स्वयं व्याप्यतयेष्टेनैवहि दर्शनयोग्येन घटसत्त्वेनाऽप्रसङ्गः । अथ तत्र सत्तयाऽपि स्वयमिष्टेनेति निषेध्यकोटौ प्रविश्य निषेधोऽभिधीयते एवं यत्र भवतीति । तदपि न । एवम्भूते एव विपर्ययापर्यवसायिनि गततयाऽतिव्यापकत्वात् । विपर्ययपर्यवसा-

यिनेत्यपि प्रक्षेप्यमिति चेन्न। केवलपरपक्षदूषणाय परमात्राभ्युपगम्यमानव्याप्यत्वेनैवं क्षमस्य परंप्रति व्यापकप्रसञ्जनस्याव्यापनात् । तत्र स्वयं व्याप्त्यनभ्युपगमेन विपर्ययपर्यवसायित्वाऽसम्भवात् ।

*नेति* कुत इत्यत आह*स्वयमिति*व्याप्यत्वेन स्वीकृततयाऽनिष्ठे स्वयमपि व्यापकत्वेन स्वीकृततयाऽनिष्ठे परेणापि तथैव स्वीकृतविषये यथा सत्तायां सत्तानिष्ठेत्युभयसिद्धतया यदा परं प्रति व्यवहारयोगात्तमापादयति तदाऽभ्युपगतव्याप्येन अनभ्युपगतव्यापकप्रसञ्जनं भवति तथापि नासौ तर्कः स्वयमपि तथानिष्ठतया यश्चोभयोरिति न्यायेन स्वस्यापि प्रतिकूलत्वा दतश्च प्रसङ्गाभासेपि गतत्वादतिव्याप्तिरित्यर्थः। अभ्युपगतव्याप्यमनभ्युपगतव्यापकं प्रति व्याप्येनं स्वयं व्याप्यतयाऽनिष्टेन व्यापकप्रसज्जनं तर्क इत्युक्ते नातिव्याप्तिरिति शङ्कते*स्वयमिति*अव्याप्त्या परिहरति*नेति* यत्र व्याप्यस्येष्टत्वं व्यापकस्य परं प्रत्यनिष्टत्वं च यथाऽदृष्टादेः प्रमेयत्वमुभयेष्टं तत्प्रत्यक्षत्वं च परानिष्टं तद्यदा प्रमेयत्वेन व्याप्येन नैयायिकोमीमांसकं प्रति तत्प्रत्यक्षत्वं प्रसञ्जयति तस्मिन्सत्तर्के लक्षणमिदमव्यापकं स्वयमनिष्टेनेतिविशेषणाभावादित्यर्थः। उक्तदोषपरिहाराय विशेषं शङ्कते * स्वयमिति * स्वेनानिष्टे व्यापके स्वेन व्याप्यतयेष्टेन यत्प्रसञ्जनन्न भवति तत्रानभ्युपगतं व्यापकं येन परेण मीमांसकादिना तं प्रति तदभ्युपगतव्याप्येन व्यापकस्य प्रसञ्जनं तर्क इत्यर्थः।

फलितमाह * एवमिति * याऽतिव्याप्तिर्या चाऽव्याप्ति-स्ते निरस्ते इत्यन्वयः । स्वयमव्यापकतयेष्टे स्वयं व्या-प्यतयेष्टेन यत्रेति विशेषणेन व्याप्यतयेष्टेतिविशे-षणेन च क्रमेणातिव्याप्त्यव्याप्तिनिरास इति द्रष्टव्य-म् । अव्याप्त्यन्तरेण दूषयति * नेति * तामेवाव्याप्ति-मुपपादयति * अद्रक्ष्यदिति * दर्शनरूपं यद्व्यापकं तत्प्र-सञ्जनमनिष्टं व्याप्यं च घटसत्त्वदर्शनयोग्यत्वमिष्टं तेन स्वयं व्याप्यतयेष्टेन यत्रेतिविशेषणाभावादव्याप्तिरि-त्यर्थः । सत्त्वरूपेणाऽपि स्वयमनिष्टेतिविशेषणोपादानेन शङ्कते * अथेति * स्वरूपत्वव्याप्यत्वाभ्यामिष्टेन व्याप्येन यद्व्यापकप्रसञ्जनं न भवति तत्प्रसञ्जनं तर्क इति विवक्षि-तत्वमित्यर्थः । तदपि विशेषणं न कर्त्तव्यमतिप्रसङ्गादि-त्याह * तदिति * यदा हि नैयायिको ब्रह्मविदं प्रति प्रस-ञ्जयति वेदैकगम्यं चेद्ब्रह्म तदाऽग्रहोत्रवदस्वप्रकाशं स्यादिति तस्य विपर्ययापर्यवसायित्वात्प्रसङ्गो भ-वति यत्स्वप्रकाशं तद्वेदैकगम्यं न सम्भवतीति व्या-प्त्यनङ्गीकाराल्लक्षणं चेत्तत्र गच्छति वेदैकगम्यत्वस्य व्याप्यस्य ब्रह्मणि स्वयं नैयायिकेन सत्त्वयाऽप्यनिष्ट-त्वादित्यर्थः । शङ्कते *विपर्ययेति* स्वयमनिष्टव्यापके स्वयं व्याप्यतयेष्टेन यत्र भवति तत्रानभ्युपगतव्यापकं परं प्रति पराभ्युपगतेन व्याप्येन स्वयं सत्त्वयाऽप्य-निष्टेन विपर्ययपर्यवसायिताप्रसञ्जनं तर्क इति विशे-षणान्नोक्तदोष इत्यर्थः । अव्याप्त्या दूषयति *नेति* यदा हि नैयायिको ब्रह्मविदं प्रति ब्रूते ब्रह्मण उपा-दानत्वे तत्र मृदादिवद्विकारित्वं स्यादिति तदाऽस्य

प्रसङ्गस्य विपर्ययपर्यवसायित्वं नास्ति निर्विकारस्याप्याकाशस्य शब्दोपादानत्वाभ्युपगमेन विपरीतव्याप्त्यनभ्युपगमादित्यव्याप्तिः सत्तर्कतयेष्टत्वास्यस्येत्यर्थः ।

यस्य प्रसङ्गस्य विपर्यये पर्यवसानं नास्ति स प्रसङ्ग एव न भवति किन्तु विरोधमात्रमतो न व्याप्तिरिति शङ्कते ।

१३० विपर्ययापर्यवसायिनस्तर्कत्वाभावशङ्कानिरासः ।

स प्रसङ्ग एव न भवति विरोधमात्रं तदिति चेन्न । अनिष्टं व्याप्याभ्युपगमबलेन परं प्रत्यापाद्यत इत्येवम्भूतस्यार्थस्योभयत्राऽपि तुल्यत्वात् । तुल्यत्वेऽपि लक्षणकरणासामर्थ्याद्यदि विपर्ययपर्यवसायिन्येव प्रसङ्गत्वं त्वया परिभाष्येत तर्हि मया परबाधमात्र एव प्रसङ्गतायाः, विपर्ययपर्यवसायिनि तु तत्र विरोधतायाः परिभाषितुं शक्यत्वादन्यथा विरोधत्वमेवोभयोरपि स्यात् । प्रत्यवस्थानवैचित्रीचेत्तत्र विरोधाद्विशेषः साऽत्रापि तुल्यैव । अतएव सम्भावनाऽपि तर्कादन्यैवेति निरस्तम् । आरोपादपि व्याप्यतानिमित्तव्यापकाभ्युपगमाविशेषात् । अतएव परप्रमितेनेति विशिष्य परानिष्टापादनमात्ररूपविपर्ययापर्यवसायितर्कता निरस्येति निरस्तम् । परमार्थतो व्याप्त्यभावेऽपि पराभ्युपगममादाय प्रसङ्गप्रवृत्तेरुपपत्तेः । कथं हि परेण व्याप्यतयाऽनुमतात्तं

प्रति व्यापकानुमत्या नापादितव्यं, नहि प्रसङ्गो वास्तवत्वं व्याप्तेरवलम्बते। किं नाम ? अभ्युपगममात्रम्। अनभ्युपगतौ वस्तुगत्या स्थितेनाऽपि तेनापादनाप्रवृत्तेः। अत एव परस्य प्रमाणेन व्याप्यानुमतिमुत्पाद्याप्यापादनं क्रियते।

*स इति* मैवं तर्कलक्षणस्योभयत्राविशेषादिति परिहरति * नेति * स्वयमनिष्टव्याप्याभ्युपगमेन परानिष्टव्यापकापादनं तर्क इति लक्षणे विद्यमाने विरोधमात्रं न प्रसङ्ग इत्ययुक्तमित्यर्थः। एतावन्मात्रलक्षणे विद्यमानेऽपि विपर्ययापर्यवसायित्वान्नायं प्रसङ्ग इत्याशङ्क्याह *तुल्यत्वेपीति* शक्यत्वात्तदुक्तं लक्षणं नेत्यन्वयः। विपक्षदण्डेनैतद्द्रढयति * अन्यथेति * एकत्रानिष्टप्रसञ्जनमात्रेण प्रत्यवस्थानमन्यत्र विपर्यये पर्यवसायिनयेति विशेषं शङ्कते *प्रतीति* विपर्ययपर्यवसायिनि विरोधात्प्रत्यवस्थानवैचित्री तुल्येत्याह * नेति * अनिष्टव्यापकप्रसञ्जनं तुल्यमित्यर्थः। विपर्ययापर्यवसायिनो विरोधमात्रत्वाभिमतस्य प्रसङ्गतापादकन्यायात्सम्भावनायास्तर्कादन्यत्वं निरस्तमित्याह * अत इति * परामृष्टमेव हेतुं दर्शयति * आरोपादिति * व्याप्याभ्युपगमबलेन परं प्रत्यनिष्टमापाद्यत इत्येवं भूतोऽर्थः प्रसङ्गविरोधयोस्तुल्यस्तस्माद्विरोधोपि प्रसङ्ग एवेति प्रागुक्तन्यायादेव प्रमितेन व्याप्येनेति तर्कलक्षणे विशेषणं प्रक्षिप्य विपर्ययपर्यवसायिनस्तर्कत्वनिराकरणं निरस्तमित्याह * परमा-

र्थेति * तदेव वा कुत इत्यत आह * कथमिति * वास्तवव्याप्तेरेव प्रसङ्गमूलत्वात्तदभावे प्रसङ्गो न प्रवर्त्तत इत्याह * नहीति * किं तर्ह्यालम्बनं इत्यत आह * किमिति * अभ्युपगममात्रं प्रयोजकं न वस्तुत्वं गौरवादुभयस्यापि कारणत्वमित्यर्थः। विपरीतमेव तर्हि किं न स्यादित्यत आह *अनभ्युपगताविति* वास्तव्या अपि व्याप्तेरनभ्युपगतायाः प्रसङ्गानङ्गत्वे हेतुमाह * अत इति* व्याप्त्याद्यभ्युपगमाभावे प्रमाणेन व्याप्त्यादिविषयानुमतिमापाद्यापादनप्रवृत्तेर्दर्शनादित्यर्थः ।

व्याप्यतया परेणाभ्युपगतं प्रसङ्गाङ्गं न वास्तव व्याप्यत्वमित्युक्तं एतच्चोद्यमुखेन प्रपञ्चयितुं शङ्कामुत्थापयति ।

१३१ वास्तवव्याप्यत्वस्य प्रसङ्गाङ्गत्वाभावप्रपञ्चनम् ।

वस्तुगत्या व्याप्यत्वं तथात्वेनाभ्युपगतत्वं च द्वयमपि प्रसङ्गस्याङ्गमिति चेन्न । तथात्वेनाभ्युपगमस्यावश्यं प्रसङ्गाङ्गतया मन्तव्यस्य परानपेक्षस्यैव समर्थत्वे वास्तवव्याप्तत्वस्यापि प्रवेशने प्रमाणाभावात् । तस्माद्यः प्रसङ्गः स्वपक्षसिद्ध्यङ्गं तस्य विपर्ययापर्यवसायिता दोषायैव स्यात् । प्रसङ्गस्य तस्य विपर्ययपर्यवसानदार्ढ्यार्थं दण्डतयोपन्यासात् । सौगतानां सत्त्वक्षणिकत्वव्याप्तिसाधकविपर्ययान्यथाभावदण्डप्रसङ्गवत् तामन्तरेण तस्य स्वपक्षसाधनाक्षमत्वात्तस्य च व्याप्तिवा-

स्तवत्त्वमपि मन्तव्यमन्यथा विपर्ययेऽपि व्याप्त्यभावे-न स्वपक्षसाधनाक्षमत्वादेव । यस्तु प्रसङ्गः परपक्षबाध-नाङ्गं तत्र पराभ्युपगममात्रं प्रयोजकं तावतैव परपक्ष-प्रतिक्षेपसत्त्वेन वास्तवव्याप्तिविपर्ययपर्यवसानपर्यन्ता-ननुसारित्वादिति युक्तं पश्यामः तथा च सति कथित-लक्षणासङ्गतिस्तदवस्थैव ।

* वस्त्विति * प्रमाणाभावेनैतत् दूषयति * ने-ति * विपर्ययापर्यवसायिनोपि तर्कत्वं चेत्कुतस्तर्हि विपर्ययापर्यवसायिता दोष इति तद्दर्शयन्नुपसं-हरति * तस्मादिति * तत्र तस्य दोषत्वे हेतुमाह * प्रसङ्गस्येति * तत्र दृष्टान्तव्याजेन हेतुमाह * सौगतानामिति * यत्सत्तत्क्षणिकमिति व्याप्तेः प्र-साधनार्थं यद्येतदक्षणिकं स्यात्तदार्थक्रियाकारित्व-लक्षणसत्वशून्यं स्यात् स्थिरस्य क्रमयौगपद्याभ्यामर्थ-क्रियानुपपत्तेरिति बाधकेन व्याप्तिः प्रसाध्यते ततः क्षणिकत्वात्सत्वमिति तत्र विपर्यये पर्यवसानमुप-युक्तमित्यर्थः । स्वपक्षसिद्ध्यङ्गतर्कस्य विपर्ययपर्यव-सायितामन्तरेणासाधकत्वाद्विपर्ययपर्यवसानं व्याप्ते-र्वास्तवत्वं च वक्तव्यमित्याह * तामिति * तमन्त-रेणेतिपाठे विपक्षबाधकमन्तरेण सत्वाख्यसाधनस्य क्षणिकत्वलक्षणसाधनाक्षमत्वादित्यर्थः । तदुपपाद-यति * अन्यथेति * सत्वात् क्षणिकत्वमित्येवंरूप-विपर्यये व्याप्त्यभावे स्वपक्षसाधनासिद्धेरित्यर्थः ।

**कुतस्तर्हि विपर्ययपर्यवसानव्याप्तिसत्वयोरनङ्गत्वमित्यत आह * यस्त्विति * फलितमाह * तथेति * विरोधोद्भावनस्यापि तर्कत्वे सति तथाऽव्याप्तिरुक्ता युक्तैवेत्यर्थः ।**

**समनन्तरोक्ताऽव्याप्तिपरिहारमात्रप्रयोजनकतया लक्षणान्तरं शङ्कते ।**

१३२ तर्कस्य लक्षणान्तरनिरासः ।

अथ व्याप्याभ्युपगमेनानिष्टस्य व्यापकस्य प्रतीतिस्तर्क इति चेन्न । इष्टार्थसम्भावनायामव्याप्तेः । तेन व्यापकस्य प्रतीतिः स इति चेन्न । इष्टापादनेऽपि गतत्वात् । अप्रमितस्य तथेति चेन्न । प्रथमानुमानेऽपि गतत्वात् । अनुमाने व्याप्यस्य प्रमया तथात्वान्नभ्युपगमेनेति चेन्न । वस्तुगत्या व्याप्यस्य प्रमयाऽपि प्रतिवाद्यसिद्धस्य व्यापकानुमानासम्भवेन तत्राप्यभ्युपगमपर्यन्तं गन्तव्यत्वादेव । नन्वेवमन्यतरासिद्धं व्याप्यं प्रसाध्यानुमानव्यवस्थापनमुच्छिन्नं तदप्रसाधनेऽन्यतरासिद्ध्या तत्प्रसाधने परस्याभ्युपगन्तुरपसिद्धान्तादपसिद्धान्तमनुद्भाव्य यादिना प्रसाधितात् व्याप्यात् व्यापकसाधने पयनुयोज्योपेक्षणादिति किं तत्र तथा न स्यादिकमत्राप्रस्तुतया तच्चिन्तया । अन्यतरासिद्धस्य तावद्व्याप्यस्याभ्युपगमं परेणाकारयित्वैव न व्यापकसाधन-

मुपेयं तस्याऽप्रमा स इति चेन्न । मिथो विरुद्धादौ तर्काभासेऽपि गतत्वात् । आश्रयासिद्ध्यादिव्यतिरेके सतीति चेन्न । सन्दिग्धधूमदर्शनात् । यद्यत्र धूमस्तदाऽग्निमानिति सम्भावनायाः परमार्थतस्तथार्थावस्थानात् । प्रमात्वं त्यक्तुमपारयन्त्या अव्यापनात् । तत्कालं प्रमात्वेनाप्रमयिमाण इत्यपीति चेन्न । बहुशो दत्तोत्तरत्वात् । सर्वस्य चाऽस्य पूर्वोक्तोभयानिष्टव्यापकेष्टव्याप्योदाहरणे गतत्वेनातिव्यापकत्वात् । तद्व्यवच्छेदार्थमारोपितस्य व्याप्यस्याभ्युपगमेनेति करणे च सिद्धेन व्याप्येन प्रसङ्गस्याव्यापनात् । तद्यथा कार्यत्वात् यद्यदृष्टसृष्टमङ्कुरादि मीमांसकः शंसति तदानीमविशेषेणकर्तृकार्यमपि पर्यवस्येत् अस्य तदिति ।

* अथेति * स्वयमप्यभ्युपगतेन व्याप्येन तर्कत्वे परं प्रत्यनिष्टव्यापकप्रसञ्जनं तर्क एवञ्च परपक्षबाधमात्रे प्रसङ्गेनाव्याप्तिस्तत्रस्वयमभ्युपगतेनेतिविशेषणाभावादित्यर्थः । अव्याप्त्या दूषयति * नेति * यद्यत्र सलिलं स्यात् तृषं मे शमयिष्यतीत्यपेक्षितार्थसम्भावनारूपतर्के लक्षणाव्याप्तिस्तत्रानिष्टव्यापकेत्यंशाभावादित्याशयः । अनिष्टेतिविहायाव्याप्तिपरिहाराय लक्षणं शङ्कते * तेनेति * व्याप्याभ्युपगमेति यदिष्टप्रसञ्जनतर्काभासेपि गतत्वादतिव्याप्तिरिति दूषयति * नेति * व्याप्याभ्युपगमेना-

प्रमितस्य व्यापकस्य प्रसञ्जनं तर्क इति शङ्कते * अ-प्रमितस्येति * प्रमाणान्तरप्रमितस्य प्रसञ्जनमिष्टापादनमिति तद्व्युदास इत्यर्थः। पर्वते प्रमितस्य व्यापकस्याग्नेर्व्याप्यधूमाभ्युपगमेन यत्प्रसञ्जनमनुमानरूपं तस्मिन्नप्रसङ्गरूपेऽपि गतत्वादतिव्याप्तिरिति दूषयति * नेति * प्रथमेतिविशेषणमप्रमितत्वोपपादनाय। अग्निमान्पर्वतोधूमवत्त्वान्महानसवदित्यत्र व्याप्यप्रमया व्यापकप्रतीतिरुत्पद्यते नतु व्याप्याभ्युपगमेनातोनानुमानेऽतिव्याप्तिरिति शङ्कते * अनुमान इति * वस्तुगत्या व्याप्यस्य प्रमयापि यदि प्रतिवादिना तद्व्यापना नाभ्युपगम्यते तदा हेतोरन्यतरासिद्धेः कथं ततोमितिरिति तत्रावश्यमभ्युपगमोप्यङ्गीकर्त्तव्य इत्यतिव्याप्तिस्तदवस्थेति दूषयति * नेति * तत्रानुमाने व्याप्यस्य पराभ्युपगमाङ्गीकारे दोषं शङ्कते * नन्विति * तदेवोपपादयति *तदिति* तद्व्याप्यं न प्रसाध्यते चेदन्यतरासिद्धत्वादनुमितिकरणं न स्यात्, प्रसाधने च परस्य स्वीकृत्य विपरीताभ्युपगमादपसिद्धान्त इत्यर्थः। अपसिद्धान्तमनुद्भाव्य यदि प्रसाधितहेतुनाऽनुमानमुच्यते तत्राह *अपसिद्धान्तमिति* अन्यतरासिद्धं व्याप्यं प्रसाध्यानुमानव्यवस्थापनमुच्छिन्नं चेदस्तु तावत् न वयं तत्साधनाय प्रवृत्ता इति परिहरति * किमिति * अर्थान्तरं चैतदित्याह * किमत्रेति* किन्तदनुचितामित्यत आह * अन्यतरेति * परेणाप्यभ्युपगमो व्याप्यस्य वाच्योऽनुमानेऽतोऽतिव्याप्तिरित्यर्थः। व्याप्याभ्युपगमेनाप्रमितस्य व्यापक-

स्याप्रमा तर्क इति विवक्षितत्वान्नानुमानेऽतिव्याप्तिरिति शङ्कते * तस्येति * प्रतीयमानत्वं शुक्तिरूप्यादेरिष्टं चेत्सत्त्वं सत्त्वेऽपि बाध्यत्वमिष्टं चेत्तत्रासत्वं प्रसज्येतेत्यादौ मिथोविरुद्धतया प्रसङ्गाभासेऽतिव्याप्तिर्मैवमित्याह * नेति * आदिशब्देन आश्रयासिद्ध्यादयो गृह्यन्ते । अतिव्याप्तिपरिहाराय विशेषं शङ्कते * आश्रयेति * आश्रयासिद्ध्यादिव्यतिरिक्तत्वे सति व्याप्याभ्युपगमेनाप्रमितस्य व्यापकस्याप्रमा तर्क इत्यर्थः । यत्रासिद्ध्यादिव्यतिरेकोनास्ति सन्दिग्धासिद्धत्वान्नच प्रमात्वाभावो दैवगत्या वह्नेः सत्वेन यथार्थानुभवत्वात्तेन तत्र लक्षणस्याव्याप्तिरिति दूषयति * नेति* सम्भावनारूपे सत्तर्केऽव्याप्तिपरिहाराय विशेषं शङ्कते * तदिति * व्याप्याभ्युपगमेनाप्रमितस्य व्यापकस्याश्रयासिद्ध्यादिव्यतिरेके सति तत्कालं प्रमात्वेनाप्रमीयमाणा प्रमा तर्क इत्यर्थः । दूषयति * नेति * स्वयमिष्टस्य परेण चानिष्टस्य व्यापकस्य यत्रापादनं तत्राव्याप्तिस्तेन प्रमात्वेन प्रमीयमाणत्वात्तत्काला-निरुक्तेः स्वेन वादिना वा प्रमीयमाणत्वमित्यादिविकल्पानुपपत्तेश्चेत्यर्थः । पूर्वोक्तदूषणान्तरं दर्शयति * सर्वस्येति * पूर्वोक्तमुभयानिष्टव्यापकमुभयव्याप्यं [illegible]रुदाहरणं यश्चोभयोरित्यादिना दोषेण ग्रस्तं तत्रापि गतत्वादतिव्याप्तिरित्यर्थः । आरोपितव्याप्यस्याभ्युपगमेन कथितलक्षणा प्रमा तर्क इत्याशङ्क्य सिद्धेन व्याप्येन यः प्रसङ्गः सत्तर्कस्तत्राव्याप्तिरित्याह * तदिति * उदाहरणेन दर्शयति *

तादिति * अङ्कुरादि तावज्जायमानं दृष्ट्वा कार्यं वि-निश्चित्य तददृष्टस्रष्टामिति मीमांसको ब्रवीति घट-दृष्टान्तेन तदा तेन सिद्धेन कार्यत्वहेतुना सकर्तृक-त्वमपि स्यादितीश्वरवादी प्रसञ्जयतीदं प्रसञ्जनं सि-द्धव्याप्त्यैनैव क्रियते इति तस्मिन्नस्त्वनर्केऽव्याप्तिरित्य-र्थः। अस्य मीमांसकस्येत्यर्थः।

आत्माश्रयादयः सत्तर्कास्तेषां चाभासा इष्य-न्ते तेष्वाभासेषु लक्षणस्य गतत्वेनातिव्याप्तिं दर्श-यितुमात्माश्रयाद्यनुवदति।

१३३ आत्माश्रयादीनां स्वरूपनिरूपणम्।

अपि चात्माश्रयोऽन्योन्याश्रयश्चक्रकं व्याघातोऽनवस्था प्रतिबन्दी चेत्यापाद्यैर्भिद्यमाना षट्तर्कीष्यते। स्वरूपं चैषां स्वस्याऽव्यवहितस्वापेक्षणमात्माश्रयः[1] अन्यो-न्यस्याऽव्यवहितान्योन्यापेक्षित्वमन्योन्याश्रयः,[2] अन्त[3]-

---

१ स्वस्याऽव्यवहितस्वापेक्षणाभ्युपगमनिबन्धनमनिष्टापादनमा-त्माश्रय इत्यर्थः। यद्यपि स्वापेक्षित्वमप्रसिद्धं तथाऽपि घटापेक्षित्वे परैरभ्युपगम्यमाने भवत्यात्माश्रयो दोष इति विशिष्टप्रतीतावपि खण्डशः प्रतीतिरस्त्येव। यद्वा स्वापेक्षित्वं प्रमेयत्वादौ प्रसिद्धमन्य-त्राऽभ्युपगम्यमानं दोषायेति भावः।

२ अत्राऽऽत्माश्रयव्यावर्तनायान्योन्यस्येति। अन्योन्यापेक्षित्वं दीर्घत्वह्रस्वत्वज्ञानादौ कथञ्चित् द्रष्टव्यम्।

३ अन्तरितस्य व्यवहितस्य भाव्यात्माश्रयोऽन्यान्योश्रयो वा य-स्तदेव चक्रकं तेन स्वस्य द्व्यापेक्षणाभ्युपगमनिबन्धनमनिष्टापादनं चक्रकमित्यर्थः।

रितस्य तदेव द्वयमात्माश्रयोऽन्योन्याश्रयश्चक्रकं, विरुद्धे समुच्चयो व्याघातः, उपपाद्योपपादकप्रवाहोऽनवधिरनवस्था, स्वाभ्युपगतदोषतुल्यता प्रतिबन्दी ।

* अपि चेति * आपाद्यभेदेनावान्तरभेदो न तु प्रकारान्तरेण । षण्णां तर्काणां समाहारः षट्तर्कीति यावत् । किमेतेषामसाधारणस्वरूपमित्यत आह *स्वेति * एषां लक्षणं च प्रदर्श्यत इत्यध्याहारः । प्रथमो-

---

१ विरुद्धसमुच्चयाऽभ्युपगमस्तु माता वन्ध्याऽगौर्गौरयमपीत्याकारेणेत्यर्थः । अत्रहि मातरिवन्ध्यात्वमात्राऽभ्युपगमो गवि चाश्वमात्राऽभ्युपगमः सम्भवत्येव सिद्धत्वात् एवमभ्युपगन्तु र्व्याघातआपाद्यते यदि मातुर्वन्ध्यात्वं गोश्चाश्वत्वमभ्युपैषि तदा व्याघात इति न तु विरुद्धसमुच्चय एव क्वचिदपि प्रसिद्ध इतिभावः ।

२ भेदव्यवहारउपपाद्य, उपपादकश्च तस्य भेदः नहि भेदमन्तरेण तद्व्यवहारः सम्भवति एवं सत्तायां व्यवहार उपपाद्य स्तद्वता च सत्तोपपादिकेति तथाचैतादृशव्यवहाराभ्युपगमनिबन्धनमनिष्टापादनमननवस्थेत्यर्थः । अत्र यदि तृतीयश्चतुर्थो वा भेदः प्रथमभेदमपेक्षतइत्यभ्युपेयेत तथाऽपि प्रवाहाभ्युपगमोऽस्ति नचाऽनवस्थेत्यतआह *अनवधिरिति* प्रवाहस्याऽनादित्वात् कार्यकारणभावोऽप्यसिद्धोऽभ्युपगम्यते एकैकभेदबुद्धावापाद्यमानायां भेदमात्रंप्रसिद्धमेवेति भावः । आपत्तिप्रयोजकीभूतरूपवदापादनमनवस्थेत्येके । तत्र यदिसामान्यं सामान्यवत्स्यात् द्रव्यादित्रितयान्यतमं स्यादित्यापादनमियं चाऽनवस्थैवाऽनास्थेत्युच्यते नहि द्रव्यादित्रयान्यतमत्वेन सामान्यं व्यवतिष्ठत इत्यूह्यम् ।

३ यदि पुरुषत्वादयं चौरस्तदा एवं त्वमपि चौरः स्या इत्यापादननामकः प्रतिबन्दी । यद्वा परापादितं दोषमभ्युपेत्य परस्मै तदापादनेन यदनिष्टापादनं तत्प्रतिबन्दी भवति हि त्वं चोर इत्यभिदधानस्य प्रतिबन्दीति भावः ।

ह्रिष्टस्याऽऽत्माश्रयस्य लक्षणं प्रथमं दर्शयति *स्वेति* स्वस्येति कर्त्तरि षष्ठी । स्वापेक्षणमिति समासमध्यस्था कर्म्मणि षष्ठी । स्वस्य स्वापेक्षणमात्माश्रय इत्युक्तेऽन्योन्याश्रयादौ प्रसक्तिनिवारणायाव्यवहितेतिविशेषणम् । इदं चात्माश्रयत्वं सत्तायां प्रतीतौ व्यवहारे च, उत्पत्तौ स्वापेक्षा, सत्तायां प्रतीतौ स्वापेक्षा, एवमितरत्रापीत्यर्थः । अन्योन्याश्रयलक्षणमाह * अन्येति * अन्योन्यस्यान्योन्यापेक्षित्वमित्युक्ते चक्रकेऽतिप्रसक्तिनिवारणायाव्यवहितेतिविशेषितम् । व्याख्यानादि पूर्ववत् । चक्रकलक्षणमाह * अन्तरितस्येति * अन्तरितस्य स्वापेक्षणमन्योन्यापेक्षणं चक्रकमित्यर्थः । तदेव द्वयं दर्शयति * आत्माश्रय इति * तदेव च द्वयं चक्रकमित्युक्ते तस्मिन्नेव द्वयेऽति व्याप्तिपरिहारायान्तरितेति विशेषणं द्रष्टव्यम् । व्याघातलक्षणमाह * विरुद्धेति * विरुद्धयोः समुच्चय एकाश्रयासम्बन्धस्तत्र विरुद्धेतिविशेषणं रूपादेरेकार्थसमवायव्यावृत्त्यर्थम् । अनवस्थालक्षणमाह * उपपाद्येति * अनवधिककार्यकारणप्रवाहापत्तिरित्यर्थः । चक्रकव्यावृत्त्यर्थमनवधीतिविशेषणम् । साकाङ्क्षतापरिहारायोपपाद्योपादकेत्युक्तम् । प्रतिबंद्या लक्षणमाह * स्वेति * पार्श्वस्थाभ्युपगतदोषतुल्यतां स्वाभ्युपगतगुणतुल्यतां च निवारयितुं स्वेत्यादिविशेषणम् ।

तेषां तर्काणामाभासान्यतिव्याप्तिस्थलानि दर्शयति ।

१३४ तर्काभासप्रदर्शनम् ।

तत्राऽऽत्माश्रयस्य सम्बन्धद्वारभेदादाभासत्वं, यथा प्रमेयत्वस्यात्मनि वृत्तौ, क्वचिन्नैवमपि यथाऽऽनेकका-लस्थस्य घटस्य पूर्वकालवृत्त्यात्मन उत्तरकालवृ-त्त्यात्मानं प्रति कारणत्वे । अन्योन्याश्रयस्य व्यक्ति-भेदात्, यथा—ज्ञानेन संस्कारस्य तेन च ज्ञानस्य जनने । चक्रकस्यापि तस्मात्, यथा—बीजेनाङ्कुर-स्तेन स्तम्बः तेन बीजं जन्यत इत्यत्र । व्याघातस्योपा-धिभेदात्, यथा—कालभेदादिना . जननाजननादौ । अ-नवस्थायाः क्रियार्थे[1] परस्परानन्त्यानपेक्षणात्, यथा सामग्र्या कार्यजननाय स्वसामग्र्यानन्त्यानपेक्षणे । तामेतामधोधावन्तीमनवस्थामाचक्षते । क्वचिन्नैवमपि[2], यथा—स्वाश्रये भिन्नबुद्धिजननाय स्वगतभेदानुपजीवना-

---

१ क्रियार्थै—कार्यजननाय नहि कार्यं स्वसामग्र्यधीनं साऽपि सामग्री स्वसामग्र्यधीनैव कादाचित्कत्वादिति प्रवाहाभ्युपगमोऽस्ति। किन्त्वैदानीन्तनकार्यं न तावत्सामग्रीप्रवाहाधीनमेव तथाच तदु-त्पत्तिरेव न स्यात् दृश्यते च कार्योत्पत्तिरिति प्रामाणिकीयमनवस्था-नवस्थाभासेति भावः ।

२ अनाभासरूपा मनवस्थामाह * क्वचिदिति * भेदः स्वाश्रये घटे स्व यमेव भेदबुद्धिं जनयति स्वगतं भेदान्तरं नोपजीवतीति तावद्वस्तुग-तेस्तत्र भेदस्याऽऽनन्त्ये आपाद्ये याऽनवस्था साऽनाभासेत्यर्थः । ननु कथमियं दोष इत्यतआह * प्राग्लोपेति * यदि भेदे भेदान्तरमङ्गी-क्रियेत तदा प्रथमभेदो लुप्तएव स्यादित्यर्थः । आदिपदाद्विनिग-मयत्वप्रमाणापगमयोः सङ्ग्रहः । तामेतामित्यनाभासरूपामित्यर्थ इति शङ्करमिश्राः ।

दपि भेदस्यानन्त्ये प्राग्लोपादिदोषात् । तामेतामूर्ध्वं धावन्तीमनवस्थामाचक्षते । प्रतिबन्ध्या विशेषात्, यथा धूमानुमानेऽप्युपाधिशङ्काप्रतिबन्ध्यां तर्कानुकूलत्वादिति । तदेषामापादनानि तर्काभासाः कथमुक्तलक्षणेन न सङ्ग्राह्याः सत्यपि व्याप्याद्यदोषे प्रसङ्गस्थानगतेन तेन विशेषणेनाभासीभूतत्वात् ।

*तत्रेति* सम्बन्ध आश्रयाश्रयिभा(वे)वो द्वारभेदादित्यर्थः । तदेवोदाहरणेन दर्शयति * यथेति * प्रमेयत्वं नाम कश्चिद्धर्मः स स्वात्मनि वर्त्तते स्वस्यापि प्रमेयत्वादत आत्माश्रयत्वप्रसक्तौ घटादौ प्रमेयत्ववृत्तौ घटप्रमासम्बन्धो द्वारं प्रमेयत्वे प्रमेयत्ववृत्तौ प्रमेयत्वविषयप्रमान्तरमिति द्वारभेद इत्यर्थः ।[1] द्वारभेदाभावस्थलं दर्शयति * क्वचिदिति * तत्राप्युदाहरणमाह * यथेति * घटस्तावत् स्थिरत्वादनेककालं तिष्ठति ततश्च[2] तत्कालस्थघट उत्तरकालसम्बन्धिनं स्वात्मानं प्रति कारणीभवति अतो घटस्यैकत्वादात्माश्रयत्वप्रसक्तौ पूर्वोत्तरकालसम्बन्धरूपस्य भेदमादाय तत्परिहृत्तिर्भवतीत्यर्थः । अन्योन्याश्रयाभासं दर्शयति * अन्योन्येति * व्यक्तिभेदादाभासत्वमिति शेषः । एतदप्युदाहरति * यथेति * अनुभवलक्षण-

१ द्वारभेदादिना विशेषेण तेषामाभासत्वस्य त्वयाऽपि वक्तव्यत्वादन्यथा प्रमेयत्वे प्रमेयत्वमनेन दोषेण न भवेदिति केवलान्वयित्वं तस्य न स्यादित्यर्थः । (२) विशेषेणेत्यर्थः ।

ज्ञानेन संस्कारो जायते तेन च स्मृतिज्ञानं जायते ततश्च ज्ञानसंस्कारयोरन्योन्यापेक्षयाऽन्योन्याश्रयप्रसक्तौ यज्ज्ञानशक्त्या यः संस्कारो जायते तेन स्वजनकव्यतिरिक्तज्ञानव्यक्तिर्जायते इति ज्ञानत्वसंस्कारत्वयोरभेदेऽपि न वस्तुतोऽन्योन्याश्रय इत्यर्थः। चक्रकस्यापि व्यक्तिभेदादाभासतेत्याह * चक्रेति * तदप्युदाहरति * यथेति * बीजादङ्कुरं तावज्जायते अङ्कुरात्स्तम्बस्तेन बीजमिति चक्रकप्रसक्तौ प्रथमं शालिबीजेनाङ्कुरो जायते तेन चाङ्कुरेण स्तम्बस्तेन च बीजान्तरमिति व्यक्तिभेद इत्यर्थः। व्याघातस्य पुनरुपाधिभेदादाभासतेत्याह * व्याघातेति * किमिवेत्यपेक्षायामाह * यथेति * वस्तु कदाचित्कार्यं जनयति कदाचिन्न जनयति, क्वचिदस्ति क्वचिन्नास्तीति, व्याघाते प्रसक्त उत्पत्तौ कालदेशादिभेदादाभासत्वमित्यर्थः। अनवस्थाया आभासत्वकारणं दर्शयति * अनवस्थेति * जायमानकार्येण सामग्रीपरम्पराक्षेपादाभासत्वमनवस्थाया इत्यर्थः। तदेव दर्शयति *यथेति* यदा घट उत्पद्यते तदा घटेन तदुत्पत्तिक्रियया वा सामग्र्यपेक्ष्यते सामग्री च कादाचित्कत्वात्स्वसामग्रीमानयति सा च तथेति घटोत्पत्त्यनुपपत्त्या सामग्रीपरम्पराप्रमितेरनवस्थाया आभासत्वमित्यर्थः। प्रसङ्गादनवस्थाभेदमाह * तामेतामिति * उत्तरं कार्यं जनयितुं पूर्वसामग्र्यपेक्ष्यते तत्सिद्धये ततः पूर्वेत्यधोमुखीत्यर्थः। क्वचित्प्रकारान्तरेणानवस्थाया आभासतेत्याह * क्वचिदिति * तत्रोदा-

हरणमाह * यथेति * घटपटयोर्भेदः स्वाश्रये भेदबुद्धिं जनयन्स्वस्य स्वाश्रयाद्भेदमपेक्षते चेत्तद्भेदानामपि भेदान्तरभेद्यत्वेऽनवस्था, भेदभेदिनोर्भेदानुपजीवनेन भेदानन्त्यस्वीकारे प्राग्लोपादिदोषादाभासतेति यावत् । अनाभासाऽनवस्थोच्यते इतिकेचित् । एषोर्द्धमुख्यनवस्थेत्याह *तामिति* अनुकूलतर्कसद्भावे विशेषेणाभासत्वं प्रतिबन्ध्या इत्याह * प्रतीति * उदाहरति * यथेति * अनित्यः शब्दः कृतकत्वादित्यत्रोपाधिः शङ्क्यत इति [1]प्रतिबन्दीग्रहे धूमानुमाने तर्कस्य सद्भावादाभासत्वमित्यर्थः । एतेषु तर्काभासेष्वारोपितव्याप्येन व्यापकप्रसञ्जनसम्भवात्स्यालक्षणस्यातिव्याप्तिरित्युपसंहरति * तदिति * आपादनान्यापत्तिरूपज्ञानानीत्यर्थः । यद्वस्तु न तत्स्वाश्रयं न परस्परापत्तिसिद्धिकं चेत्यादिव्याप्तिसद्भावसाम्ये कथमेतेषामाभासत्वमित्याशङ्क्य द्वारभेदादिलक्षणविशेषान्तरादित्याह * सतीति *

आभासत्वप्रयोजकविशेषाणामभावे सत्यारोपितव्याप्येन व्यापकप्रसञ्जनं तर्क इति लक्षणविशेषणान्नोक्तातिव्याप्तिरिति शङ्कते ।

१३५ विशेषणे दत्तेपि दोषः ।

प्रसङ्गस्थाने तावतां विशेषाणामभावेनाऽपि लक्षणं विशेषणीयमिति चेन्न । अन्योन्याश्रयाभासत्वप्रयोजकस्य व्यक्तिभेदस्याभावो नानवस्थाया,मेवमात्माश्रयाभास-

---

1 इति धूमाने प्रतिबन्दीग्रहे इति योजना ।

त्त्वप्रयोजकस्य द्वारभेदस्याभावो नात्माश्रयान्तरादाविति व्यक्तमव्यापकत्वापत्तेः। अपि चापसिद्धान्तविरोधादिष्वपि तर्कलक्षणं गच्छत्कथङ्कारं वारणीयं, यत्रैवं निग्रहे तर्कान्तराणामन्तर्भावः तत्रैवानयोरपीति पृथक् निग्रहत्वानुपपत्तेः।

* प्रसङ्गेति * सर्वविशेषाभावस्यैकस्मिन्नसम्भवेना,तिव्याप्तिप्रसङ्गादेवैकैकविशेषाभावस्य विशेषणत्वे चोक्तदोषापरिहारान्मैवमिति परिहरति * नेति * आत्माश्रयान्तरादिशब्देनान्योन्याश्रयचक्रकगतावात्माश्रयान्योन्याश्रयौ लक्ष्येते। व्यक्तिभेदाद्येकैकाभावोऽनवस्थादिसत्तर्के चास्तीत्यव्याप्तिः सर्वविशेषस्याभासेपि विद्यमानत्वादतिव्याप्तिरित्यभिप्रायः। संस्कारस्थायित्वं चेत्सौगतेनाभ्युपगतं तर्हि तस्यापसिद्धान्तः, प्रामाणिकमपि मिथ्याऽभ्युपगम्यते चेद्वचनविरोध इत्यादिनिग्रहस्थानेष्वप्यारोपितव्याप्त्येन व्यापकप्रसञ्जनमस्तीत्यतिव्याप्तिरित्याह * अपिचेति * तयोरपि तर्कत्वमङ्गीक्रियते तत्कथमतिव्याप्तिरित्यत आह * यत्रेति * तयोस्त-

१ अन्योन्याश्रयादीनां व्याप्त्यादिग्रहं प्रति प्रतिबन्धकतया व्याप्यत्वासिद्ध्यादिनिग्रहेऽन्तर्भाव इति तदपेक्षयाऽपसिद्धान्तस्य पृथक्त्वनिग्रहत्वं भज्यते भवति हि भेदव्यवहारविषयत्वात् घटो भेदवानिति स्थापनायां भेदेऽपि भेदव्यवहारस्तेनैव भेदेन चेदात्माश्रयोऽन्योन्यापेक्षायामन्योन्याश्रयः व्यवहितान्योन्यापेक्षायां चक्रकमनन्तप्रवाहापेक्षयामनवस्थेत्यापादनैर्भेदाभाववति भेदे भेदव्यवहारविषयत्वं गतमित्यनेन व्याप्यत्वासिद्धिनिग्रहस्थानेऽन्तर्भावितमित्यर्थः।

र्कत्वे निग्रहस्थानविभागे परिगणनं न स्यात्तर्कनिग्रहयोर्भेदादथ तर्कनिग्रहयोर्भेदो नाङ्गीक्रियते तर्हि आत्माश्रयादितर्काणां यस्मिन्निग्रहेऽन्तर्भावस्तत्रैव विरोधात्तयोरन्तर्भावइति तयोः पृथङ्निग्रहत्वेन ग्रहणन्न स्यादस्ति च तत् ततोऽतिव्याप्तितादवस्थ्यमित्यर्थः ।

एवमात्माश्रयादेः सत्तर्कत्वमुपेत्य तदाभासेषु लक्षणातिव्याप्तिरुक्ता, सम्प्रति परस्य तदपि दुर्वचनमित्याह ।

१३८ आत्माश्रयादेरनिर्वचनीयत्वम् ।

आत्माश्रयादेश्च मूलव्याप्तौ प्रमाणोपगमश्चेत्तर्हि प्रामाणिकत्वान्नदोषत्वं न चेन्मूलशैथिल्यमित्युभयतःपाशबन्धः कथं मोचनीयः । अथोच्येत यदेतदाश्रयत्त्वमाश्रयित्त्वं च तद्भेदे दृष्टं तद्यदि विवादाध्यासिते त्वयोपेयते तदा भेदः स्यादित्याकारेणाऽऽपादने नोक्तदोषापत्तिरिति । नैवम् । एकत्र द्वयस्यापि दृष्टत्वात् । तदाश्रयत्वं तदाश्रितत्वं च मिथो भेदनियतमिति चेन्न । तन्मिथः—शङ्काभ्यां क्षारीकृतत्वात् ।

* आत्मेति * आत्माश्रयादेस्तर्कस्य मूलं व्याप्ति-

१ यदि स्वस्य स्वापेक्षित्वं स्यात्तदाऽऽत्माश्रयः स्यादित्यापादनप्रकारो नेह येन तस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पोऽवतरेत् अपितु यद्ययं घट एतद्घटाश्रयः स्यादेतद्घटकारणं वा स्यादेतद्घटकार्यो वा स्यात्तदैतद्घटभिन्नः स्यादित्याद्यापादनप्रकारे कथमप्रामाणिकत्वमित्याशङ्कते—यदेतदिति ।

स्तत्र प्रमाणमस्ति न वा, यद्यस्ति तर्हि व्याप्तिप्रमाणेनैव व्याप्यव्यापकयोरपि ग्रहणादविरोधेनादूषणत्वमित्यर्थः। द्वितीयं प्रत्याह * नचेदिति * प्रशिथिलमूलतया तर्काभासत्वमित्यर्थः। प्रमितत्वेऽप्येकस्यैव भेदापादकत्वात्स्यादेव दोषत्वमिति शङ्कते * अथेति * आश्रयत्वाश्रितत्वयोर्भिन्नाधिकरणत्वेऽपि प्रस्तुते किं स्यादित्यत आह * तदेति * प्रतियोगिभेदेनाश्रितत्वाश्रयत्वयोरेकस्मिन्नेव दर्शनाददोषत्वमिति परिहरति * नैवमिति * घटो रूपाद्याश्रयो मृदाश्रित इति द्वयस्यैकत्र दर्शनादित्यर्थः। एकप्रतियोगिकयोराश्रयत्वाश्रितत्वयोर्भेदापादकत्वादस्त्येव दोषत्वमिति शङ्कते * तदाश्रयेति * घटो मृदपेक्षयाऽऽश्रितो घटापेक्षया च मृदाश्रय इति भेदनियम इत्यर्थः। दूषयति * नेति * तच्छब्दस्यानुगताभिधानत्वे भेदापादकत्वं तच्छब्दार्थस्यैव वस्तुन उभयत्वदर्शनाद्विशेषाभिधानत्वेऽननुगमादव्याप्त्यभाव एव, मिथःशब्दस्याऽपि परस्परमात्राभिधानत्वे इष्टापत्तिर्घटपटादिपरस्परस्य भेदस्वीकाराद्विशेषाभिधानेऽननुगम इत्यर्थः।

प्रकारान्तरेणात्माश्रयत्वस्य दोषत्वं शङ्कते।

१३७ अन्यथाऽऽत्माश्रयत्वस्य दोषत्वशङ्कानिरासः।

एतदाश्रयत्वादेतदाश्रितत्वाद्वा नैकत्वं स्यादिति वचनभङ्ग्याऽऽपाद्यमिति चेन्नैवम्। यद्येतदेतदाश्रयादि स्यात्तदैतन्न स्यादिति ह्यापाद्यं, नचैतद्युक्तं धर्म्याऽऽपाद्ययो र्व्याहतत्वात्। नच व्याप्यमापाद्यस्य प्रमाणबाध्यताऽनु

